स जीवन्नेव सुकृती स्वकृतेरतुलं फलम् ।
विलोक्य सफलं मेने नरजन्म सुदुर्लभम् ॥५५॥
आमेरिकास्थायूरोपवासिनोऽशेषपण्डिताः ।
शब्दकल्पद्रुमं दृष्ट्वा ययुः परमविस्मयम् ॥५६॥
धीरेन्द्राश्च नरेन्द्राश्च ये चकासन् तदा भुवि ।
तमभ्यवर्षन् सम्मानैर्मेघाः शस्यमिवाऽम्बुभिः ॥५७॥

वङ्गभूर्भुवने धन्या शब्दकल्पद्रुमेण या ।
कल्पद्रुमवतीं नित्यं स्पर्द्धते ह्यमरावतीम् ॥५८॥
स शब्दकल्पद्रुमकृद् यत्र जज्ञे तमालयम् ।
शोभाबाजारभूपानां सन्तस्तीर्थं प्रचक्षते ॥५९॥
साधारणोपकाराय मेलनं देशवासिनाम् ।
विदुषां सङ्गमो वाऽपि तत्रैवाऽद्याऽपि जायते ॥६०॥
महावङ्गसमाजस्य तद्वंशोऽद्यापि कीर्त्यते ।
अविसंवादितं सर्व्वैश्चूडामणिरिति क्षितौ ॥६१॥
एवं प्रतिष्ठां गमयन् स्ववंशं यशसा नृपः ।
अगण्यपुण्यैर्धन्योऽसौ पुण्यलोकमुपेयिवान् ॥६२॥

गते बहुतिथे कालेऽकारि कोषेऽत्र दुर्लभे ।
वरदाकान्तमित्राद्यैः पुनर्मुद्राङ्कने यत्नः ॥६३॥
मुद्रां नीतेऽथाऽविकले शब्दकल्पद्रुमे च तैः ।
अचिरेणैव पुस्तानि तानि निःशेषतां ययुः ॥६४॥
पुनरेवाऽस्य दौर्लभ्यमुपलभ्याऽत्यदुर्लभान् ।
गुणाशाऽजनि नचिरे पुनर्मुद्राङ्कने यत्नः ॥६५॥
ततः स्वत्वाधिकारिभ्यः क्रीत्वा स्वत्वं यथाविधि ।
प्रवृत्ता दुष्करे कार्य्ये वयं सत्कार्य्यगौरवात् ॥६६॥

वङ्गाक्षरैरितः पूर्व्वं कोष एष प्रकाशितः ।
तेनाऽसौ सुखपाठ्योऽभूत् केवलं वङ्गवासिनाम् ॥६७॥
नागरी वर्णमाला तु संस्कृतैकोपयोगिनी ।
सर्व्वत्राद्रियते प्रायः सर्व्वैः संस्कृतपाठिभिः ॥६८॥
सर्व्वेषां बोधसौकर्य्यमतोऽस्माभिर्विधित्सुभिः ।
प्रशस्तैर्नागरैर्वर्णैरेष कोषः प्रकाश्यते ॥६९॥

शब्दकल्पद्रुमं कोषं प्रणिनाय यदा नृपः ।
संस्कृतं प्रचरद्रूपं नाऽधुनेव तदाऽभवत् ॥७०॥
तदा प्रयोजनाभावात् स्वकोषे तेन भूभुजा ।
सर्व्वेषामेव शब्दानां व्युत्पत्तिर्नैव दर्शिता ॥७१॥
जन्मभूमिं प्रति प्रेम्णा तेनोपादानलिप्सुना ।
अस्योपादानसामग्री स्वदेशाद् भूयसाहृता ॥७२॥
मुग्धबोधं व्याकरणं वङ्गदेशस्य गौरवम् ।
तन्मतेन ततस्तेन शब्दव्युत्पत्तयः कृताः ॥७३॥
पाणिनीयं व्याकरणं प्रायः संस्कृतपाठिभिः ।
सयत्नं सेव्यते सर्व्वैश्चिरमाद्रियते च तत् ॥७४॥
दिने दिने नृणां यावत् संस्कृते भक्तिरेधते ।
पाणिनीयस्य माहात्म्यं तावदेवोपचीयते ॥७५॥
अनुसृत्य ततोऽस्माभिः पाणिनीयानुशासनम् ।
सर्व्वेषामेव शब्दानां व्युत्पत्तिः परिदर्श्यते ॥७६॥

प्रततीर्थाश्रमसरिद्देशारण्यमहीभृताम् ।
सिद्धदेवर्षिभूपालशास्त्रशास्त्रकृतां तथा ॥७७॥
कलादर्शनविज्ञानज्योतिषां च नवं नवम् ।
अधुनाविष्कृतं तत्त्वं धन्यैः पाश्चात्त्यसूरिभिः ॥७८॥
अदृष्टपूर्व्वाः शब्दार्थाः प्रमाणानि बहूनि च ।
इदानीं ग्रन्थविस्ताराद् यान्ति दृष्टिपथं विदाम् ॥७९॥
मूलातिरिक्तं तत् सर्व्वं मूलेऽस्माभिर्निवेश्यते ।
वेष्टनाकारचिह्नान्तर्व्यवच्छेदचिकीर्षया ॥८०॥
अनुचिन्त्य द्वयोरेव पक्षयोः सुखसाध्यताम् ।
अस्माकं ग्राहकाणां च अक्षयोऽयं प्रकाश्यते ॥८१॥

परिशिष्टे वक्तव्या विषयाः ।

परिशिष्टद्वयं चैव कोषस्याऽस्य विधीयते ।
एकं धात्वादिसम्बन्धि शब्दसम्बन्धि चाऽपरम् ॥८२॥

प्रथमपरिशिष्टे वक्तव्या विषयाः ।

धातु-धात्वर्थ-रूपाणि लकाराद्याः पृथक् पृथक् ।
अनुबन्धाश्च धातूनां गणवाच्यभिदास्तथा ॥८३॥

कृत्तद्धितसमासानां लिङ्गानां विवृतिस्तथा ।
प्रथमे परिशिष्टेऽस्य सर्व्वमेतन्निवेश्यते ॥८४॥

द्वितीयपरिशिष्टे वक्तव्या विषयाः ।
लौकिका बहवः शब्दा वैदिकाश्च विशेषतः ।
ग्रन्थप्रचारविरहादन्धकारइव स्थिताः ॥८५॥

पाश्चात्यविदुषां ज्ञानापूर्व्वालोकेन तेऽधुना ।
दिने दिने प्रकाश्यन्ते चार्य्यकीर्त्तिं वितन्वते ॥८६॥

सार्थप्रमाणास्ते सर्व्वे परिशिष्टे द्वितीयके ।
दीयन्ते बुधसाहाय्यान्निजशक्त्यनुसारतः ॥८७॥

कोषेऽस्मिन् यानि शास्त्राणि प्रमाणायोद्धृतानि च ।
मूलातिरिक्ताः शब्दा वै बहवः सन्ति तेष्वपि ॥८८॥

तेऽपि सर्व्वेऽत्र दीयन्ते यथाऽभावोऽस्ति यत्र च ।
यथाज्ञानं यथास्थानं सोऽप्यस्माभिर्निरस्यते ॥८९॥

शब्दाब्धेस्तु परं पारं न जानाति सरस्वती ।
अगाधं चाऽप्रमेयं तं को वा निर्व्वक्तुमीश्वरः ॥९०॥

स्वशक्तिकाष्ठामाश्रित्य तथाप्यस्मादृशैर्जनैः ।
परिशिष्टस्य सम्पूर्त्तौ प्रयत्नोऽस्य विधीयते ॥९१॥

इयेष मुद्राङ्कयितुं स राजा नागराक्षरैः ।
पुनरेव स्वकं कोषं सर्व्वभोगविधित्सया ॥९२॥

परिशिष्टं च विस्तीर्णं वेदशब्दार्थबोधकम् ।
निर्म्माणे सोऽस्य कोषस्य महान्तं यत्नमास्थितः ॥९३॥

दुर्व्विपाकात्तु दैवस्य हस्तलेखाश्च तेऽखिलाः ।
कीटैः कवलिता हन्त ! नाशमापुरशेषतः ॥९४॥

चकमे च महात्माऽसौ सकाशात् परवर्त्तिनाम् ।
संस्कृतज्ञानविस्तारेणाऽस्य संस्करणं पुनः ॥९५॥

अतो वयं संप्रवृत्ता अस्मिन् संस्करणे नवे ।
पुण्यश्लोकस्य तस्यैव भूपस्येच्छानुसारतः ॥९६॥

शब्दकल्पद्रुमस्रष्टुः कुलात् तस्यैव भूभृतः ।
पदे पदेऽत्र साहाय्यं कार्य्येऽस्माभिरवाप्यते ॥९७॥

देवदेव ! महादेव ! रक्ष रक्ष चिरं विभो ! ।
वंशावलीं तस्य राज्ञो धारां भागीरथीमिव ॥९८॥

हे विश्ववासिनः सर्व्वे सन्तो विद्यानुरागिणः ! ।
सहाया नो भवन्त्वस्मिन् भवन्तो ज्ञानगौरवात् ॥९९॥

करुणाकणया यस्य नरस्तरति दुस्तरम् ।
सिद्धिदाता स भगवान् नः पूरयतु काङ्क्षितम् ॥१००॥

भक्तिमात्रसहायानां हीनानां साधनान्तरैः ।
भक्तवाञ्छाप्रदो देवो वाञ्छितं प्रददातु नः ॥१०१॥

कलिकाता ।
७१, पाथुरियाघाटा ष्ट्रीट् ।
शकाब्दाः १८०८ ।

श्रीवरदाप्रसाद वसोः
तदनुजस्य च
श्रीहरिचरण वसोः ।

माघस्याद्याष्टमी कृष्णा तथाषाढ़स्य पूर्णिमा ।
कार्त्तिकी फाल्गुनी चैत्री ज्यैष्ठी पञ्चदशी सिता ॥
मन्वन्तरादयश्चैता दत्तस्याक्षयकारिकाः" ।
अत्र अमावास्याष्टमीव्यतिरिक्ताः शुक्लाः पुनः-
पुनस्तथापदोपादानाविरोधाताम् । उपक्रमोपसंहा-
रयोः शुक्लत्वोपलम्भाच्च ॥ अत्र कार्त्तिकी तृतीया
चैव माघस्येति । कल्पतरौ तु तृतीया चैत्रमास-
स्येति लिखितं । अत्र मात्स्ये भविष्ये च "वैशाखस्य
तृतीया । "नभस्यस्य तु कृष्णाष्टमी माघपूर्व्वे नभसि
तृतीया च" । इति पाठाच्चैत्रतृतीयैव ग्राह्या ।
भीष्मोऽप्येवं । माघसप्तम्याखाद्यार्घ्यं सौरागमेऽपि ।
"अर्कपत्रैः सबदरैर्दूर्व्वाक्षतसचन्दनैः ।
अष्टाङ्गविधिना चार्घ्यं दद्यादादित्यतुष्टये ।
माघस्य फाल्गुने वापि भवेद्दै माघसप्तमी ।
माकरीति च याप्योक्ता सर्व्वपापप्रणाशनात्" ॥
अष्टाङ्गविधिना ।
"जोऽष्टाङ्गमर्घ्यमापूर्य्य मार्गोर्मूर्द्धि निवेदयेत् ।
ताम्रपात्रार्घ्यदानेन पुण्यं दशगुणं स्मृतं" ॥
इति भविष्यपुराणीयेन । आदित्यपुराणे ।
"अष्टाराशिविशेषेण यत्कर्म्म विहितं नरैः ।
दैवं वाप्यथवा पैत्र्यं तदस्यथापि दृश्यते" ॥ * ॥
अर्घ्यमन्त्रस्तु ।
"जननी सर्व्वभूतानां सप्तमी सप्तसप्तिके ।
सप्तव्याहृतिके देवि ! नमस्ते रविमण्डले" ॥
प्रणाममन्त्रस्तु ।
"सप्तसप्तिवहप्रीत सप्तलोकप्रदीपन ।
सप्तम्यां हि नमस्तुभ्यं नमोऽनन्ताय वेधसे" ॥
सप्तिरश्वः । इति तिथ्यादितत्त्वं ॥

अरुणोपलः, पुं, (अरुणः उपलः, कर्म्मधारयः ।) रक्तवर्णमणिविशेषः । चुनी इति भाषा । तत्प-र्य्यायः । पद्मरागः २ लोहितकः ३ लक्ष्मीपुष्पः ४ । इति हेमचन्द्रः ॥

अरुन्तुदः, त्रि, (अरुंषि मर्म्माणि तुदति, तुद् + खश् + मुम् च ।) मर्म्मपीड़कः । तत्पर्य्यायः । मर्म्मस्पृक् २ । इत्यमरः ॥ (प्रवलः । कठोरः । अवणकटुः । "माकन्दं मकरन्दतुन्दिलमलं गा-हस्व काकः स्वयं कर्णारुन्तुदमन्तरेण रणितं त्वां मन्महे कोकिलं" । इति भामिनीविलासे । मर्म्मपीड़ाकरः । हृदयग्रन्थिरूपमर्म्मस्थानस्पर्श-कारी । यथा,
"नारुन्तुदः स्यादार्त्तोऽपि न परद्रोहकर्म्मधीः" ।
इति मनुः ।
"तीक्ष्णा नारुन्तुदा बुद्धिः कर्म्म शान्तं प्रतापवत्" ।
इति माघः ।
"अरुन्तुदमिवालानमनिर्व्वाणस्य दन्तिनः" ।
इति रघुवंशे ।)

अरुन्धती, स्त्री, (न रुन्धती ।) वशिष्ठपत्नी । तत्प-र्य्यायः । अक्षमाला २ । इति हेमचन्द्रः ॥ सा कर्द्दममुनिकन्या महासाध्वी । इति श्रीभागवतं ॥ आकाशे सप्तर्षिमध्ये वशिष्ठसन्निधौ तस्या उदयः । गतायुषस्तां न पश्यन्ति । (यदुक्तं,—
"दीपनिर्व्वाणगन्धञ्च सुहृद्वाक्यमरुन्धतीं ।
न जिघ्रन्ति न शृण्वन्ति न पश्यन्ति गतायुषः" ॥
यथा च सुश्रुते,—
"न पश्यति स नक्षत्रं यश्च देवीमरुन्धतीं ।
ध्रुवमाकाशगङ्गां वा तं वदन्ति गतायुषं" ॥)
सप्तपदीगमनानन्तरं जामाता मन्त्रं पाठयन् वधूं तां दर्शयति च ॥

अरुन्धतीजानिः, पुं, (अरुन्धती जाया यस्य सः, निङ् ।) वशिष्ठमुनिः । इति हेमचन्द्रः ॥

अरुन्धतीनाथः, पुं, (अरुन्धत्या नाथः, षष्ठीतत्-पुरुषः ।) वशिष्ठमुनिः । इति त्रिकाण्डशेषः ॥

अरुष्कः, पुं, (अरुर्मर्म्मस्थानं कायति पीड़यति, कै + क ।) भल्लातकवृक्षः । इति शब्दरत्नावली ॥

अरुष्करं, स्त्री, (अरुः करोति अरुः + कृ + ट, उप-पदसमासः षत्वं ।) भल्लातकफलं । इति हेम-चन्द्रः ॥

अरुष्करः, पुं, (अरुः करोति, अरुः + कृ + ट, षत्वं उपपदसमासः ।) भल्लातकवृक्षः । इति शब्द-रत्नावली ॥

अरुष्करः, त्रि, ( अरुः करोति, अरुः + कृ + ट, षत्वं, उपपदसमासः ।) व्रणकारः । क्षतकारकः । इति मेदिनी ॥

अरुहा, स्त्री, ( रोहति, रुह + क, नञ्समासः । ) भूम्यामली । इति राजनिर्घण्टः ॥ भुंइ आमला इति ख्याता ।

अरूपः, त्रि, (नास्ति रूपमस्य ।) रूपशून्यः । यथा । "अरूपवाताङ्गीसारादाविवारूपं" । इति रक्षितः ॥ कुत्सितरूपः ।
("इमामरूपामसतीं भक्षयिष्यामि मानुषीम्" ।
इति रामायणे ।)

अरूषः, पुं, (ऋ + ऊषन् ।) सर्पविशेषः । इत्युणादि-कोषः ॥ सूर्य्यः । इति सिद्धान्तकौमुद्यामुणादि-वृत्तिः ॥

अरे, व्य, (ऋ + ए ।) नीचसम्बोधनं । इति हेम-चन्द्रः ॥ ओरे इति भाषा । अपाकृतिः । असूया । इति मेदिनी ॥ (रोषाह्वाने । अपकृतौ । "अरे चेतोमीन ! भ्रमणमधुना यौवनजले त्यज त्वं स्वच्छन्दं युवतिजलधौ पश्यसि न किम्" । इति शान्तिशतके । "अरे अनुगृन ! निरपराधराज-कुलकदन महापातकिन् अशिष्टविश्लथचेष्ट !" इति महावीरचरिते ।)

अरेरे, व्य, (अरे + वीप्सायां द्विरुक्तिः ।) अधम-सम्बोधनं । इति जटाधरः ॥ सक्रोधाह्वानं । इति शब्दमाला ॥

अरोकः, त्रि, (रुच् + घञ्, नञ्समासः ।) निष्प्रभः । दीप्तिरहितः । इत्यमरः ॥ रोकश्छिद्रन्तद्रहितश्च ॥

अरोचकः, पुं, ( न रोचयति प्रीणयति, रुच् + णिच् + ण्वुल्, नञ्समासः ।) रोगविशेषः । अरुचिरोग इति भाषा । तस्य निदानरूपे ।
"वातादिभिः शोकभयातिलोभ-
क्रोधैर्मनोघ्नाशनरूपगन्धैः ।
अरोचकाः स्युः परिहृष्टदन्तः
कषायवक्त्रोऽस्य मतोऽनिलेन ॥
कट्वम्लमुष्णं विरसञ्च पूति
पित्तेन विद्याल्लवणञ्च वक्त्रं ।
माधुर्य्यपैच्छिल्यगुरुत्वशैत्य-
विबद्धसम्बद्धयुतं कफेन" ॥ इति माधवकरः ॥
अरोचकाः न भोजने अभिरुचिर्भवन्तीत्यरोचकाः व्याधयः पञ्च वातादिभेदैः ॥ * ॥ वातिकस्य ल-क्षणमाह । परिहृष्टदन्तः अम्लरसभक्षणेनेव परि-हृष्टो दन्तो यस्य सः । तथा कषायवक्त्रः । कषाय-रसं वक्त्रं यस्य सः ॥ * ॥ पैत्तिकमाह ।
"कट्वम्लमुष्णं विरसञ्च पूति
पित्तेन विद्याल्लवणञ्च वक्त्रं" ।
कट्वम्लमित्यादिना विद्यादित्यन्तेन पैत्तिकस्य ल-क्षणं ॥ * ॥ श्लैष्मिकमाह । लवणञ्च वक्त्रं कफज-लक्षणेन पठनीयः । यतो विदग्धः श्लेष्मा लवण-मापद्यते इति ।
"माधुर्य्यपैच्छिल्यगुरुत्वशैत्य-
विबद्धसम्बद्धयुतं कफेन" ।
पैच्छिल्यं मुखस्याभ्यन्तरे । विबद्धत्वं बहिः ॥ * ॥
आगन्तुजमाह ।
"अरोचके शोकभयातिलोभात्
क्रोधाद्यहृद्याशुचिगन्धजे स्यात् ।
स्वाभाविकं चास्यमथारुचिञ्च
त्रिदोषजे नैकरसञ्च वक्त्रं" ॥
क्रोधादित्यादिशब्देनाहृद्ययोरशुचिरूपयोर्ग्रहणं ।
स्वाभाविकं । अविकृतरसं ॥ * ॥ त्रिदोषजमाह ।
नैकरसं अनेकरसमास्यं स्यात् । वातादिभेदेन मुखे विकृतिमभिधायान्यदेशे विकृतिमाह ।
"हृच्छूलपीड़नयुतं पवनेन पित्तात्
तृड्दाहचोषबहुलं सकफप्रसेकं ।
श्लेष्मात्मकं बहुरुजं बहुभिश्च विद्यात्
वैगुण्यमोहजड़ताभिरथापरञ्च" ॥
हृच्छूलपीड़नयुतं हृदि शूलेन पीड़नं तेन युतं ।
चोषः पार्श्वस्थिताग्निनेव सन्तापः । बहुभिस्त्रिभि-र्दोषैः । बहुरुजं उरुवातादिरोगयुक्तं । वैगुण्यं मनसो व्याकुलत्वं । जड़ता शून्याङ्गता । अपरं आगन्तुजं । भक्तद्वेषाभक्तच्छन्दौ चरकसुश्रुताभ्या-मरोचकत्वेनैव संगृहीतौ ॥ * ॥ तद्भोजनद्वेषौ लक्षणानि पृथगाह ।
"प्रक्षिप्तन्तु मुखे चान्नं यत्र नास्वादते नरः ।
अरोचकः स विज्ञेयो भक्तद्वेषमतः शृणु" ॥
आस्वादते अन्नस्य मिष्टतां न प्राप्नोति । तदन्नं मिष्टं न जानाति इति यावत् ।
"चिन्तयित्वा तु मनसा दृष्ट्वा स्पृष्ट्वा च भोजनं ।
द्वेषमायाति योऽन्नस्य भक्तद्वेषः स उच्यते ॥
क्षुधितस्य भयार्त्तस्य तथा भक्तनिरोधतः ।
यत्र नान्ने भवेच्छ्रद्धः सोऽभक्तच्छन्द उच्यते" ॥ * ॥
अथारोचकस्य चिकित्सा ।
"भोजनाग्रे सदा पथ्यं लवणार्द्रकभक्षणं ।
रोचनं दीपनं वह्नेर्जिह्वाकण्ठविशोधनं ॥ १ ॥
शृङ्गवेररसञ्चापि मधुना सह योजयेत् ।
अरुचिश्वासकासघ्नं प्रतिश्यायकफापहं ॥ २ ॥
पञ्चाग्निका सिता शीतवारिणा वस्त्रगालिता ।

श्वेतपुष्पः सदापुष्पः स बालार्कः प्रतापनः ॥
रक्तोऽपरोऽर्कनामा स्यादर्कपर्णो विकीरणः ।
रक्तपुष्पः शुक्लफलस्तथास्फोतः प्रकीर्त्तितः ॥
अर्कद्वयं सरं वातकुष्ठकण्डूविषव्रणान् ।
निहन्ति प्लीहगुल्मार्शःश्लेष्मोदरशकृत्कृमीन् ॥
अलर्ककुसुमं वृष्यं लघु दीपनपाचनं ।
अरोचकप्रसेकार्शःकासश्वासनिवारणं ॥

रक्तार्कपुष्पं मधुरं सतिक्तं
कुष्ठक्रिमिघ्नं कफनाशनञ्च ।
अर्शो विषं हन्ति च रक्तपित्तं
संग्राहि गुल्मे श्वयथौ हितं तत् ॥

क्षीरमर्कस्य तिक्तोष्णं स्निग्धं सलवणं लघु ।
कुष्ठगुल्मोदरहरं श्रेष्ठमेतद्विरेचनं" ॥
इति भावप्रकाशः ॥ * ॥ निर्यासविशेषः । आरक इति आरकीभाषा । तस्य विधिर्यथा,—
"द्रव्यकल्पः पञ्चधा स्यात् कल्कचूर्णौ रसस्तथा ।
तैलमर्कः क्रमाज्ज्ञेयं यथोत्तरगुणं प्रिये ॥
पृथक् द्वन्द्वे सन्निपाते वक्ष्येऽर्काख्यरोगिणि ।
क्रमादेते प्रयोक्तव्या अन्यथा तु विनाशकाः ॥
आद्ये गुरुर्गुणाः सर्व्वे द्वितीयश्च ततो लघु ।
तृतीयं शीघ्रकारि स्यात् चतुर्थं गतिदोषकृत् ॥
पञ्चमं दोषरहितं गुणसम्प्रकाशकं ।
पञ्चमस्य तु सामर्थ्यं स्वयं पञ्चाननोऽब्रवीत् ।
वर्णितान्तु सहस्राणि कथ्यतेऽहर्निशं मया ।
सम्पूर्णो नैव जायेत कल्पोऽर्कस्य दशानन ॥ * ॥
पुंवारे पुष्यर्क्षे च दिवार्को यत्र निर्म्मितः ॥
रमणीषु प्रदातव्यो विलोमात् पुंसु योजयेत् ॥
लोहचूर्णं गैरिकञ्च खटिका श्वेतमृत्तिका ।
मृत्तिकास्थिभवं चूर्णं काचं कौलालजं रजः ॥
एतानि समभागानि सर्व्वतुल्या च मृत्तिका ।
संमर्दनीया पञ्चमूत्रैः खराश्वमहिषोद्भवैः ॥
गजाजसम्भवाभ्याञ्च घटितं तद्विशोषयेत् ।
यथा गन्धविनाशः स्यात् तथा संमर्दयेत्ततः ॥
मधुस्थः कुलालोऽस्य कुर्य्याद्यन्त्रं सुनिर्म्मलं ।
यथेष्टां स्थालिकां कुर्य्यात् षडङ्गुलप्रान्तसारिकां ॥
पृथुबुध्नोदराकारां द्व्यङ्गुलोत्सेधवेष्टनीं ।
सारिकान्ते तु परिधिं त्र्यङ्गुलोत्सेधशोभितां ॥
विनिर्म्मायाथ सार्थ्यन्ते यथा शिल्पविनिर्म्मितां ।
छिद्रं कृत्वा नलं दद्यादृजुसूक्ष्मसमं बुधः ॥
सारिकापरिधेरन्तस्तस्य कुर्य्यात् पिधानकं ।
अर्द्धनिम्बफलसमं परिधिं तस्य चान्ततः ॥
वेदाङ्गुलं मस्तकोर्द्धे कार्य्यं तोयस्य धारणे ।
समर्थां तत्र नलिकां कुर्य्यात्तोयविमोचनीं ॥
तस्यैवाभ्यन्तरे लेप्या शीर्णास्थिमृत्तिकाम्बुना ।
अथवा श्वेतकाचं तु सर्व्वदोषापनुत्तये ॥ * ॥
अथ वक्ष्ये तु शीर्णास्थिमृत्तिकाकरणं प्रिये ।
शिलाजतुस्थले कुर्य्यात् दीर्घगर्त्तं मनोहरं ॥
निक्षिपेत्तत्र नानास्थिसञ्चयं द्विचतुष्पदां ।
सन्निचारं मत्स्याहारं मस्त्वारं चर्म्माणि च ॥
गव्यशौचजलं क्षेप्यं नानामूत्राणि तत्र वै ।
एवं कृत्वा मासषट्कं दद्यात् पाषाणमृत्तिकां ॥
काष्ठाच्छाद्य तदूर्द्धन्तु कुर्य्याद्वह्निदीप्तिकां शुभां ।

विवर्णश्चायते सर्व्वमेकीभूतं चूर्णवत् ॥
ततो निष्काश्य तच्चूर्णं कृत्वा पात्राणि निर्म्मिमेत् ।
प्रथमं भोजनं तत्र चूर्णपेषणमद्भुतं ॥
मद्यादिकस्य संयोगात्तस्य भङ्गं प्रजायते ।
चूर्णविषादिसंयोगात् यत्र स्फोटा भवन्ति च ॥
तत्र छिन्नं कुरुविन्दं पात्रं कार्य्यं प्रजायते ।
एवं ज्ञात्वा तत्र दद्यात् नवसारविषादिकं ॥
विषादीनामर्कसिद्धौ कुर्य्यात् पात्रन्तु लोहजं ।
सुवर्णं रौप्यकं वापि कुर्य्यात् पात्रमकल्मषं ॥
अथवा ताम्रजं कुर्य्याद्वस्त्रपङ्कविलेपितं ।
पात्रन्तु मृण्मयं कुर्व्वीत कषायो न भवेद्यतः ॥
द्रव्यान्तरस्य संयोगादर्के तैलञ्च गर्भतः ।
सर्व्वेषां निःसरत्येव पाषाणस्यापि किं पुनः ॥
अश्मार्कस्तथा तैलं गन्धकादिकसम्भवं ।
वेधकं सर्व्वधातूनां देहस्यापि च सिद्धिदं ॥
पञ्चैककारणे द्रव्यार्कनिःसारणे क्रमः ।
तत्तत्सेवाकरो नित्यं स रोगैर्नैव बाध्यते ॥ * ॥
कुत्सितार्कस्तु यामेन द्वियामाभ्यान्तु मध्यमः ।
त्रिभिर्यामैर्भवेच्छ्रेष्ठः स एवार्कस्तु सिद्धिदः ॥
द्रव्यादधिकसौगन्ध्यं यस्मिन्नर्के प्रदृश्यते ।
शीर्णास्थिपात्रमध्यस्थो द्रव्यवर्णः प्रदृश्यते ॥
शङ्खकुन्देन्दुधवलोऽन्यथा पात्रान्तरे स्थितः ।
जिह्वोपरिगतः क्षारं दद्याद्द्रव्यभवन्तु यः ॥
तमेवार्कं विजानीयादन्यज्ज्ञेयं रसादिवत् ।
कृत्वा सुगन्धं दुर्गन्धमर्कं पुष्पादिभिः सुधीः ॥
गुणार्थं पश्चात् सेवेत ह्यन्यथापगुणो भवेत् ।
दुर्गन्धं भक्षयेदर्कं यदि मोहात् कथञ्चन ॥
तदास्य जायते ग्लानिर्व्वान्तिरालस्यकं तथा ।
तद्दोषस्य विनाशाय कुर्य्याद्वान्तिमतन्द्रितः ॥
दीपोद्गमप्रसूनानां पिबेदर्कपलं जनः ।
चम्पकस्यार्कपलं वापि शीतार्त्तो मालतीभवं ॥ * ॥
अर्कनिष्काशनार्थाय क्रमाज्ज्ञेयाः षडग्नयः ।
धूमाग्निश्चैव दीपाग्निर्मन्दाग्निर्मध्यमस्तथा ॥
खराग्निश्च भट्टाग्निश्च तेषां वक्ष्यामि लक्षणं ।
निर्व्वाणो यो धूमशिखो धूमाग्निः स उदाहृतः ॥
सङ्कारमतिशुष्कं यत् मुष्टिमध्ये समेध्यति ।
तत्काष्ठं काष्ठमित्याहुः खदिरादिसमुद्भवं ॥
द्वाभ्यां तस्य चतुर्थाभ्यां योऽग्निर्दीपाग्निरुच्यते ।
चतुरंशेन तेनैव मन्दाग्निः परिकीर्त्तितः ॥
अर्द्धस्थिताभ्यां द्वाभ्यान्तु मध्यमाग्निरुदाहृतः ।
अर्द्धैस्तैः पञ्चभिः प्रोक्तः खराग्निः सर्व्वकर्म्मसु ॥
मस्तकावधिपात्रस्य चतुर्दिक्षु क्रमेण च ।
प्रसरन्ति यदा ज्वालाः स भट्टाग्निरुदीरितः ॥
सार्द्धयामश्च यामश्च याममेकं मुहूर्त्तकं ।
मुहूर्त्तमात्रमित्येवमर्कार्थे वह्नयः स्मृताः ॥ * ॥
शीर्णास्थिपात्रे मृत्तिकार्कं वा काचसम्भवे ।
पाषाणसम्भवे पात्रे कांस्यजेऽथ हिमस्थले ॥
पिबेदर्कमनिर्व्वापं पीत्वा ताम्बूलभक्षणं ।
कुर्य्यादनुक्तताम्बूले चणकं भक्षयेत्ततः ॥
मर्दनादिषु सर्व्वत्र द्रव्यतैलं प्रयोजयेत् ।
अर्क एव प्रयोक्तव्यो भक्षणे न तु मर्दने ॥
ये ये द्रव्यगुणाः प्रोक्ताः सर्व्वे तेऽर्कसमाश्रिताः ।

सेवेतार्कं प्रिये तस्मान्नाना परमधार्म्मिकः ॥
स्वस्थेऽपि वा रोगिणि वा पाच्यतेऽर्कस्तु येन वा ।
ज्ञात्वा तत्कालजं दद्यादन्यथा नाशको भवेत् ॥ * ॥
वर्षान्तराणां प्रमितिं दूतोक्तस्य तु कारयेत् ।
शरैर्युक्ता विगुणिता त्रिभिर्भागं समाहरेत् ॥
एकशेषे शुभाः शीघ्रं द्विशेषे वर्द्धते गदः ।
त्रिशेषे मरणं वाच्यं कार्य्यं साध्यते यदि ॥
अर्कं तदैतत् विज्ञाय दद्यादर्कं न चान्यथा ।
गदिना तु यदा दूतः प्रेषितश्चेद्विचार्य्यते ॥
नपुंसकान्यैकस्मात् स्वरा एकादश प्रिये ।
वर्णाः कादिकाष्टका तेषां कटपयाश्च सप्तमी ॥
एकादशसु कोष्ठेषु क्रमादूर्द्धान् प्रविन्यसेत् ।
रवाश्रयो हरो वेदाः पर्व्वता ऋतवः शराः ॥
वह्नयः पृथिवी शून्यं चन्द्रमा इति च क्रमात् ।
विहाय शीर्षं दूतस्य नामाङ्कानाञ्च योजनं ॥
एवमेवातुरे कृत्वा द्वयोरङ्कावशेषितं ।
कृत्वाङ्कयोगं गदिनोऽधिके शेषे शुभं भवेत् ॥
समशेषे दीर्घरोगः न्यूनशेषे च तन्मृतिः ।
एतद्विचार्य्य दातव्यमन्यदप्यौषधं बुधैः ॥
अजानन्तु योऽज्ञात्वा दद्यादर्कं विमोहितः ।
जायते क्षयमस्तस्य यथा मम मृते सति" ॥
इति श्रीलङ्कानाथकृतार्कचिकित्सायां अर्कविधिशतकं प्रथमं ॥ * ॥
"अथातः संप्रवक्ष्यामि निर्म्माणोऽर्कस्य भामिनि ।
पञ्चप्रकारद्रव्यस्य कुर्य्यान्निष्काशनं भिषक् ॥
अत्यन्तकठिनं चाद्यं कठिनञ्च द्वितीयकं ।
चार्द्रं तृतीयमुद्दिष्टं चतुर्थं शुष्कं भवेत् ॥
पञ्चमञ्च द्रवद्रव्यं तेषां विधिरथोच्यते ॥ * ॥
रसवच्चूर्णयेद्द्रव्यमत्यन्तकठिनन्तु यत् ॥
द्विगुणे निःक्षिपेत्तोये छायायां स्थापयेच्च तत् ।
यावच्छुष्कं भवेत्तोयं द्रव्यञ्च शिथिलं यथा ॥
ततः पुनः क्षिपेत्तोयं पूर्व्वद्रव्यसमं भिषक् ।
कृत्वाष्टप्रहरं तत्र सूर्य्यचन्द्रकरैरलं ॥
संपूज्य गणपतिं सूर्य्यं भैरवं कुलदेवतां ।
निःक्षिपेदर्कयन्त्रे तत् क्रियास्यार्कं समाहरेत् ॥
वर्णाधिकन्तु यत् द्रव्यमत्यन्तकठिनन्तु तत् ।
चन्दनादीनि सर्व्वाणि अत्यन्तकठिनानि च ॥
कीटैर्भुक्तं घुणैर्युक्तं यच्च गन्धविवर्ज्जितं ।
रहितं स्वरसेनापि नार्ककर्म्मणि योजयेत् ॥
यथार्कसंस्थितं द्रव्यं कुर्य्याल्लोकस्तथा वपुः ।
अर्कं तस्याभिषज्यं तस्मात् संयोजयेत् प्रिये ॥ * ॥
यवान्यजाजीत्रिकटुभूनिम्बादिकमौषधं ।
ज्ञेयं तत् कठिनं द्रव्यं तदर्कस्य विधिं शृणु ॥
द्विगुणं निःक्षिपेत्तोयं द्रव्ये तु कठिने मते ।
षट्प्रहरिकं तत्र कुर्य्यात् पर्य्यायमेककं ॥
रक्षेत् द्रव्यं द्विगुणितं दृष्ट्वा देशे तु कौतुकं ।
पश्चात् रसार्कयन्त्रे तत् अर्कनिष्काशयेच्छनैः ॥ * ॥
आर्द्रद्रव्यं द्विधा प्रोक्तं सरसं नीरसं तथा ।
सदुग्धं गुप्तरसकं द्विधा नीरसमुच्यते ॥
वालुकं सार्षपं शाकं निर्गुण्डीरसमार्षकं ।
धत्तूराद्यमिदं सर्व्वमार्द्रं सरसमुच्यते ॥
एषां नानानु चूर्णयित्वा विंशांशं निःक्षिपेज्जलं ।

मुहुर्त्तं मुखे संस्थाप्य धान्योऽग्नौ विधुचोत्तमैः ॥
मध्यायान्तु घतांशेन मुखलोपेन लेपयेत् ।
दद्यात् कटीमर्द्धधरां तलोऽर्द्धं चालयेच्छनैः ॥
कटाक्षयधारीदायमार्द्धमथवा नीरजं ।
विंशांशं निःक्षिपेत्तोयं जलं सर्व्वं च धारयेत् ॥
ततो निष्काशयेदर्कं क्रमशः साधिनोऽवत् ।
चतुर्थन्तु त्रिधा प्रोक्तं मृदु तीक्ष्णमिति क्रमात् ॥
सातवादचतेऽजवक्षौरिकाद्यास्तु तीक्ष्णकाः ।
खण्डानि तेषां कृत्वा च निःक्षिपेत् पुष्करे जले ॥
दिनत्रयञ्च निष्काश्य तोयादीनथ कुट्टयेत् ।
तदा न वृक्षजे दुग्धं दद्यात्तोयं दशांशकं ॥
निष्काशयेच्छनैरर्कं स तु तीक्ष्णार्कसंज्ञकः ।
दुग्धिकार्कक्षीरिण्याद्या मृदुदुग्धाः प्रकीर्त्तिताः ॥
अजे चतुर्गुणे दद्यात्तान् धर्म्मे विनिवेशयेत् ।
यावज्जलस्योष्णता स्यात् ततो यन्त्रे विनिःक्षिपेत् ॥
आदावीषत् कूर्दयित्वा सद्यःक्षणसंयुतं ।
एवं द्रव्यं कल्पयित्वा चतुर्थार्कं विनिर्हरेत् ॥
खण्डीकृत्य च आमानां पक्वानां मृदुकायिनां ।
सरसानाञ्च स्फीयादर्कं तोयेन वर्ज्जितं ॥ * ॥
वार्त्ताकुल्बरिकादीनां आमानां दार्व्वभागिनां ।
कृत्वा खण्डानि खण्डानि अष्टांशं प्रदापयेत् ॥
पृथक् पृथक् च तुवरीं सर्ज्जिक्षारञ्च सैन्धवं ।
दत्त्वा विमर्दयेत् सर्व्वं चत्वारिंशांशकं जलं ॥
क्षिप्त्वा तत्कल्कं धर्म्मे यावाद्धेनोष्णता भवेत् ।
ततो यन्त्रे तु तद्दत्त्वा स्फीयादर्कमुत्तमं ॥
कलिपक्वकानान्तु वीर्य्यतश्चार्कमाहरेत् ।
पुष्पार्कार्थे षोडशांशं जलं पुष्पेषु दापयेत् ॥
मल्लिकापद्मादीनि विल्लिकादीनि यानि च ।
लेप्याण्युत्तोदके तानि कुङ्कुमस्य प्राक्तये ॥
तन्नचत्वारिंशदंशं जलं दत्त्वा समाहरेत् ।
तेषामर्कमथ द्रावकार्क्कोपाय उच्यते ॥
द्रवद्रव्योत्क्षेपणार्थं प्रोच्यते वापकल्पना ॥ * ॥
पिधानानि विचित्राणि तेषामन्तो न विद्यते ॥
शतपत्रप्रसूनैर्व्वा जातुकैर्मालतीभवैः ।
गुलाबपारिजातैश्च केतकीभिः समाचरेत् ॥
दुग्धे दध्नि दवे तक्रे क्षौद्रे तैले च सर्पिषि ।
मूत्रादौ देहतोये च वक्ष्येऽस्त्यादिपिधानकं ॥ * ॥
कान्तपात्रस्य स्तनस्य कृतं अन्नमनुत्तमं ।
निष्काशयेत् सर्व्वथार्कं द्रवद्रव्यस्य नान्यथा ॥
अथवा सत्वकं द्रव्यं दध्नस्तु नवनीतकं ।
वर्षद्धीनजलस्योष्णा मधूच्छिष्टन्तु सर्पिषः ॥
गोकण्ठकन्तु दुग्धस्य तथा मद्यस्य किण्वकं ।
तैलस्य तस्य पिण्याकं सर्व्वं घृतसमन्वितं ॥
यन्त्रे दत्त्वा द्रवद्रव्यं ययोक्ताधोनिवेशनं ।
तथा स्थलं स्थापयित्वा द्रवैर्यन्त्रं प्रपूरयेत् ॥
आच्छाद्य सारकैः पूर्णं स्थालीं दद्यादधोमुखीं ।
तथा चालयितः सर्व्वो द्रवः फेनं परित्यजेत् ॥ * ॥
दुर्गन्धिर्व्वा भवेदर्कस्तं कुर्य्यात् सुखिगन्धकं ।
सर्व्वेषामेव मांसानां दुर्गन्धनाशञ्च सर्व्वथा ॥
घृताभ्यक्ता हिङ्गुजीरमेथिका राजिका कृता ।
नवीनायां खर्परिकायां दद्यात् द्रव्यं पुनः पुनः ॥
तत्र दद्यात्तदर्कन्तु यथा दुर्गन्धतां त्यजेत् ।

तथा पुनः पुनः कार्य्यं जायते गन्धवारकं ॥
कार्य्याणि रोचको गन्धो भवेत्तदर्कविधानं ॥ * ॥
सर्व्वेषामर्कप्रयोगे च गन्धपाषाणवासना ॥
पर्य्यायास्तु प्रवालस्था ते भवन्त्यर्कवासकाः ।
सर्व्वेषु वातरोगेषु मल्लिकाद्यादिवासना ॥
मल्लिकाजातया रागं निर्य्यासः सर्ज्जकस्य च ।
जात्यागुरुः चन्दनञ्च मल्लिकाद्यादिपञ्चकं ॥
सर्व्वेषु पित्तरोगेषु चन्दनादिकवासना ।
सर्व्वेषु कफरोगेषु जटामांस्यादिवासनं ॥
चन्दनञ्च तथोशीरं कर्पूरो गन्धवालुकी ।
एलाकर्पूरगोक्षुराः सप्त ते चन्दनादयः ॥
जटामांसी नखं षष्ठी लवङ्गं तगरं रसः ।
शिलाजा गन्धपाषाणः सप्त मांस्यादिका अमी ॥
वासयेद्धा दशाङ्गेन त्रिदोषघ्नेन चार्ककं ।
नश्यन्ति यस्य धूपेन अवग्रहपिशाचकाः ॥
घनसारकन्धपाषाणात् तावन्मल्लिकगुग्गुलुः ।
चतुरंशं चन्दनञ्च जटामांसी च तावती ।
त्रिभागः सर्ज्जकः सारस्तावदेव हि राजकं ।
उशीरं तु द्विभागं स्यात् दलमर्द्धं नखं समं ॥
कर्पूरो मृगनाभिश्च एकभागौ प्रकीर्त्तितौ ।
एष दशाङ्गधूपस्तु वज्रस्यापि मनो हरेत् ॥ * ॥
पलाण्डुलशुनादीनां निर्गन्धीकरणं ब्रुवे ।
उत्पाद्यान्तर्ब्बिलं सम्यक् तक्रमध्ये विनिःक्षिपेत् ॥
पर्य्यायमेकमत्यक्तमध्येऽस्मिन् विरमे सति ।
दद्यान्निष्काश्यान्यतक्रं कुर्य्यात्तथाष्टमांशकं ॥
द्रोणपुष्पीरसेऽप्येवं मूर्व्वापत्ररसेऽपि वा ।
त्रिपर्य्यायोत्तरं तत्तु रसोनं क्षालयेत् सुधीः ॥
हरिद्राराजिकातोये स्थाप्यं पर्य्यायमेककं ।
उष्णोदकेन संक्षाल्य पर्य्यायं वाधयेत्ततः ॥
मल्लिकापत्रीपुष्पैर्व्वा अभावे पल्लवैरपि ।
आलोडयेद्द्व्यंशेन पञ्चांशेन च मस्तुना ॥
युक्तं कृत्वा याममात्रं स्थापयेत् प्रकटातपे ।
ततो निष्काशयेदर्कं जात्यादिकपिधानितं ॥
अस्यार्कस्य सुगन्धेन एकदा मोहितो हरः ।
को जानाति रसोनस्य स्वर्कोऽयमिति भूतले ॥
एकतः सर्व्वं एवार्का मतार्कस्तु तथैकतः ।
मया स्वर्गे स्वर्गीतस्तु प्राप्तं तत्र च वाञ्छितं ॥
तदा प्रोक्तं शिवस्याग्रे मम धिग् जीवितं प्रभो ।
पीता वाथ प्रभुक्ता वा सुधा देवैर्मया श्रुतं ॥
न दृष्टा तत्र देवेश शिरश्छेदं करोम्यहं ।
ततः प्रसन्नो गिरिशो वाक्यं मां प्रति सोऽब्रवीत् ॥
दत्तं मया समस्तं ते देवाबध्यत्वमेव च ।
किन्ते कार्य्यन्तु सुधया सुधातोऽधिकरोचनं ॥ * ॥
संप्रवक्ष्यामि मांसार्कं मद्यस्यार्कं तथैव च ।
प्रयोगं विजयादीनां लभ्यते यैः सुखं महत् ॥
मांसन्तु त्रिविधं ज्ञेयं मृदुलं कठिनं घनं ।
तेषामर्कं यथा प्रोक्तं यन्त्रान्निष्काशयेच्छनैः ॥
मृदुलं चतुर्थेन्मांसं चत्वारिंशांशकं मृदुः ।
स्थूलखण्डीकृते तस्मिन् दत्त्वा तत् क्वाथयेच्छनैः ॥
मध्यांशेनाष्टमांशेन तत्तिलोयं च निःक्षिपेत् ।
दशमिषोडशमांशं तदभावे पयः क्षिपेत् ॥
जातीपत्रं लवङ्गञ्च मरीचा नागकेसरं ।

मरिचं मृगनाभिश्च विद्रुमश्चाष्टकं स्थिरं ॥
कार्य्यं पुष्पपिधानावमर्कं निष्काशयेत्ततः ।
जायतेऽसौ महास्वादुः सुधासमरसः शिवे ॥
दृढमांसस्य खण्डानि मधुनैव प्रकल्पयेत् ।
दद्याच्च तुवरीं तत्र लवङ्गं षोडशा दिशा ॥
क्षालयेदारनालेन त्रिवारं कोष्णवारिणा ।
क्षालयेत् सप्तवाराणि हरेदर्कन्तु पूर्व्ववत् ॥
दृढमांसस्य खण्डानि कुर्य्यादतिलघूनि च ।
आलोड्य शुक्तमानेन क्षालयेत् पयसा पुनः ॥
सप्तवाराणि यवशं भवेत् पूर्व्ववदेव हि ।
तद्दत्त्वा यन्त्रमध्ये तु हरेत् पूर्व्ववदर्ककं ॥
सर्ज्जिक्षारं यवक्षारं श्वेतक्षारञ्च टङ्कणं ।
सौभाग्यक्षारकं सौरक्षारं शुक्तभवं तथा ॥
अर्कतैलक्षपाषाणक्षारञ्च तुवरी तथा ।
अपामार्गभवं क्षारं तथाष्टौ लवणानि च ॥
लवणाष्टकमेतच्च सैन्धवञ्च सुवर्च्चलं ।
विडं समुद्रसंजातं उद्भिदं रोमकं गडं ॥
कृत्वा सर्व्वाणि चैकत्र निम्बुनीरेण भावयेत् ।
एकविंशतिवाराणि काचकूप्यां विनिःक्षिपेत् ॥
नखांशनिम्बुरसकैः सर्व्वमार्द्रीकृतञ्च तत् ।
अधश्छिद्रपीठरीं मध्ये कूप्यां निवेशयेत् ॥
मृत्कर्पटसमायुक्तां सच्छिद्रां यथाविधि ।
तस्याग्रे कूपिका योज्या दीर्घकण्ठा मनोहरा ॥
सा कूपिका तले स्थाप्या मेलयेच्च द्वयोर्मुखं ।
जलस्थां यथा न स्यात् तथा चापरकूपिका ॥
अग्नयः क्रमतो देया यामं यामद्वयं पञ्च च ।
अनेनैव प्रकारेण क्षारार्काणां समुद्भवः ॥
दद्यादस्थीनि मांसानि शुक्तशुक्त्यादिकान्यपि ।
सर्व्वाण्यपि विलीयन्ते शुक्तद्रावे न संशयः ॥ * ॥
पारावतलावचटकग्रासशूकरटिट्टिभाः ।
शशमत्स्यादिकाः सर्व्वे मांसेषु मृदुलाः स्मृताः ॥
मृगरोहितकाद्याश्च मत्स्याः शल्किसम्बराः ।
एते कठिनमांसाः स्युः पक्षिणो जलचारिणः ॥
गजकुम्भीरघण्टाद्याः सुगन्धा वकरादयः ।
गोधा गोऽश्वा लुलायाद्याः घनमांसाः प्रकीर्त्तिताः ॥
अन्नादिसम्भवो योऽर्कस्तन्मद्यं परिकीर्त्तितं ।
तस्य भेदान् प्रवक्ष्यामि घटितं तत् समुद्धरेत् ॥
तण्डुलानांस्त्रयधर्ममल्पगन्धं प्रयोजयेत् ।
पूर्व्वोक्तैर्धूपयेद्धूपैर्ज्जायते गन्धवर्ज्जितं ॥
अर्द्धं तत्र जलं देयं सिद्धे देयोऽस्नगन्धकः ।
तुषोदकैर्यवैरामैः सतुषैः सकलीकृतैः ॥
सौवीरन्तु यवैरामैः सतुषैः सकलीकृतैः ।
गोधूमैरपि सौवीरं जायते स्वल्पमादकं ॥
आरनालन्तु गोधूमैरामैः स्यान्निस्तुषीकृतैः ।
धान्याम्लं शालिचूर्णादिकोद्रवादिकृतं भवेत् ॥
यवक्षीराजिकायुक्तैः स्यान्मूलकदलद्रवैः ।
सर्षपचर्मभिः शालिपिष्टकसंयुतैः ॥
कन्दमूलफलादीश्च सकेशरलवणानि च ।
एकीकृत्य कृतोऽर्को यस्तच्छुक्तमभिधीयते ॥
यश्चौषधाम्बुसंसिद्धो योऽर्कस्तत् स्यादरिष्टकं ।
अरिष्टमधुपाकेन सर्व्वतश्च गुणाधिकं ॥
शालिपिष्टकपिष्ट्यादिकृतो योऽर्कः सुरा तु सा ।

जवाख्यो मदध्मातिविषालककुष्ठवातजित् ॥
अङ्कोल्लोऽम्लकषायत् शीतमोहानिलार्त्तिजित् ।
अपामार्गभवः श्वित्रकफमेदोऽनिलापहः ॥
आरग्वधायामार्कभवो मातृकामयनाशकः ।
कोविदारभवः क्षीरं शोफाश्मोयाग्निवारयेत् ॥
कर्णिकारिकायास्तु भगसन्धानकृद्भवेत् ।
कुमारिकाया उत्थोऽपि दग्धविस्फोटकान् जयेत् ॥
पुनर्नवायाः श्वेतायाः सर्व्वनेत्रामयापहः ।
पुनर्नवाया रक्ताया ग्राही पित्तानलापहः ॥
भण्डीरिका वातहरो ग्रन्थिसन्धानकृत् परः ।
क्षारिकाया वह्निमान्द्यकासश्वासविनाशनः ॥
मधुराजस्य यत्नोऽर्कः शोथज्वरः शिरोऽर्त्तिहृत् ।
मधुपुष्पीलतायास्तु अर्कः पित्तकफान्तकः ॥
नायमानार्कः शूलविषविसर्पीज्वरनाशनः ।
मूर्व्वाया मोहमेहाग्निकण्डूकुष्ठज्वरापहः ॥
काकमाच्या नेत्रहिक्काछर्द्दिहृद्रोगनाशनः ।
काकनासाभवो वान्ती शोथार्शोविषकुष्ठहृत् ॥
काकजङ्घोद्भवो हन्यात् ज्वरकण्डूविषक्रिमीन् ।
नागिन्यास्तु हरेत्कृच्छ्रयोनिदोषक्रिमिक्रिमीन् ॥
मेषशृङ्ग्याः श्वासकासवातश्लेष्माग्निमूलहा ।
चङ्गेयाख्या हन्ति शूलस्थूलरक्तविषमयान् ॥
सोमवल्ल्याग्निदोषघ्नः क्षीरकृच्च रसायनः ।
आकाशवल्ल्याः शीतोऽर्कः पित्तश्लेष्मामनाशनः ॥
मालाशयनीजातोऽर्को हृद्यः पवनापहः ।
वन्दाकाद्भवोऽर्कस्तु विषरक्षोग्रहापहः ॥
वटपत्रीभवश्चोष्णो योनिमूत्रगदापहः ।
त्रिकुपथ्या विबन्धार्शःश्लेष्मगुल्मानिलापहः ॥
वंशपत्र्याः पाचनोष्णो हृद्यतिगदसंघहृत् ।
मत्स्याक्ष्यर्को ग्राहिशीतकुष्ठपित्तकफास्रजित् ॥
सर्पाक्ष्या रोपणः सर्पवृश्चिकोन्दुरदंशहृत् ।
शङ्खपुष्प्या विषहरः स्मृतिकान्तिबलाग्निदः ॥
अर्कपुष्प्याः क्रिमिश्लेष्ममेहपित्तविकारजित् ।
लज्जालुकाया भगगुदरक्तपित्तातिसारहृत् ॥
कालाञ्जनासम्भवोऽर्कः क्रिमिपित्तकफापहः ।
दुग्धिकायाः कफघ्नो वृष्यस्तम्भी क्रिमिप्रणुत् ॥
भूम्यामलक्याः कासघ्नो कफपाण्डुक्षतापहः ।
ब्राह्म्या बुद्धिप्रदश्चार्कः षण्मासाभ्यासतः कविः ॥
ब्रह्मदण्डिका पाण्डुविषमश्लेष्मज्वरान् हरेत् ।
गोरक्षदुग्ध्या ज्वरश्वासकामलाशोथजन्तुजित् ॥
सूर्य्यमुख्या हरेत् स्फोटयोनिरक्तक्रिमिपाण्डुताः ।
वन्ध्याकर्कोटिकाजातः सर्पदर्पग्रहापहः ॥
मार्कण्डिकाया दुर्गन्धविषगुल्मोदरापहः ।
देवदाल्याः शूलगुल्मश्लेष्मार्शोवातजित् परः ॥
धत्तूरजो ग्राहिहिमो वह्निकृद्ज्वरदाहहा ।
गोजिह्वाया मेहकासश्वासास्रज्वरापहः ॥
नागपुष्प्याः सर्पविषसर्व्वग्रहनिवारणः ।
वेत्रसरो मूत्रघाताश्मरीयोन्यनिलार्त्तिजित् ॥
छिक्किकाया वह्निवृद्धिकृद्दद्रुकुष्ठक्रिमिप्रणुत् ।
कौकुन्दरो ज्वरं रक्तं मुखशोषं कफं हरेत् ॥
सुदर्शनार्कश्चाम्ब्वाः कफशोथाश्मवातजित्" ।
इति श्रीशङ्करमाधवसूतार्कचिकित्सायामौषधार्क-
विधानं द्वितीयशतकं ॥ * ॥ अतःपरं नानौषध-
विधानं चतुर्थशतकं । नानारोगनिवारणार्थं
पञ्चमशतकं । विस्फोटकनिवारणार्थं षष्ठशतकं ।
कुष्ठरोगादिनिवारणं सप्तमशतकं । कामार्कं ना-
मादष्टमशतकं । नखसंस्कार नवमशतकं । धातु-
शुद्धिर्दशमशतकं । एतत् सर्व्वं अर्कप्रकाशे
रावणमन्दोदरीसंवादे अस्ति बाहुल्यभिया न
लिखितं ॥
("अर्कक्षीरं सुधाक्षीरं तिक्ततुम्ब्यास्य पल्लवाः ।
करञ्जो वत्समूत्रञ्च योगनं मेहनं परम्" ॥
इति चक्रपाणिसंग्रहः ॥ * ॥
"अर्कार्गलकरञ्जाख्यनागदन्तीमयूरकाग्निमारको-
न्द्रपुष्पीत्वङ्नमश्वेतामहाश्वेताज्जविकाशकृत्यया वा
पलाशतक्षतेति" । इति अर्कादिगणः ॥
"अर्कादिको गणो ह्येष कफमेदोविषापहः ।
क्रिमिकुष्ठप्रशमनो विशेषाद्व्रणशोधनः" ॥
इति सुश्रुतः ॥)
**अर्ककान्ता**, स्त्री, (अर्कोऽर्ककिरणः कान्तोऽनुकूलो यस्याः सा, कम् + क्तः स्त्रियां टाप् ।) आदित्यभक्ता । इति राजनिर्घण्टः ॥ हुड्हुड़िया इति ख्याता । इति राजनिर्घण्टः ॥ (अस्या गुणा आदित्यभक्ताशब्दे ज्ञातव्याः ॥)
**अर्कचन्दनं**, क्ली, (अर्कस्य प्रियं चन्दनं, षष्ठीतत्पुरुषः ।) रक्तचन्दनं । इति राजनिर्घण्टः ॥ (रक्तचन्दनशब्देऽस्य गुणावली ज्ञेया ॥)
**अर्कजौ**, पुं, (अर्काज्जायेते यौ, अर्क + जन् + ड, पञ्चमीतत्पुरुषः ।) अश्विनीकुमारौ । नित्यद्विवचनान्तशब्दोऽयं । इति हेमचन्द्रः ॥
**अर्कतनयः**, पुं, (अर्कस्य तनयः, षष्ठीतत्पुरुषः ।) कर्णराजः । इति हेमचन्द्रः ॥ वैवस्वतमनुः । सावर्णिमनुः । शनिः । यमः । यमुनायां तपत्याञ्च स्त्री । इति महाभारतं ।
**अर्कनन्दनः**, पुं, (अर्कस्य नन्दनः, षष्ठीतत्पुरुषः ।) अर्कतनयः । इति त्रिकाण्डशेषः ॥
**अर्कपत्रः**, पुं, (अर्कः सूर्य्य इव तीक्ष्णं पत्रं यस्य सः ।) आदित्यपत्रवृक्षः इति राजनिर्घण्टः ॥
**अर्कपत्रा**, स्त्री, (अर्कः सूर्य्य इव तीक्ष्णं पत्रं यस्याः सा ।) वृक्षविशेषः । इसेर मूल इति भाषा । तत्पर्य्यायः । सुनन्दा २ अर्कमूला ३ विषापहा ४ । इति रत्नमाला ॥
**अर्कपर्णः**, पुं, (अर्क इव रक्तं पर्णमस्य सः ।) अर्कवृक्षः । इत्यमरः ॥ आकन्द इति ख्यातः । (अस्य विशेषोऽर्कशब्दे ज्ञातव्यः ।)
**अर्कपादपः**, पुं, (अर्कः अर्कवृक्ष इव तीक्ष्णः पादपः ।) निम्बवृक्षः । इति त्रिकाण्डशेषः ॥
**अर्कपुष्पिका**, स्त्री, (अर्कस्यार्कवृक्षस्य पुष्पमिव पुष्पमस्याः सा, जातित्वात् ङीप् कप् ।) वृक्षभेदः । अर्कहुली अर्कपुष्पीति ख्याता । तत्पर्य्यायः । पयस्या २ सूर्य्यवल्ली ३ सितपर्णी ४ । इति रत्नमाला ॥
**अर्कपुष्पी**, स्त्री, (अर्कस्यार्कवृक्षस्य पुष्पमिव पुष्पमस्याः सा, जातित्वात् ङीप् ।) कुटुम्बिनीवृक्षः । तत्पर्य्यायगुणाः ।
"अर्कपुष्पी क्रूरकर्म्मा पयस्या जलकामुका ।
अर्कपुष्पी क्रिमिश्लेष्ममेहपित्तविकारजित्" ॥
इति भावप्रकाशः ॥ राजनिर्घण्टोक्तपर्य्यायगुणाः कुटुम्बिनीशब्दे द्रष्टव्याः ॥
**अर्कप्रिया**, स्त्री, (अर्कं प्रीणाति, प्री + क, अर्कस्य प्रिया इति वा ।) जवा । इति राजनिर्घण्टः ॥ (जवाशब्देऽस्या विशेषो ज्ञातव्यः ॥)
**अर्कबन्धुः**, पुं, (अर्कस्य बन्धुरिव ।) गौतमः । स च इक्ष्वाकुकुलोद्भवशाक्यवंशीयबुद्धः । इत्यमरः ॥
**अर्कबान्धवः**, पुं, (बन्धुरेव बान्धवः, बन्धु + स्वार्थे अण्, अर्कस्य बान्धवः, षष्ठीतत्पुरुषः ।) अर्कबन्धुः इति हेमचन्द्रः ॥
**अर्कभक्ता**, स्त्री, (अर्कस्य भक्ता, षष्ठीतत्पुरुषः ।) आदित्यभक्तावृक्षः । इति राजनिर्घण्टः ॥ हुड़हुड़िया इति ख्याता ।
**अर्कमूला**, स्त्री, (अर्क इव विषधराणां दुःसहं मूलं यस्याः सा ।) अर्कपत्रा । इति रत्नमाला ॥ इसेर मूल इति भाषा ।
**अर्करेतोजः**, पुं, (अर्कस्य रेतसो जायते, अर्करेतस् + जन् + ड, उपपदसमासः ।) सूर्य्यपुत्रविशेषः । तत्पर्य्यायः । रेवन्तः २ अश्वगः ३ हयवाहनः ४ । इति हेमचन्द्रः ॥
**अर्कवल्लभः**, पुं, (अर्कस्य वल्लभः, षष्ठीतत्पुरुषः ।) बन्धूकवृक्षः । इति राजनिर्घण्टः ॥ (बन्धूकवृक्षशब्देऽस्य गुणादयो ज्ञेयाः ॥)
**अर्कवेधं**, क्ली, (अर्केण विध्यते, अर्क + व्यध + पचाद्यच् ।) तालीशपत्रं । इति राजनिर्घण्टः ॥ (तालीशपत्रशब्देऽस्य गुणादिविवरणं ज्ञेयं ।)
**अर्कव्रतं**, क्ली, (अर्कस्य व्रतं, षष्ठीतत्पुरुषः ।) आरोग्यसप्तम्यादि सूर्य्यव्रतं । इति स्मृतिः ॥ सूर्य्यस्य जलशोषणवत्प्रजाकरग्रहणं । यथा,—
"अष्टौ मासान् यथादित्यस्तोयं हरति रश्मिभिः ।
तथा हरेत् करान् राष्ट्रान्नित्यमर्कव्रतं हि तत्" ॥
इति मनुः ।
**अर्कसूनुः**, पुं, (अर्कस्य सूनुः पुत्रः ।) यमः । इति हेमचन्द्रः ॥
**अर्कसोदरः**, पुं, (अर्कस्य सोदर इव हितकारी ।) ऐरावतहस्ती । इति हेमचन्द्रः ॥
**अर्कहिता**, स्त्री, (अर्काय हिता अनुकूला, चतुर्थीतत्पुरुषः ।) आदित्यभक्तावृक्षः । इति राजनिर्घण्टः ॥ हुड़हुड़िया इति ख्याता । (अस्याः विशेष आदित्यभक्ताशब्दे द्रष्टव्यः ॥)
**अर्काश्मा**, [ न् ] पुं, (अर्कस्य अनुगतः अश्मा, मध्यपदलोपी कर्म्मधारयः ।) अर्कोपलः । (चुणि इति ख्यातः प्रस्तरभेदः ।) सूर्य्यकान्तमणिरिति यावत् । इति हलायुधः ॥
**अर्काह्वः**, पुं, (अर्केण आहूयते यः, अर्क + आ + ह्वे + अप् ।) अर्कवृक्षः । इत्यमरः ॥ आकन्द इति भाषा ।
**अर्कोपलः**, पुं, (अर्कस्यानुगत उपलः, कर्म्मधारयः ।) सूर्य्यकान्तमणिः । इति राजनिर्घण्टः ॥ (चुणि इति ख्यातो रत्नभेदः । स्फटिकमणिः । "अर्का-

यशोऽङ्कितसवङ्गिनिटक्ति सम्मानीतं महामतमिवाच चरन्ति यथाः" । इति माघः ।)

अर्गलं, क्ली, स्त्री, (अर्ग+कलच्, कुत्वम् ।) कपाटमध्यवत्तिकाष्ठविशेषः । इत्यमरः ॥ हुड़का तखना इत्यादि भाषा ।

("ससम्भ्रमेन्द्रद्रुतपातितार्गला
निमीलिताक्षीव भियामरावती" ।
इति काव्यप्रकाशे ।
"तां लक्ष्मणोऽहं दृढ़तोरणार्गलां
महद्भिर्विविधैर्यथोभितां शिवां" ।
इति रामायणे ।

"अपानपोढ़ार्गलमप्यगारं" । इति रघुः । प्रतिबन्धः । प्रत्यवायः । अन्तरायः ।

"ईप्सितं तदवज्ञानात् विद्धि सार्गलमात्मनः" ।
इति रघुवंशे ।)

कल्लोले च । इति मेदिनी ॥ देवीमाहात्म्यपाठस्यादौ पाठ्यस्तोत्रविशेषः ॥ यथा
मार्कण्डेय उवाच ।
"ब्रह्मन् केन प्रकारेण दुर्गामाहात्म्यमुत्तमं ।
शीघ्रं सिद्ध्यति तत्सर्वं कथयस्व महाप्रभो ॥
ब्रह्मोवाच ।
अर्गलं कीलकञ्चादौ पठित्वा कवचं पठेत् ।
जपेत् सप्तशतीं पश्चात् क्रम एष शिवोदितः ॥
अर्गलं दुरितं हन्ति कीलकं फलदं तथा ।
कवचं रक्षते नित्यं चण्डिका त्रितयं दिशेत् ॥
अर्गलं हृदये यस्य स चार्गलवान् सदा ।
कीलकं हृदये यस्य स वाक्कीलितमानसः ॥
कवचं हृदये यस्य स वज्रहृदयः खलु ।
ब्रह्मणा निर्मितं पूर्वं विनिश्चित्यापि चेतसा" ॥
इत्यादि । तदाद्यश्लोको यथा,—
"जय त्वं देवि चामुण्डे जय भूतापहारिणि ।
जय सर्वगते देवि ! कालरात्रि नमोऽस्तु ते" ॥
तस्य शेषश्लोको यथा,—
"इदं स्तोत्रं पठित्वा च महास्तोत्रं पठेन्नरः ।
सप्तशतीं समाराध्य वरमाप्नोति सम्पदं" ॥
इत्यर्गलास्तोत्रं ॥

अर्गलिका, स्त्री, (क्षुद्रार्गला, अर्गला गौरादित्वात् ङीष् स्वार्थे कन् ।) अल्पार्गला । इति हेमचन्द्रः ॥ खिल इति भाषा ।

अर्घ, मूल्ये, (भ्वादि—परं—सकं सेट् ।) इति कविकल्पद्रुमः ॥ अर्घति गां गोपः । इति दुर्गादासः । ("परीक्षका यत्र न सन्ति देशे नार्घन्ति रत्नानि समुद्रजानि" । इति पञ्चतन्त्रे ।)

अर्घः, पुं, (अर्घ+घञ् ।) मूल्यं ।
("कुर्य्युरर्घं यथापण्यं ततो विंशं नृपो हरेत्" ।
"मणिमुक्ताप्रवालानां लौहानां तान्तवस्य च ।
गन्धानाञ्च रसानाञ्च विद्यादर्घबलाबलम्" ।
इति मनुः ।) पूजाविधिः । इत्यमरः ॥ अयं शब्दः स्वामिनामां सर्वत्राभिकाये तयकादौ नपुंसकलिङ्गेनैव प्रयोज्यः अन्यवेदिनां निर्धारः पुंलिङ्गेन प्रयोज्यः । इति आह्निकतत्त्वं ॥ (दूर्वाक्षतसर्षपपुष्पादिविरचितोदेवताद्यर्घ्यादिसम्भारार्थः पूजोपचारभेदः । "अये वनदेवतेयं फलकुसुमपल्लवार्घेण मामुपतिष्ठते" । इति उत्तरचरिते ।
"स प्रत्यग्रैः कुटजकुसुमैः कल्पितार्घाय तस्मै" ।
इति मेघदूते ।
"दूर्वाक्षतयवपुष्पाणां दत्वार्घं पूर्णमञ्जलिम्" ।
इति याज्ञवल्क्यः ।)

अर्घीशः, पुं, (अर्घोऽस्यास्ति इति अर्घी, तेषु ईशः ।) शिवः । इति शब्दरत्नावली ॥

अर्घ्यं, त्रि, (अर्घ्यते पूज्यते, अर्घ+ण्यत्, न्यङ्क्वादीनाञ्चेति कुत्वं, अर्घमर्हति इति पादार्घाभ्याञ्चेति यत् वा ।) पूजनयोग्यं । मूल्यं । इति मेदिनी ॥ अर्घार्थं । तत्तु पूजार्थदूर्वाक्षतचन्दनपुष्पमिश्रितवारि । इत्यमरः ॥
("अनर्घ्यमर्घ्येण तमद्रिनाथः,
स्वर्गौकसामर्चितमर्चयित्वा" ।
इति कुमारसम्भवे ।
"अर्घ्यमर्घ्यमितिवादिनं नृपं,
सोऽनवेक्ष्य भरताग्रजो यतः" ।
इति रघुवंशे ।) अर्घार्थजलम् इति अमरटीकायां भरतः ॥ तत्तु सामान्यविशेषभेदेन द्विविधं । तत्राद्यस्य क्रमः । स्ववामे त्रिकोणवृत्तभूबिम्बं विलिख्याधारशक्तिं पूजयित्वा अस्त्रमन्त्रेण पात्रं प्रक्षाल्य मन्त्रेण जलेनापूर्य्याङ्कुशमुद्रया मन्त्रेण सूर्य्यमण्डलात्तीर्थमावाह्य प्रणवेन गन्धपुष्पाभ्यां संपूज्य धेनुमुद्रां प्रदर्श्य प्रणवमष्टधा दशधा वा जपेत् ॥ अन्यस्य क्रमः । स्ववामे त्रिकोणमण्डलं कृत्वा तत्र त्रिपदिकामारोप्य अस्त्रेण शङ्खं प्रक्षाल्य तदुपरि संस्थाप्य मन्त्रेण गन्धपुष्पाक्षतदूर्वादि तत्र निःक्षिप्य विमलजलेन विलोममातृकया मूलेन च पूरयेत् ततस्त्रिपदिकायां वह्निमण्डलपूजा शङ्खे सूर्य्यमण्डलपूजा जले सोममण्डलपूजा ततो मन्त्रेणाङ्कुशमुद्रया सूर्य्यमण्डलात्तीर्थमावाह्य मन्त्रेण स्वहृदयाद्देवतां तत्रावाह्य कूर्च्चमन्त्रेणावगुण्ठ्यास्त्रमन्त्रेण गालिनीमुद्रां प्रदर्श्य मन्त्रेण सजलं वीक्ष्य अङ्गमन्त्रैः सकलीकृत्य गन्धपुष्पाभ्यां देवतां संपूज्य तदुपरि मत्स्यमुद्रयाच्छाद्य मूलमन्त्रमष्टधा जप्त्वा धेनुमुद्रां प्रदर्श्यास्त्रेण संरक्ष्य तस्मात् किञ्चित् जलं प्रोक्षणीपात्रे निःक्षिपेत् । इति तन्त्रसारः ॥

अर्घ्यं, क्ली, (अर्घ+यत् ।) नरकायमुनितपोवनतरुद्भवमधु । तस्य गुणाः । चक्षुरायुर्हितकारित्वं । आमवातकफपित्तनाशित्वञ्च । इति राजवल्लभः ॥

अर्च्च, क, पूजे । (चुरादि—सकं—सेट् ।) इति कविकल्पद्रुमः ॥ क अर्च्चयति । गोवर्द्धनस्त्विममात्मनेपदिनं मत्वा विभागवैषु मकरकेतनमर्च्चयन्तीत्यादि स्खलितमित्याह । इति दुर्गादासः ॥

अर्च्च, ज, पूजे । (भ्वादि—सकं—सेट् ।) इति कविकल्पद्रुमः ॥ ज अर्च्चति अर्च्चते । इति दुर्गादासः ॥

अर्च्चकः, त्रि, (अर्च्चति, अर्च्च+ण्वुल् ।) पूजकः । अर्च्चनाकारकः । यथा,—
"अर्च्चकस्य तपोयोगात् अर्च्चनस्यातिशायनात् ।
आभिरूप्याच्च बिम्बानां देवः सान्निध्यमृच्छति" ॥
इति तिथ्यादितत्त्वं ॥
("ब्रह्मचारी व्रती च स्यात् गुरुदेवद्विजार्च्चकः" ।
इति मनुः ।)

अर्च्चनं, क्ली, (अर्च्च+भावे ल्युट् ।) पूजनं । यथा,—
"धनधान्यकरं नित्यं गुरुदेवद्विजार्च्चनं" ।
इति राजवल्लभः ॥ पूजाकर्त्तरि त्रि । यथा,—
"अर्च्चकस्य तपोयोगात् अर्च्चनस्यातिशायनात्" ।
इति तिथ्यादितत्त्वं ।

अर्च्चना, स्त्री, (अर्च्च+युच्, टाप् ।) पूजा । इति जटाधरः ॥ गुरुदेवद्विजानां नित्यार्च्चनागुणाः । सर्वैश्वर्य-आयुर्धनधान्यकारित्वं । अलक्ष्मीपापनाशित्वञ्च । इति राजवल्लभः ॥

अर्च्चा, स्त्री, (अर्च्च+आधारे अङ् ।) पूजा । प्रतिमा । इति मेदिनी ॥ (देवादीनां पूजनं । "अर्च्चा चेत् विधिवत्तव ते वद तदा किं मोक्षकामक्रमैः" ॥ इति शिवशतके ।)

अर्च्चिः, स्त्री, (अर्च्च+इन् ।) अग्निशिखा । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥
("आसीदासन्ननिर्व्वाणप्रदीपार्च्चिरिवोषसि" ।
इति रघुवंशे ।)

अर्च्चिः, [स्] स्त्री, क्ली, (अर्च्च+इसि ।) अग्निशिखा । किरणः । इत्यमरः । दीप्तिः । इत्युणादिकोषः ॥ अयं शब्दः सान्त इदन्तश्च ॥ ("रुन्धानां हेमलक्ष्मीमिव निचयैरर्च्चिषामादधानः" । "विरम विरम वह्ने मुञ्च धूमानुबन्धं प्रकटयसि किमुच्चैरर्च्चिषां चक्रवालम्" । इति रत्नावली ।)

अर्च्चितः, त्रि, (अर्च्च+कर्म्मणि क्तः ।) पूजितः । इत्यमरः ॥ (पूजाविधिना सम्मानितः ।
"तेऽप्यन्येवं कृते तत्र गत्वा तान् परमार्च्चितान्" ।
"अर्च्चिताश्च नरैः पौरैः प्राञ्जला भरतर्षभ" ।
इति महाभारते ।)

अर्च्चिष्मान्, [त्] पुं, (अर्च्चिर्विद्यतेऽस्य, अर्च्चिस्+मतुप् ।) अग्निः । इति हेमचन्द्रः ॥ सूर्य्यः । अर्च्चिःशब्दात् अतिशये मतुप्प्रत्ययः ॥ (त्रि, दीप्तः । तेजोविशिष्टः । प्रभावान् ।) (स्वनामख्यातो देवर्षिभेदः । यदुक्तं, हरिवंशे,
"अर्च्चिष्मांस्तप्यतश्चैव भारिच वदतां वरः ।
नेतारो देवदेवानामेते हि तपसान्विताः" ।)

अर्च्च्यः, त्रि, (अर्च्च+कर्म्मणि ण्यत्, अर्च्च+यत् वा ।) अर्च्चनीयः । पूज्यः । इति हेमचन्द्रः ॥
("मत्प्रयुक्ताश्च मतल्लिकाम्,
तमर्च्च्यमारादभिवर्त्तमानम्" ।
इति रघुवंशे ।)

अर्ज्ज, अर्ज्जने । (भ्वादि—परं—सकं सेट् ।) इति कविकल्पद्रुमः ॥ अर्ज्जनमलब्धस्य लाभः । यशआर्ज्जति यः स्थिरमिति हलायुधः । इति दुर्गादासः ॥

अर्ज्ज, क संस्कारे (चुरादि—उभं—सकं—सेट् ।) इति कविकल्पद्रुमः ॥ क अर्ज्जयति किमपि लोकः संस्करोतीत्यर्थः । प्रतियत्ने प्रायः । अर्ज्जयति धनं परिजनः । इति रमानाथः । इति दुर्गादासः ॥

अर्थवादः, पुं, (अर्थस्य लक्षणया स्तुत्यर्थस्य निन्दार्थस्य वा वादः, वद्+करणे घञ्।) स्तुतिः। प्रशंसा। इति हेमचन्द्रः॥ स तु त्रिविधः। गुणवादः १ अनुवादः २ भूतार्थवादः ३। यथा,—
"विरोधे गुणवादः स्यादनुवादोऽवधारिते।
भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः"॥
इति भट्टः॥ तत्रसम्भोनिर्णीयते सप्तविधः। स्तुत्यर्थवादः १ फलार्थवादः २ सिद्धार्थवादः ३ निन्दार्थवादः ४ परकृतिः ५ पुराकल्पः ६ मन्त्रः ७। एषामुदाहरणानि बाहुल्यात् न लिखितानि॥ विध्यसमभिव्याहृतवाक्यं। यथा। "अर्थवादश्च विध्यसमभिव्याहृतवाक्यरूपः" सोऽपि त्रिविधः। गुणवादानुवादभूतार्थवादभेदात्। यथा—
"विरोधे गुणवादः स्यादनुवादोऽवधारिते।
भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः"॥
इति॥ अयमर्थः। विरोधे विशेष्यविशेषणयोः सामानाधिकरण्येनान्वयविरोधे गुणवादः गुणकथनरूपत्वात्। यथा "यजमानः प्रस्तरः" इति। अत्र प्रस्तरः कुशमुष्टिः तस्य यजमानेऽभेदान्वयबाधात् यजमानस्य कुशमुष्टिधारकरूपार्थवादरूपत्वात् गुणवादः। अवधारिते प्रमाणान्तरसिद्धेऽर्थे यो वादः। यथा नान्तरीक्षेऽग्निश्चेतव्यः अग्निर्हिमस्य भेषजं इत्यादि च। अन्तरीक्षेऽग्निचयनस्यासम्भवेन तदभावस्य अग्नेर्हिमनाशकत्वस्य च लौकिकप्रमाणसिद्धत्वात् अनुवादः। तद्धानौ तयोर्विरोधावधारणयोरभावे भूतार्थवादः। यथा इन्द्रो वृत्रहन्नित्यादि। सोऽपि द्विविधः। स्तुत्यर्थवादो निन्दार्थवादश्च। यथा,—
"सन्ध्यामुपासते ये च" इत्यादि स्तुत्यर्थवादः।
"स्त्रीतैलमांससंभोगी पर्व्वस्वेतेषु वै पुमान्॥
विण्मूत्रभोजनं नाम प्रयाति नरकं मृतः"।
इत्यादि निन्दार्थवादः। इति श्राद्धविवेकटीकायां श्रीकृष्णतर्कालङ्कारः॥ *॥
"प्रकरणप्रतिपाद्यस्य तत्र तत्र प्रशंसनं"।
इति वेदान्तसारः॥ तद्विवरणं यथा। अथार्थवादाधिकरणं। तत्रार्थवादाश्च सन्ति ये ते किं प्रमाणं न वेति संशये पूर्व्वपक्षसूत्रं। आम्नायस्य प्रवर्त्तकत्वं तदर्थमेव तदवतारादिति। अस्यार्थः। आम्नायस्य वेदस्य प्रवर्त्तकत्वं विधेये इति शेषः। तदर्थं वेदाभिधानात्। तत्र प्रवर्त्तकत्वं कार्य्यताज्ञानद्वारैव तद्विना प्रवृत्त्यभावात्। अतः सिद्धार्थकानां स्तुत्यर्थवादानां कार्य्यतावाचकपदाभावात् न कार्य्यताधीजनकत्वं। अतोऽप्रामाण्यमेव। अतस्तेषामर्थवादानां प्रवर्त्तकत्वार्थमवश्यं विधिकल्पनं स्तुतविशेषणत्वं वा युक्तं अतएव सिद्धान्तसूत्रं। विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युरिति। अस्यार्थः। अर्थवादानां स्तुतिपरत्वेन विधिना सह एकवाक्यत्वात् ते अर्थवादाः प्रमाणानि स्युः। तथा च विधेयप्रवर्त्तनायैव तेषां तात्पर्य्यं तत्रैव प्रामाण्यं यत्परः शब्दः स शब्दार्थ इति सिद्धान्तात् न स्वार्थे स्तुत्यादौ तत्र तात्पर्य्याभावात्। तर्हि यन्न दुःखेन सम्भिन्नमित्यादिः स्वतन्त्रार्थवादानां का गतिरित्यत आह भूतार्थानां क्रियार्थेन समाम्नायः। अस्यार्थः। भूतार्थानां सिद्धार्थानां क्रियार्थेन कार्य्यबोधकेन विधिना इति यावत्। समाम्नायः पाठः कार्य्य इति शेषः। तस्य विधिवाक्याकाङ्क्षापूरकत्वेन कार्य्यान्वितबोधकतया तेषां प्रामाण्यं। यथा। निखिद्यमानयूपाहवनीयवाक्यानां यूपाहवनीयपरिचयाय कार्य्यान्वितबोधकत्वेन स्वार्थबोधकत्वे प्रामाण्यं। तथा स्वर्गकामो यजेतेत्यत्र स्वर्गस्वरूपपरिचयाय स्वर्गबोधकत्वेन।
"यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरं।
अभिलाषोपनीतं यत् तत् सुखं स्वःपदास्पदं"॥
इत्यादि वाक्यानामपि प्रामाण्यं। अन्यथा यूपादिपदार्थापरिचये च तत्तद्विधिवाक्यानां प्रवृत्तिर्न स्यादतो विधिनैकवाक्यत्वात् सिद्धार्थकानामपि प्रामाण्यं। यत्र तु विधिना सह विरोधः तत्र न स्वार्थे प्रामाण्यं। यथा "अहरहः सन्ध्यामुपासीत" इत्यादौ।
"सन्ध्यामुपासते ये तु नियतं संशितव्रताः।
विधूतपापास्ते यान्ति ब्रह्मलोकमनामयम्"॥
इत्याद्यर्थवादानां॥ अतो नित्ये कर्म्मणि फलश्रुतिरर्थवादएव सोऽपि तदुत्पादनपरः। अतोऽत्र कार्य्यताज्ञानादेरप्रवृत्तिरिति दिक्। इति धर्म्मदीपिका॥

अर्थवान्, [त्] पुं, (अर्थोऽस्त्यस्य, अर्थ+मतुप्+मस्य वः।) पुरुषः। इति राजनिर्घण्टः॥ अर्थविशिष्टे त्रि॥ (ऐश्वर्य्यशाली। "तेनार्थवान् लोभपराङ्मुखेन"। इति रघुवंशे। अभिधेययुक्तः। सार्थकः।
"करोति यः सर्व्वजनातिरिक्तां
सम्भावनामर्थवतीं क्रियाभिः"।
इति किरातार्जुनीये। "अर्थवान् खलु मे राजशब्दः"। इति शाकुन्तले।)

अर्थविज्ञानं, क्ली, (अर्थस्य विज्ञानं, षष्ठीतत्पुरुषः।) शुश्रूषाद्यष्टधीगुणान्तर्गतगुणविशेषः। शब्दार्थज्ञानं। इति हेमचन्द्रः॥
("शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा।
ऊहोऽपोहोऽर्थविज्ञानं तत्त्वज्ञानञ्च धीगुणाः"॥)

अर्थव्ययज्ञः, त्रि, (अर्थस्य व्ययं तत्प्रकारं जानाति, ज्ञा+क।) धनव्ययप्रकारवित्। (किं धनं, कथं, कुत्र, कियत्, कस्मै वा व्ययितव्यमिति विशेषाभिज्ञः।) तत्पर्य्यायः। सुकलः २। इति हेमचन्द्रः॥

अर्थशास्त्रं, क्ली, (अर्थस्य भूमिधनादेः प्रापकं शास्त्रं, षष्ठीतत्पुरुषः।) चाणक्यादिप्रणीतं नीतिशास्त्रं। तत्पर्य्यायः। दण्डनीतिः २। इत्यमरः॥ यथा,—
"बृहस्पतिप्रभृतिभिः प्रणीतस्त्वर्थशास्त्रकं।
तत्रैव दण्डनीतिः स्यादत्र श्रेयो नयानयौ"॥
इति शब्दरत्नावली॥ अष्टादशविद्यान्तर्गतविद्याविशेषः। यथा विष्णुपुराणं।
"अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः।
धर्म्मशास्त्रं पुराणञ्च विद्या ह्येताश्चतुर्दश॥
आयुर्वेदो धनुर्वेदो गान्धर्व्वश्चेति ते त्रयः।
अर्थशास्त्रं चतुर्थञ्च विद्या ह्यष्टादशैव ताः"॥
इति प्रायश्चित्ततत्त्वं॥ *॥ धर्म्मशास्त्रेणार्थशास्त्रस्य बाध्यत्वं यथा॥
"स्मृत्यर्थेन विरोधे हि अर्थशास्त्रस्य बाधनं।
परस्परविरोधे तु न्याययुक्तं प्रमाणवत्"॥
अर्थशास्त्रस्य मन्वादिप्रणीतराजनीत्यादिविषयस्य। यदाह,—
"अनागमन्तु यो भुङ्क्ते बहून्यब्दशतान्यपि।
चौरदण्डेन तं पापं दण्डयेत् पृथिवीपतिः॥
इत्यनयोर्धर्म्मशास्त्रार्थशास्त्रयोर्विप्रतिपत्तौ धर्म्मशास्त्रेण दण्डविधायकमर्थशास्त्रं बाध्यते। तत्रार्थशास्त्रस्य निपुणधीभिरितरपरत्वेन सङ्कोचः"।
इति मलमासतत्त्वं॥

अर्थसिद्धकः, पुं, (अर्थात् सिद्धः, अर्थः प्रयोजनं धनं वा सिद्धोऽस्य, समासान्तः कः।) सिन्दुवारवृक्षः। इति राजनिर्घण्टः॥

अर्थागमः, पुं, (अर्थस्य आगमः, षष्ठीतत्पुरुषः।) धनागमः। तत्पर्य्यायः। आयः २। इति हलायुधः॥
("अर्थागमो नित्यमरोगिता च
प्रिया च भार्य्या प्रियवादिनी च।
वश्यश्च पुत्त्रोऽर्थकरी च विद्या
षड्जीवलोकेषु सुखानि राजन्"॥
इति हितोपदेशे।)

अर्थिकः, पुं, (अर्थयते इत्यर्थी याचकः कुत्सितार्थे कन्।) वैतालिकः। निशायां राजादेर्जागरयिता। इति हेमचन्द्रः॥

अर्थी, [न्] त्रि, याचकः। सहायः। सेवकः। विवादी। इति विश्वः॥ धनी। अर्थो विद्यतेऽस्येति इन्॥

अर्थ्या, स्त्री, (अर्थ+यत्।) शिलाजतु। इत्यमरमेदिनीकरौ॥ अर्थहिते त्रि॥

अर्थ्यः, त्रि, (अर्थे साधुः, तत्साधुरिति यत्, अर्थादनपेतः, धर्म्मपथ्यर्थन्यायादनपेत इति यत्प्रत्ययः।) पण्डितः। धनवान्। न्याय्यः। इत्यमरभरतौ। याच्यः। याचनार्थकार्थधातोः कर्म्मणि यः॥ (अर्थयुक्तः। उदारार्थयुक्तः।
"अर्थ्यामर्थपतिर्वाचमाददे वदतां वरः"।
इति रघुवंशे।
"वागीशं वाग्भिरर्थ्याभिः प्रणिपत्योपतस्थिरे"।
इति कुमारसम्भवे।)

अर्द यातनागतियाचनेषु। (गतौ, सकं पीडायां अकं भ्वादि परं सेट्।) इति कविकल्पद्रुमः॥ यातना ताडनं। अर्दति पुत्रं पिता। "शरणं नार्दति यातकोऽपि"। न याचतीत्यर्थः। इति दुर्गादासः॥

अर्द ञ वधे। (चुरा-उभं-सकं-सेट्।) इति कविकल्पद्रुमः॥ ञ अर्दति अर्दते। "रक्षःसहस्राणि चतुर्दशार्दीत्"। वधमात्मनेपदीत्यन्ये। इति दुर्गादासः॥

अर्द क वधे। इति कविकल्पद्रुमः॥ क अर्दयति। वधमात्मनेपदीत्यन्ये। इति दुर्गादासः॥

अर्दनं, क्ली, (अर्द+ल्युट्।) याचनं। पीडनं। हननं। गमनं। अर्दधातोर्भावेऽनट्प्रत्ययः॥
("हनन्तीति तदोवाच बलं परबलार्दनम्"।
इति रामायणे।)

अर्द्दना, स्त्री, (अर्द्द + युच्, टाप् ।) याच्ञा । भिक्षा । इत्यमरः । (यातना । वधः । हिंसा । गतिः ।)

अर्द्दनिः, पुं, (अर्द्द + अनि ।) अग्निः । याच्ञा । रोगः । इत्यमरटीकायां भरतः ॥

अर्द्दितं, क्ली, (अर्द्द + क्तः ।) वायुव्याधिविशेषः । तस्य (निदानपूर्व्वकरूपसम्प्राप्तिपूर्व्वकं) लक्षणमाह (सुश्रुतः) ।
"उच्चैर्व्याहरतोऽत्यर्थं खादतः कठिनानि च ।
हसतो जृम्भतो भाराद्विषमाच्छयनादपि ॥
शिरोनासौष्ठचिबुकललाटेक्षणसन्धिगः ।
अर्द्दयित्वानिलो वक्त्रमर्द्दितं जनयत्यतः ॥
वक्रीभवति वक्त्रार्द्धं ग्रीवा चाप्यपवर्त्तते ।
शिरश्चलति वाक्सङ्गो नेत्रादीनाञ्च वैकृतम् ॥
ग्रीवाचिबुकदन्तानां तस्मिन् पार्श्वे तु वेदना ॥
(यस्याग्रजो रोमहर्षो वेपथुर्नेत्रमाविलं ।
वायुरूर्द्ध्वं त्वचि स्वापस्तोदो मन्याहनुग्रहः ॥)
तमर्द्दितमिति प्राहुर्व्याधिं व्याधिविशारदाः" ॥
तस्यासाध्यलक्षणमाह ॥
"क्षीणस्यानिमिषाक्षस्य प्रसक्ताव्यक्तभाषिणः ।
न सिध्यत्यर्द्दितं गाढ़ं त्रिवर्षं वेपनस्य च ॥ * ॥
भावप्रकाशेऽप्येवं व्याख्या ॥ व्याहरतः वदतः । कठिनानि पूगफलादीनि । विषमाच्छयनासनादिति पाठान्तरे । विषमाच्छयनासनात् ग्रीवादिवैपरीत्येन शयनादासनाच्च । अर्द्दयति पीड़यति । जनयेत्तत इति पाठान्तरे । ततस्तदनन्तरं अर्द्दितं जनयेत् । अर्द्दिते जाते किं स्यात्तदाह । वक्रीभवतीत्यादि । अपवर्त्तते वक्रीभवति । चलति कम्पते । वाक्सङ्गः वाङ्निरोधः । नेत्रादीनामित्यादिशब्देन भ्रूगण्डनासिकादीनां ग्रहणं । वैकृतं वेदनास्फुरणवक्रत्वादि । ग्रीवेत्यादि यस्मिन् पार्श्वे अर्द्दितं तस्मिन् पार्श्वे ग्रीवादीनां वेदना ॥ अनिमिषाक्षस्य निमेषासमर्थचक्षुषः । प्रसक्तं प्रकर्षेण सक्तं अव्यक्तञ्च भाषितुं शीलं यस्य । तस्य अर्द्दितं न सिध्यति त्रिवर्षं अतीतवर्षत्रयं । अथवा त्रयाणां चक्षुर्नासामुखानां वर्षः स्रावो यत्र तत् । वेपनस्य कम्पनशीलस्य च । गाढ़मतिशयेन न सिध्यति इत्यन्वयः । गाढ़मित्यर्थे च स एवार्थः ॥ * ॥
(चरकश्चाह ।
"अतिवृद्धः शरीरार्द्धमेकं वायुः प्रपद्यते ।
यदा तदोपशोष्यासृक् बाहुं पादञ्च जानु च ॥
तस्मिन् सङ्कोचयत्यर्द्धं मुखं जिह्वां करोति च ।
वक्रीकरोति नासाभ्रूललाटाक्षिहनुस्तथा ॥
ततो वक्त्रं व्रजत्यास्ये भोजनं वक्रनासिकं ।
स्तब्धं नेत्रं कथयतः क्षवथुश्च निगृह्यते ॥
दीना जिह्वा समुत्क्षिप्ता कला सज्जति चास्य वाक् ।
दन्ताश्चलन्ति बाध्येते श्रवणौ भिद्यते स्वरः ॥
पादहस्ताक्षिजङ्घोरुशङ्खश्रवणगण्डकं ।
अर्द्धे तस्मिन् मुखार्द्धे वा केवले स्यात्तदर्द्दितं" ॥ * ॥
वाग्भटश्चाह ।
"शिरसा भारहरणादतिहास्यप्रभाषणात् ।
उत्त्रासक्षवथुस्फारकार्मुककर्षणात् ॥
विषमादुपधानाच्च कठिनानाञ्च चर्व्वणात् ।
वायुर्विवृद्धस्तैस्तैश्च वातलैरूर्द्ध्वमास्थितः ॥
वक्रीकरोति वक्त्रार्द्धमुक्तं हसितमीक्षितं ।
ततोऽस्य कम्पते मूर्द्धा वाक्सङ्गस्त्वनेत्रता ॥
दन्तचालः स्वरभ्रंशः श्रुतिहानिः क्षवग्रहः ।
गन्धाज्ञानं स्मृतेर्मोहस्त्रासः सुप्तस्य जायते ॥
निष्ठीवः पार्श्वतो यायादेकस्याक्ष्णो निमीलनं ।
जत्रोरूर्द्ध्वं रुजा तीव्रा शरीरार्द्धेऽधरेऽपि वा ॥
तमाहुरर्द्दितं केचिदेकायाममथापरे" ॥ * ॥
हारीतसंहितायामप्युक्तं ।
"सन्तापदाहशोषाश्च मूर्च्छापित्तान्वितोऽभवत् ।
श्लैष्मं शोथोऽरुचिर्जाड्यं वातश्लेष्मसमन्वितं ॥
यो वन्हनाश्रितो धीरास्तं साध्यं मारुतं विदुः ।
केवलोऽपि समीरोऽपि सोऽपि साध्यतमः स्मृतः ॥
वक्त्रं भवति वक्त्रार्द्धं ग्रीवा चाप्यपवर्त्तते ।
वैकृत्यं नयनानाञ्च विसंज्ञो वेदनातुरः ॥
ग्रीवायां गण्डयोर्दन्तपार्श्वे यस्यातिवेदना ।
तमर्द्दितमिति प्राहुर्वातव्याधिविचक्षणाः ॥
लालास्रावोऽथ शोषश्च हनुग्राहो विरस्यता ।
दन्तस्फुरं भवेद्यस्य वातेनार्द्दितमेव च ॥
पीताङ्गं सज्वरं तृष्णा पित्तजे मोह एव च ।
शोफस्तम्भोऽस्य भवति कफाद्भूतेऽप्यथार्द्दिते" ॥ * ॥)
"वातात्पित्तात्कफाच्च स्यात् त्रिविधं तत्समासतः ।
लालास्रावो व्यथा कम्पः स्फुरणं हनुवाग्ग्रहः ॥
ओष्ठयोः श्वयथुः शूलमर्द्दिते वातजे भवेत् ।
पीतमास्यं ज्वरस्तृष्णा पित्तजे मोहधूपने ॥
गण्डे शिरसि मन्यायां शोथः स्तम्भः कफात्मके" ॥ * ॥
(अथ तस्य चिकित्सामाह सुश्रुतः ॥ अर्द्दितातुरं बलवन्तमुपकरणवन्तञ्च वातव्याधिविधानेनोपचरेद्वैशेषिकैश्च मस्तिष्क्यशिरोवस्तिनस्यधूमोपनाहस्नेहनाड़ीस्वेदादिभिः । ततः सप्तस्थं महापञ्चमूलं काकोल्यादिं विदारिगन्धादि सौदकानूपमांसं तथैवौदकन्दांश्च संहृत्य द्विगुणोदके क्षीरद्रोणे निःक्वाथ्य पादावशिष्टमवतार्य्य परिस्राव्य तैलप्रस्थेनोन्मिश्रं पुनरप्यवधिश्रयेत् ततस्तैलं क्षीरानुगतमवतार्य्य शीतीभूतमभिमथ्नीयात्तत्र यः स्नेहः उत्तिष्ठेत्तमादाय मधुरौषधसहातीरयुक्तं विपचेदेतत् क्षीरतैलमर्द्दितातुराणां पानाभ्यङ्गादिधूपयोज्यं ॥ तैलहीनं वा क्षीरसर्पिरक्षितर्पणमिति ॥ * ॥ चरकस्तु ॥
"अर्द्दिते नावनं मूर्द्ध्नि तैलं तर्पणमेव च ॥
नाड़ीस्वेदोपनाहाश्च आनूपपिशितैर्हिताः" ॥ * ॥
वाग्भटश्च ॥
"अर्द्दिते नावनं मूर्द्ध्नि तैलं श्रोत्राक्षितर्पणं ।
सशोफे वमनं दाहरागयुक्ते शिराव्यधः" ॥ * ॥
हारीतसंहितायां ।
"अर्द्धं पलं रसोनस्य हिङ्गुसैन्धवजीरकैः ।
सौवर्च्चलेन संयुक्तं तथैव कटुकात्रिकं ॥
घृतेन संयुतं भक्षेन्माषमेकं दिने दिने ।
निहन्ति वातरोगञ्च अर्द्दितञ्च प्रतानकं" ॥ * ॥
चक्रपाणिसंग्रहे ॥
"रसोनं नवनीतेन प्राश्य हन्त्यर्द्दितं ध्रुवं ।
अर्द्दिते नवनीतेन खादेन्माषपूरीं नरः ॥
क्षीरमांसरसैर्भुक्त्वा दशमूलीरसं पिबेत् ।
स्नेहाभ्यङ्गशिरोवस्तिपाननस्यपरायणः ।
अर्द्दितं स जयेत् सर्पिः पिबेदौत्तरभक्तिकं" ॥ * ॥
भावप्रकाशेऽप्येतदतिरिक्तं यत्संगृहीतं तच्चैतत् ॥)
"स्नेहपानानि नस्यञ्च भोज्यान्यनिलहन्ति च ।
उपनाहाश्च शस्यन्ते स्वेदनं वक्त्रयोऽर्द्दिते" ॥
वस्तिरत्र शिरोवस्तिरेव ।
"दशमूलीकषायेण मातुलुङ्गरसेन वा ।
बलया पञ्चमूल्या वा क्षीरं वातात्मके हितं ॥
पिष्टं माषकृतं गव्या नवनीतेन सोऽर्द्दितो ।
क्षीरं मांसरसैर्भुक्त्वा दशमूलीरसं पिबेत् ॥
अर्द्दिते पित्तजे शीतान् स्नेहांश्चैव विनिर्द्दिशेत् ।
घृतवस्तिप्रसेकञ्च क्षीरसेकं तथैव च ॥
जिह्मीभूताननो मूको दाहवान् योऽर्द्दितो भवेत् ।
कुर्य्यात् प्रतिक्रियां तस्य वातपित्तविनाशिनीं ॥
श्लेष्मभागे क्षयं नीते संहृष्टैः समुपाचरेत् ।
अर्द्दिते शोथसंयुक्ते वमनञ्च प्रशस्यते ॥
रसोनकल्कं तिलतैलमिश्रं
खादेन्नरो योऽर्द्दितरोगयुक्तः ।
तस्यार्द्दितं नाशमुपैति शीघ्रं
वृन्दं घनानामिव वायुवेगात्" ॥ इति ।

अर्द्दितः, त्रि, (अर्द्द + क्तः ।) याचितः । इत्यमरः ॥ हिंसितः । इति मेदिनी ॥ गतः । पीड़ितः । इति शब्दरत्नावली ॥

अर्द्धं, क्ली, (ऋध् + घञ् ।) समांशः । समभागः । इत्यमरः ॥ आधा इति भाषा । समभागेऽर्द्धशब्दः पुमान् क्लीवञ्च । अर्द्धशब्दः पुंलिङ्गः खण्डपर्य्याय एव विभागीकृतस्य वस्तुनस्तुल्यवण्टिते अर्द्ध क्लीवमेवेति केचित् । अर्द्धो रूपभेदात् भागे पुंसि । तथा वक्त्रार्द्धो नगरार्द्धः उपचारात्तु भागवति वाच्यलिङ्गः । यथा अर्द्धा शाटी अर्द्धः कम्बलः अर्द्धं वस्त्रं । इति माधवी ॥ असमपरिभागस्त्रिलिङ्गोऽर्द्धइत्यनुन्यासः । समप्रविभागेऽर्द्धशब्दो नपुंसक एव नान्यलिङ्गः । इति भागवृत्तिः । इति भरतः ॥

अर्द्धः, पुं, (ऋध् + घञ् ।) एकदेशः । तत्पर्य्यायः । भित्तं १ शकलं २ खण्डं ३ । इत्यमरः ॥ ("पश्चार्द्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्व्वकायम्" ॥ इति शाकुन्तले ।
"सर्व्वनाशे समुत्पन्ने अर्द्धं त्यजति पण्डितः ।
अर्द्धेन कुरुते कार्य्यं सर्व्वनाशो हि दुःसहः" ॥
इति पञ्चतन्त्रं ।)

अर्द्धगङ्गा, स्त्री, (अर्द्धं गङ्गायाः, एकदेशितत्पुरुषः ।) कावेरी नदी । इति त्रिकाण्डशेषः ॥

अर्द्धगुच्छः, पुं, (अर्द्धः चन्द्रसमः गुच्छः ।) चतुर्व्विंशतियष्टिकहारः । इति हेमचन्द्रः ॥ चव्विशनरि दाना इति भाषा ।

अर्द्धचन्द्रः, पुं, (अर्द्धं चन्द्रस्य ।) नखक्षतं । बाणविशेषः ।
("चतुर्भिरर्द्धचन्द्रैश्च जघान चतुरो हयान्" ।
इति रामायणे ।) गलहस्तः । ("छागालाः सर्व्वेऽर्द्धचन्द्रं दत्वा निःसारिताः" । इति पञ्चतन्त्रे ।) गलाटिपी यस्य प्रसिद्धिः । इति मेदिनी ॥ चन्द्रकः ।

| अथ | अथ | अथ |
|---|---|---|
| अथालङ्कारनामानि | लक्षणानि | तदुदाहरणानि |
| अल्पं ——————————————१८ | "अल्पन्तु सूक्ष्मादाधेयाद्यदाधारस्य सूक्ष्मता" । १८ | "मणिमालोर्म्मिका तेऽद्य करे जपवटायते" ॥ १८ |
| अवज्ञालङ्कृतिः ——————————१९ | "ताभ्यां तौ यदि न स्यातामवज्ञालङ्कृतिस्तु सा"। १९ | "स्वल्पमेवाम्बु लभते प्राज्ञः प्राप्यापि सागरं ।<br>मीलन्ति यदि पद्मानि का हानिरमृतद्युतेः" ॥ १९ |
| असङ्गतिः ——————————————२०<br>तस्य त्रीणि लक्षणानि । | "विरुद्धभिन्नदेशत्वं कार्य्यहेत्वोरसङ्गतिः ।<br>अन्यत्र करणीयस्य ततोऽन्यत्र कृतिश्च सा ॥<br>अन्यत् कर्त्तुं प्रवृत्तस्य तद्विरुद्धकृतिश्च सा" । २० | "विषं जलधरैः पीतं मूर्च्छिताः पथिकाङ्गनाः ।<br>अपारिजातां वसुधां चिकीर्षन् द्यां तथाकृथाः ।<br>गोत्रोद्धारप्रवृत्तो हि गोत्रोद्भेदं पुराकरोः" ॥ २० |
| असदर्थनिदर्शना ——————————२१ | "अपरं बोधनं प्राहुः क्रिययासत्सदर्थयोः"।अस्यार्थः। कस्यचित् किञ्चित् क्रियाविशिष्टस्य स्वक्रियया परान् प्रति असतः सतो वार्थस्य बोधनंवर्णनं ।२१ | "नश्येद्राजविरोधीति क्षीणं चन्द्रोदये पुनः" ॥ २१ |
| असम्भवः ——————————————२२ | "असम्भवोऽर्थनिष्पत्तेरसम्भाव्यत्ववर्णनं" । २२ | "को वेद गोपशिशुकः शैलमुत्पाटयिष्यति" ॥ २२ |
| आवृत्तिदीपकं ——————————२३<br>तत् त्रिविधं। पदावृत्तिः। अर्थावृत्तिः। उभयावृत्तिः। | "त्रिविधं दीपकावृत्तौ भवेदावृत्तिदीपकं" । २३ | "वर्षत्यम्बुदमालेयं वर्षत्येषा च शर्वरी ॥<br>उन्मीलन्ति कदम्बानि स्फुटन्ति कुटजोद्गमाः ।<br>माद्यन्ति चातकास्तृप्ता माद्यन्ति च शिखावलाः" ॥ २३ |
| आक्षेपः —————————————— २४<br>अस्य त्रीणि लक्षणानि लक्ष्याणि च । | "आक्षेपः स्वयमुक्तस्य प्रतिषेधो विचारणात् ।<br>निषेधाभास आक्षेपं बुधाः केचन मन्वते ॥<br>आक्षेपोऽन्यो विधौ व्यक्ते निषेधे च तिरोहिते"।२४ | "चन्द्र सन्दर्शयात्मानमथवास्ति प्रियामुखं ।<br>नायं दूति तनोस्तापस्तस्याः कालानलोपमः ।<br>गच्छ गच्छसि चेत्कान्त तत्रैव स्याज्जनिर्मम" ॥ २४ |
| उत्प्रेक्षा ——————————————२५<br>सा वस्तुहेतुफलात्मतागोचरत्वेन त्रिविधा वस्तूत्प्रेक्षा। हेतूत्प्रेक्षा। फलोत्प्रेक्षा। तत्राद्या उक्तविषया अनुक्तविषया चेति द्विविधा। परे हेतुफलोत्प्रेक्षे सिद्धासिद्धविषयतया प्रत्येकं द्विविधे। एवमुत्प्रेक्षा षड्विधा। | "सम्भावना स्यादुत्प्रेक्षा वस्तुहेतुफलात्मता ।<br>उक्तानुक्तास्पदाद्यात्र सिद्धासिद्धास्पदे परे" । २५ | "धूमस्तोमं तमः शङ्के कोकीविरहशालिनां ।<br>लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ॥<br>रक्तौ तवाङ्घ्री मृदुलौ भुवि विक्षेपणाद्ध्रुवं ।<br>त्वन्मुखाभेच्छया नूनं पद्मैर्वैरायते शशी ॥<br>मध्यः किं कुचयोर्धृत्यै बद्धः कनकदामभिः ।<br>प्रायोऽब्जं त्वत्पदेनैक्यं प्राप्तुं तोये तपस्यति" ॥ २५ |
| उत्तरं ——————————————२६ | "किञ्चिदाकूतसहितं स्याद्गूढोत्तरमुत्तरं" । २६ | "यत्रासौ वेतसी पान्थ तत्रेयं सुतरा सरित्" ॥ २६ |
| उदात्तं ——————————————२७ | "उदात्तमृद्धिश्चरितं श्लाघ्यञ्चान्योपलक्षणं" । २७ | "सानौ यत्राभवद्युद्धं तव धूर्ज्जटिनाऽर्ज्जुनः" ॥ २७ |
| उपमा ——————————————२८ | "उपमा यत्र सादृश्यलक्ष्मीरुल्लसति द्वयोः" । २८ | "हंसीव भूपतेः कीर्त्तिः स्वर्गङ्गामवगाहते" ॥ २८ |
| उपमेयोपमा ——————————२९ | "पर्य्यायेण द्वयोस्तच्चेदुपमेयोपमा मता" । २९ | "धर्म्मोऽर्थ इव पूर्णश्रीरर्थो धर्म्म इव त्वयि" ॥ २९ |
| उल्लासः ——————————————३० | "एकस्य गुणदोषाभ्यामुल्लासोऽन्यस्य तौ यदि" । ३० | "अपि मां पावयेत् साध्वी स्नात्वेतीच्छति जाह्नवी ॥<br>काठिन्यं कुचयोः स्रष्टुं वाञ्छन्त्यः पादपद्मयोः ।<br>निन्दन्ति विश्वधातारं त्वद्धाटीष्वरियोषितः ॥<br>तदभाग्यं धनस्यैव यन्नाश्रयति सज्जनं ॥<br>लाभोऽयमेव भूपाल सेवकानां न चेद्वधः" ॥ ३० |
| उल्लेखः ——————————————३१<br>लक्षणभेदेन स द्विविधः । | "बहुभिर्बहुधोल्लेखादेकस्योल्लेख इष्यते ।<br>एकेन बहुधोल्लेखोऽप्यसौ विषयभेदतः" । ३१ | "स्त्रीभिः कामोऽर्थिभिः स्वर्द्रुः कालः शत्रुभिरैक्षि सः ।<br>गुरुर्वचस्यर्जुनोऽयं कीर्त्तौ भीष्मः शरासने" ॥ ३१ |
| एकावली ——————————————३२ | "गृहीतमुक्तरीत्यार्थश्रेणिरेकावली मता" । ३२ | "नेत्रे कर्णान्तविश्रान्ते कर्णौ दोःस्तम्भशालिनौ ।<br>दोःस्तम्भौ जानुपर्य्यन्तप्रलम्बनमनोहरौ ।<br>जानुनी रत्नमुकुराकारे तस्य महीभुजः" ॥ ३२ |
| कारकदीपकं ——————————३३ | "क्रमिकैकगतानान्तु गुम्फः कारकदीपकं" । ३३ | "गच्छत्या गच्छति पुनः पान्थः पश्यति पृच्छति" ॥ ३३ |
| कारणमाला ——————————३४<br>सा पूर्व्वपूर्व्वपदार्थानां कारणत्ववर्णनेन एवमुत्तरोत्तरपदार्थानां कारणत्ववर्णनेन च द्विधा। | "गुम्फः कारणमाला स्याद्यथा प्रक्रान्तकारणैः"। ३४ | "नयेन श्रीः श्रिया त्यागस्त्यागेन विपुलं यशः ॥<br>भवन्ति नरकाः पापाः पापं दारिद्र्यसम्भवं ।<br>दारिद्र्यमप्रदानेन तस्माद्दानपरो भव" ॥ ३४ |
| काव्यलिङ्गं ——————————३५ | "समर्थनीयस्यार्थस्य काव्यलिङ्गं समर्थनं" । ३५ | "जितोऽसि मन्द कन्दर्प मच्चित्तेऽस्ति त्रिलोचनः" ॥ ३५ |
| काव्यार्थापत्तिः ——————————३६ | "कैमुत्येनार्थसंसिद्धिः काव्यार्थापत्तिरिष्यते" । ३६ | "स जितस्त्वन्मुखेनेन्दुः का वार्त्ता सरसीरुहां" ॥ ३६ |
| कैतवापह्नुतिः ——————————३७ | "कैतवापह्नुतिर्व्यक्तौ व्याजाद्यैर्निह्नवे पदैः" । ३७ | "निर्यान्ति स्मरनाराचाः कान्तादृक्पातकैतवात्" ॥ ३७ |
| गूढोक्तिः ——————————————३८ | "गूढोक्तिरन्योद्देश्या चेद्यदन्यं प्रति कथ्यते" । ३८ | "वृषापेहि परक्षेत्रादायाति क्षेत्ररक्षकः" ॥ ३८ |
| चपलातिशयोक्तिः ——————————३९ | "चपलातिशयोक्तिस्तत्पौर्व्वापर्य्यव्यतिक्रमः" । ३९ | "अये मानो गतः पश्चादनुनीता प्रियेण सा" ॥ ३९ |
| चित्रं ——————————————४० | "पद्माद्याकारहेतुत्वे वर्णानां चित्रमुच्यते" । ४० | "मारमासुषमा चारुरुचा मारवधूत्तमा ।<br>मात्तधूर्त्ततमावासा सा वामा मेऽस्तु मारमा" ॥ ४० |

| अलङ्कारनामानि | तल्लक्षणानि | तदुदाहरणानि |
|---|---|---|
| चित्रकाव्यमनेकविधं यथा। पद्म-चक्र-धनुः-खड्ग-नागपाश-कवाट-नौका-बन्धाः। अश्वगति-त्रिपदी-गोमूत्रिकादयः। | | |
| छेकापह्नुतिः —— ४१ | "छेकापह्नुतिरन्यस्य शङ्कातस्तथ्यनिह्नवे"। ४१ | "प्रजल्पन् मत्पदे लग्नः कान्तः किं न हि नूपुरः"॥ ४१ |
| तद्गुणः —— ४२ | "तद्गुणः स्वगुणत्यागादन्यदीयगुणग्रहः"। ४२ | "पद्मरागायते नासामौक्तिकं तेऽधरत्विषा"॥ ४२ |
| तुल्ययोगिता —— ४३<br>सा त्रिधा।<br>प्रथमा यथा —— | "वर्ण्यानामितरेषां वा धर्म्मैक्यं तुल्ययोगिता"। | "सङ्कुचन्ति सरोजानि स्वैरिणीवदनानि च।<br>त्वदङ्गमार्दवे दृष्टे कस्य चित्ते न भासते।<br>मालतीशशभृल्लेखा कदलीनां कठोरता॥ |
| द्वितीया यथा —— | "हिताहिते वृत्तितौल्यमपरा तुल्ययोगिता। | प्रदीयते पराभूतिर्मित्रशात्रवयोस्त्वया॥ |
| तृतीया यथा —— | गुणोत्कृष्टैः समीकृत्य वचोऽन्या तुल्ययोगिता"। ४३ | लोकपालो यमः पाशी श्रीदः शक्रो भवानपि"॥ ४३ |
| दीपकं —— ४४ | "वदन्ति वर्ण्यावर्ण्यानां धर्म्मैक्यं दीपकं बुधाः"। ४४ | "मदेन भाति कलभः प्रतापेन महीपतिः"॥ ४४ |
| दृष्टान्तः —— ४५ | "चेद्बिम्बप्रतिबिम्बत्वं दृष्टान्तस्तदलङ्कृतिः"। ४५ | "त्वमेव कीर्त्तिमान्राजन् विधुरेव हि कान्तिमान्"॥ ४५ |
| निदर्शना —— ४६<br>सा त्रिधा। | "वाक्यार्थयोः सदृशयोरैक्यारोपो निदर्शना।<br>पदार्थगर्भामप्यन्ये वदन्त्यन्यां निदर्शनां॥<br>अपरां बोधनं प्राहुः क्रिययासत्सदर्थयोः"। ४६ | "या दातुः सौम्यता सेयं पूर्णेन्दोरकलङ्कता॥<br>त्वन्नेत्रयुगलं धत्ते लीलां नीलाम्बुजन्मनोः॥<br>नश्यद्राजविरोधीति क्षीणं चन्द्रोदये तमः"॥ ४६ |
| निरुक्तिः —— ४७ | "निरुक्तिर्योगतो नाम्नामन्यार्थत्वप्रकल्पनं"। ४७ | "ईदृशैश्चरितैर्जाने सत्यं दोषाकरो भवान्"॥ ४७ |
| परिकरः —— ४८ | "अलङ्कारः परिकरः साभिप्रायविशेषणे"। ४८ | "सुधांशुकलितोत्तंसस्तापं हरतु वः शिवः"॥ ४८ |
| परिकराङ्कुरः —— ४९ | "साभिप्रायविशेष्यत्वे भवेत् परिकराङ्कुरः"। ४९ | "चतुर्णां पुरुषार्थानां दाता देवश्चतुर्भुजः"॥ ४९ |
| परिणामः —— ५० | "परिणामः क्रियार्थश्चेद्विषयी विषयात्मना"। ५० | "प्रसन्नेन दृगब्जेन वीक्षते मदिरेक्षणा"॥ ५० |
| परिवृत्तिः —— ५१ | "परिवृत्तिर्व्विनिमयो न्यूनाभ्यधिकयोर्म्मिथः"। ५१ | "ययावेकं शरं मुक्त्वा कटाक्षान् स रिपुश्रियाः"॥ ५१ |
| परिसंख्या —— ५२ | "परिसंख्या निषिध्यैकमेकस्मिन् वस्तुयन्त्रणं"। ५२ | "स्नेहक्षयः प्रदीपेषु न स्वान्तेषु नतभ्रुवां"॥ ५२ |
| पर्य्यस्तापह्नुतिः —— ५३ | "अन्यत्र तस्यारोपार्थः पर्य्यस्तापह्नुतिस्तु सा"। ५३ | "नायं सुधांशुः किं तर्हि सुधांशुः प्रेयसीमुखं"॥ ५३ |
| पर्य्यायः —— ५४<br>स द्विविधः। | "पर्य्यायो यदि पर्य्यायेणैकस्यानेकसंश्रयः।<br>एकस्मिन् यद्यनेकं वा पर्य्यायः सोऽपि सम्मतः"॥ ५४ | "पद्मं मुक्त्वा गता चन्द्रं कामिनीवदनप्रभा॥<br>अधुना पुलिनं तत्र यत्र स्रोतः पुराऽभवत्"॥ ५४ |
| पर्य्यायोक्तं —— ५५<br>तत् द्विविधं। | "पर्य्यायोक्तं तु गम्यस्य वचोभङ्ग्यन्तराश्रयः।<br>पर्य्यायोक्तं तदप्याहुर्यद्व्याजेनेष्टसाधनं"॥ ५५ | नमस्तस्मै कृतो येन मुधा राहुवधूकुचौ॥<br>यामि चूतलतां द्रष्टुं युवाभ्यामास्यतामिह"॥ ५५ |
| पिहितं —— ५६ | "पिहितं परवृत्तान्तज्ञातुः साकूतचेष्टितं"। ५६ | "प्रिये गृहागते प्रातः कान्ता तल्पमकल्पयत्"॥ ५६ |
| पुनरुक्तवदाभासः —— ५७ | "आपाततो यदर्थस्य पौनरुक्त्यावभासनं।<br>पुनरुक्तवदाभासः स भिन्नाकारशब्दगः"॥ ५७ | "भुजङ्गकुण्डलीव्यक्तशशिशुभ्रांशुशीतगुः।<br>जगन्त्यपि सदा पायादव्याच्चेतोहरः शिवः"॥ ५७ |
| पूर्व्वरूपः —— ५८<br>स द्विविधः। | "पुनः स्वगुणसंप्राप्तिः पूर्व्वरूपमुदाहृतं।<br>पूर्व्वावस्थानुवृत्तिश्च विकृते सति वस्तुनि"॥ ५८ | हरकण्ठांशुलिप्तोऽपि शेषस्त्वद्यशसा सितः॥<br>दीपे निर्व्वापितेऽप्यासीत् काञ्चीरत्नैर्महन्महः"॥ ५८ |
| प्रतिवस्तूपमा —— ५९ | "वाक्ययोरेकसामान्ये प्रतिवस्तूपमा मता"। ५९ | "तापेन भ्राजते सूर्य्यः शूरश्चापेन राजते"॥ ५९ |
| प्रतिषेधः —— ६० | "प्रतिषेधः प्रसिद्धस्य निषेधस्यानुकीर्त्तनं"। ६० | "न द्यूतमेतत् कितवाक्रीडनं निशितैः शरैः"॥ ६० |
| प्रतीपं —— ६१<br>तल्लक्षणभेदेन पञ्चविधं। न तु नामभेदेन। | "प्रतीपमुपमानस्याप्युपमेयत्वकल्पनं।<br>अन्योपमेयलाभेन वर्ण्यस्यानादरश्च तत्॥<br>वर्ण्योपमानलाभेन तथान्यस्याप्यनादरः।<br>वर्ण्येनान्यस्योपमाया अनिष्पत्तिर्वचश्च तत्॥<br>प्रतीपमुपमानस्य कैमर्थ्यमपि मन्यते"। ६१ | "तल्लोचनसमं पद्मं त्वद्वक्त्रसदृशो विधुः।<br>अलं गर्व्वेण ते वक्त्रकान्त्या चन्द्रो भवादृशः।<br>कः क्रौर्य्यदर्पस्ते मृत्यो त्वत्तुल्याः सन्ति हि स्त्रियः।<br>मिथ्यावादो हि मुग्धाक्षि त्वन्मुखाभं किलाम्बुजं।<br>दृष्टं चेद्वदनं तस्याः किं पद्मेन किमिन्दुना"॥ ६१ |
| प्रत्यनीकं —— ६२ | "प्रत्यनीकं बलवतः शत्रोः पक्षे पराक्रमः"। ६२ | "जैत्रनेत्रानुगौ कर्णावुत्पलाभ्यामधः कृतौ"॥ ६२ |
| प्रस्तुताङ्कुरः —— ६३ | "प्रस्तुतेन प्रस्तुतस्य द्योतने प्रस्तुताङ्कुरः"। ६३ | "किं भृङ्ग सत्यां मालत्यां केतक्या कण्टकस्थया"॥ ६३ |
| प्रहर्षणं —— ६४<br>तत् त्रिविधं। | "उत्कण्ठितार्थसंसिद्धिर्व्विना यत्नं प्रहर्षणं।<br>वाञ्छितादधिकार्थस्य संसिद्धिश्च प्रहर्षणं॥<br>यत्नादुपायसिद्ध्यर्थात् साक्षाल्लाभः फलस्य तत्"॥ ६४ | "तामेव ध्यायते तस्मै निसृष्टा सैव दूतिका॥<br>दीपमुद्योतयेद्यावत्तावदभ्युदितो रविः॥<br>निध्यञ्जनौषधीमूलं खनतासादितो निधिः"॥ ६४ |
| प्रौढोक्तिः —— ६५ | "प्रौढोक्तिरुत्कर्षहेतौ तद्धेतुत्वप्रकल्पनं"। ६५ | "कचाः कलिन्दजातीरतमालस्तोममेचकाः"॥ ६५ |
| भाविकं —— ६६ | "भाविकं भूतभाव्यर्थसाक्षात्कारस्य वर्णनं"। ६६ | "अहं विलोकयेऽद्यापि युध्यन्तेऽत्र सुरासुराः"॥ ६६ |
| भाषासमावेशः —— ६७ | "शब्दैरेकविधैरेव भाषासु विविधास्वपि।<br>वाक्यं यत्र भवेत् सोऽयं भाषासम इतीष्यते"॥ ६७ | "गुञ्जन्मणिमञ्जीरे कलगम्भीरे विहारसरसीतीरे।<br>विरसासि केलिकीरे किमालि धीरे च गन्धसार-<br>समीरे"॥ ६७ |

| अर्थालङ्कारनामानि | लक्षणानि | तदुदाहरणानि |
| --- | --- | --- |
| भेदकातिशयोक्तिः —— ६८ | "भेदकातिशयोक्तिः स्यात् तस्यैवान्यत्वकल्पनं" । ६८ | "अन्यदेवास्य गाम्भीर्य्यमन्यद्धैर्य्यञ्च भूपतेः" ॥ ६८ |
| भ्रान्त्यापह्नुतिः —— ६९ | "भ्रान्तापह्नुतिरन्यस्य शङ्कायां भ्रान्तिवारणे" । ६९ | "तापं करोति सोत्कम्पं ज्वरः किमु सखि स्मरः" ॥६९ |
| भ्रान्तिमान् —— ७० | "स्यात् स्मृतिर्भ्रान्तिसन्देहैस्तदङ्कालङ्कृतित्रयं" । ७० | "अयं प्रमत्तो मधुपस्त्वन्मुखं वेत्ति पङ्कजं" ॥ ७० |
| मालादीपकं —— ७१ | "दीपकैकावलीयोगान्मालादीपकमुच्यते" । ७१ | "स्मरेण हृदये तस्यास्तेन त्वयि कृता स्थितिः" ॥७१ |
| मिथ्याध्यवसितिः —— ७२ | "किञ्चिन्मिथ्यात्वसिद्ध्यर्थं मिथ्यार्थान्तरकल्पनं" ।७२ | "मिथ्याध्यवसितिर्वेश्यां वशयेत् खस्रजं वहन्" ॥ ७२ |
| मीलितं —— ७३ | "मीलितं यदि सादृश्याद्भेद एव न दृश्यते" । ७३ | "रसो नालक्षि लाक्षायाश्चरणे सहजारुणे" ॥ ७३ |
| मुद्रा —— ७४ | "सूच्यार्थसूचनं मुद्रा प्रकृतार्थपरैः पदैः" । ७४ | "नितम्बगुर्व्वी तरुणी दृग्युग्मविपुला च सा" ॥ ७४ |
| यथासंख्यं —— ७५ | "यथासंख्यं क्रमेणैव क्रमिकाणां समन्वयः" । ७५ | "शत्रुं मित्रं विपत्तिञ्च जय रञ्जय भञ्जय" ॥ ७५ |
| यमकं —— ७६ | "सत्यर्थे पृथगर्थायाः स्वरव्यञ्जनसंहतेः ।<br>क्रमेण तेनैवावृत्तिर्यमकं विनिगद्यते" । ७६ | "नवपलाशपलाशवनं पुरः स्फुटपरागपरागतपङ्कजं ।<br>मृदुलतान्तलतान्तमलोकयत् स सुरभिं सुरभिं सुमनोभरैः" ॥ ७६ |
| युक्तिः —— ७७ | "युक्तिः पराभिसन्धानं क्रियया मर्म्मगुप्तये" । ७७ | "त्वामालिखन्ती दृष्ट्वान्यां धनुः पौष्पं करेऽलिखत्" ॥७७ |
| रत्नावली —— ७८ | "क्रमिकाप्रकृतार्थानां न्यासं रत्नावलीं विदुः" । ७८ | "चतुरास्यः पतिर्लक्ष्म्याः सर्व्वज्ञस्त्वं महीपते" ॥ ७८ |
| रूपकं —— ७९<br>तत् द्विविधं। अभेदरूपकं। ताद्रूप्यरूपकञ्च। तत्र समन्यूनाधिक्यकथनद्वारा प्रत्येकं त्रिविधं। समाभेदरूपकं। न्यूनाभेदरूपकं। अधिकाभेदरूपकं। समताद्रूप्यरूपकं। न्यूनताद्रूप्यरूपकं। अधिकताद्रूप्यरूपकं। एतेन षड्विधं। | "विषय्यभेदताद्रूप्यरञ्जनं विषयस्य यत्" ।<br>"रूपकं तत् त्रिधाधिक्यन्यूनत्वानुभयोक्तिभिः" ॥७९ | "अयं हि धूर्ज्जटिः साक्षाद्येन दग्धाः पुरः क्षणात् ।<br>अयमास्ते विना शम्भुस्तार्तीयीकं विलोचनं ॥<br>शम्भुर्विश्वमवत्यद्य स्वीकृत्य समदृष्टिता ।<br>अस्या मुखेन्दुना लब्धे नेत्रानन्दे किमिन्दुना ॥<br>साध्वीयमपरा लक्ष्मीरसुधासागरोत्थिता ।<br>अयं कलङ्किनश्चन्द्रान्मुखचन्द्रोऽतिरिच्यते" ॥७९ |
| रूपकातिशयोक्तिः —— ८० | "रूपकातिशयोक्तिः स्यात् निगीर्य्याध्यवसानतः" । अस्यार्थः। विषयसम्बन्धेन उल्लेखनं विना विषयिवाचकशब्देन ग्रहणं विषयनिगरणं तत्पूर्व्वकं विषयस्य विषयिरूपतया अध्यवसानं तस्मिन् सति रूपकातिशयोक्तिः" । ८० | "पश्य नीलोत्पलद्वन्द्वान्निःसरन्ति शिताः शराः" ॥८० |
| ललितं —— ८१ | "प्रकृते यद्यवाच्यार्थप्रतिविम्बस्य वर्णनं" । ८१ | "ललितं निर्गते नीरे सेतुमेषा चिकीर्षति" ॥ ८१ |
| लुप्तोपमा —— ८२<br>सा चाष्टधा। वाचकलुप्ता। धर्म्मलुप्ता। उपमानलुप्ता। धर्म्मवाचकलुप्ता। वाचकोपमेयलुप्ता। वाचकोपमानलुप्ता। धर्म्मोपमानलुप्ता। धर्म्मोपमानवाचकलुप्ता। | "वर्ण्योपमानधर्म्माणामुपमावाचकस्य च ।<br>एकद्वित्र्यनुपादानात् भिन्ना लुप्तोपमाष्टधा" ॥ ८२ | "तडिद्गौरीन्दुतुल्यास्या कर्पूरन्ती दृशोर्म्मम ।<br>कान्त्या स्मरवधूयन्ती दृष्टा तन्वी रहो मया ॥<br>यत् त्वया मेलनं तत्र लाभो मे यश्च तद्रतेः ।<br>तदेतत् काकतालीयमवितर्कितसम्भवं" ॥ ८२ |
| लेशः —— ८३ | "लेशः स्याद्दोषगुणयोर्गुणदोषत्वकल्पनं" । ८३ | "अखिलेषु विहङ्गेषु हन्त स्वच्छन्दचारिषु ।<br>"शुक पञ्जरबन्धस्ते मधुराणां गिरां फलं" ॥ ८३ |
| लोकोक्तिः —— ८४ | "लोकप्रवादानुकृतिं लोकोक्तिरिति कथ्यते" । ८४ | 'सहस्व कतिचिन्मासान्मीलयित्वा विलोचने" ॥ ८४ |
| वक्रोक्तिः —— ८५ | "वक्रोक्तिः श्लेषकाकुभ्यामपूर्व्वार्थप्रकल्पनं" । ८५ | "मुञ्च मानं दिनं प्राप्तं नेह नन्दी हरान्तिके" ॥८५ |
| विकल्पः —— ८६ | "विरोधे तुल्यबलयोर्व्विकल्पालङ्कृतिर्म्मता" । ८६ | "सद्यः शिरांसि चापान् वा नमयन्तु महीभुजः" ॥८६ |
| विकस्वरः —— ८७ | "यस्मिन् विशेषसामान्यविशेषाः स विकस्वरः" ।८७ | "स न जिग्ये महान्तो हि दुर्द्धर्षाः सागरा इव" ॥ ८७ |
| विचित्रं —— ८८ | "विचित्रं तत्प्रयत्नश्चेत् विपरीतफलेच्छया" । ८८ | "नमन्ति सन्तस्त्रैलोक्यादपि लब्धुं समुन्नतिं" ॥ ८८ |
| विधिः —— ८९ | "सिद्धस्यैव विधानं यत्तामाहुर्व्विध्यलङ्कृतिं" । ८९ | "पञ्चमोदञ्चने काले कोकिलः कोकिलोऽभवत्" ॥८९ |
| विनोक्तिः —— ९०<br>लक्षणभेदेन सा द्विविधा। | "विनोक्तिः स्याद्विना किञ्चित् प्रस्तुतं हीनमुच्यते ।<br>तच्चेत् किञ्चिद्विना रम्यं विनोक्तिः सापि कथ्यते" ॥९० | "विद्या हृद्यापि सा विद्या विना विनयसम्पदं ।<br>विना खलैर्व्विभात्येषा राजेन्द्र भवतः सभा" ॥ ९० |
| विभावना —— ९१<br>अस्या लक्षणान्युदाहरणानि च षट्। | "विभावना विनापि स्यात्कारणं कार्य्यजन्म चेत् ।<br>हेतूनामसमग्रत्वे कार्य्योत्पत्तिश्च सा मता ॥<br>कार्य्योत्पत्तिस्तृतीया स्यात् सत्यपि प्रतिबन्धके ।<br>अकारणात् कार्य्यजन्म चतुर्थी स्याद्विभावना ॥<br>विरुद्धात् कार्य्यसम्पत्तिर्दृष्टा काचिद्विभावना ।<br>कार्य्यात् कारणजन्मापि दृष्टा काचिद्विभावना" ॥९१ | "अपलाक्षारसासिक्तं रक्तं ते चरणद्वयं ।<br>अस्त्रैरतीक्ष्णकठिनैर्ज्जगज्जयति मन्मथः ॥<br>नरेन्द्रानेव ते राजन् दशत्यसिभुजङ्गमः ।<br>शङ्खाद्वीणानिनादोऽयमुदेति महदद्भुतः ॥<br>शीतांशुकिरणास्तन्वीं हन्त सन्तापयन्ति तां ।<br>यशःपयोराशिरभूत् करकल्पतरोस्तव" ॥ ९१ |
| विरोधः —— ९२<br>स दशधा। | "जातिश्चतुर्भिर्ज्जात्याद्यैर्गुणो गुणादिभिस्त्रिभिः ।<br>क्रियाक्रियाद्रव्याभ्यां यत् द्रव्यं द्रव्येण वा मिथः ।<br>विरुद्धमिव भासेत विरोधोऽसौ दशाकृतिः" ॥ ९२ | "तव विरहे मलयमरुद्दावानलः शशिरुचोऽपि सोष्माणः। हृदयमलिरुतमपि भिन्ते नलिनीदलमपि निदाघरविरस्याः ॥ सन्ततमुसलासङ्गाद्बहुतरगृहकर्म्मघटनया नृपते । द्विजपत्नीनां |

| अथ अथालङ्कारनामानि | अथ लक्षणानि | अथ तदुदाहरणानि । |
|---|---|---|
| | | कठिनाः सन्ति भवति कराः सरोजकुमाराः ॥ कमलस्य प्रकृतौ जन्म गिरीशस्य कृतदिवः । खपतो नागककस्य याथार्थ्यं वेद कस्तव ॥ चक्षमोत्सकुसङ्गेन विना हरियशश्च्युतः । राकाविभावरीजानिर्विम्बज्वालाकुलो भवेत् ॥ नयनयुगासेचनकं मानसवृत्त्यापि दुष्प्रापं । रूपमिदं मदिराक्ष्या मदयति हृदयं दुनोति च मे" ॥ ९२ |
| विरोधाभासः —— ९३ | "आभासत्वं विरोधस्य विरोधाभास इष्यते" । ९३ | "विनापि तन्वि हारेण वक्षोजौ तव हारिणौ" ॥ ९३ |
| विनोक्तिः —— ९४ | "विनोक्तिः सेव्यगुणं वाविना विकृतं यदि" । ९४ | "कथापेहि परद्रोहादिति वक्ति स सूचनं" ॥ ९४ |
| विशेषः —— ९५<br>स त्रिविधः । | "विशेषः ख्यातमाधारं विनाप्याधेयवर्णनं ।<br>विशेषः सोऽपि यद्येकं वस्त्वनेकत्र वर्ण्यते ॥<br>किञ्चिदारम्भतोऽशक्यवस्त्वन्तरकृतिश्च सः" । ९५ | "गते सूर्य्येऽपि दीपस्थास्तमश्छिन्दन्ति तत्कराः ।<br>अन्तर्बहिः पुरः पश्चात् सर्व्वदिक्ष्वपि सैव मे ॥<br>त्वां पश्यता मया लब्धं कल्पवृक्षनिरीक्षणं" ॥ ९५ |
| विशेषोक्तिः —— ९६ | "कार्य्याजनिर्विशेषोक्तिः सति पुष्कलकारणे" । ९६ | "हृदि स्नेहक्षयो नाभूत् स्मरदीपे ज्वलत्यपि" ॥ ९६ |
| विषमं —— ९७<br>तत् त्रिविधं । | "विषमं वर्ण्यते यत्र घटनाननुरूपयोः ।<br>विरूपकार्य्यस्योत्पत्तिरपरं विषमं मतं ॥<br>अनिष्टस्याप्यवाप्तिश्चेत्तदिष्टार्थसमुद्यमात्" । ९७ | "क्वेयं शिरीषमृद्वङ्गी क्व तादृशमदनज्वरः ।<br>कीर्त्तिं प्रसूते धवलां श्यामा तव कृपाणिका ॥<br>भक्ष्याशया हि मञ्जूषां दृष्ट्वाखुस्तेन भक्षितः" ॥ ९७ |
| विषादनं —— ९८ | "इष्यमाणविरुद्धार्थसंप्राप्तिश्च विषादनं" । ९८ | "दीपमुद्दीपयेद्यावत्तावन्निर्वाण एव सः" ॥ ९८ |
| व्याघातः —— ९९<br>स द्विविधः । | "स्याद्व्याघातोऽन्यथाकारि तथाकारि क्रियेत चेत् ।<br>सौकार्य्येण निबद्धापि क्रियाकार्य्यविरोधिनः" । ९९ | "यैर्जगत् प्रीयते हन्ति तैरेव कुसुमैः स्मरः ।<br>दया चेद्बाल इति मय्यपरित्याज्य एव ते" ॥ ९९ |
| व्याजनिन्दा —— १०० | "निन्दाया निन्दया व्यक्तिर्व्याजनिन्देति गीयते" ।१०० | "विधे स निन्द्यो यस्ते प्रागेकमेवाहरच्छिरः" ॥१०० |
| व्याजस्तुतिः —— १०१<br>स द्विविधः । | "उक्तिर्व्याजस्तुतिर्निन्दास्तुतिभ्यां स्तुतिनिन्दयोः" ।१०१ | "कः स्वर्धुनि विवेकस्ते नयसे पापिनो दिवं ॥<br>साधु दूति पुनः साधु कर्त्तव्यं किमतः परं ।<br>यन्मदर्थे विलूनासि दन्तैरपि नखैरपि" ॥ १०१ |
| व्याजोक्तिः —— १०२ | "व्याजोक्तिरन्यहेतूक्त्या यदाकारस्य गोपनं" । १०२ | "सखि पश्य गृहारामपरागैरस्मि धूसरा" ॥ १०२ |
| व्यतिरेकः —— १०३ | "व्यतिरेको विशेषश्चेदुपमानोपमेययोः" । १०३ | "शैला इवोन्नताः सन्तु किन्तु प्रकृतिकोमलाः" ॥ १०३ |
| शुद्धापह्नुतिः —— १०४ | "शुद्धापह्नुतिरन्यस्यारोपार्थो धर्म्मनिह्नवः" । १०४ | "नायं सुधांशुः किं तर्हि व्योमगङ्गासरोरुहं" ॥ १०४ |
| श्लेषः —— १०५<br>स च त्रिविधः । प्रकृतानेकविषयः १ अप्रकृतानेकविषयः २ प्रकृताप्रकृतानेकविषयः ३ । | "नानार्थसंश्रयः श्लेषो वर्ण्यावर्ण्योभयाश्रयः" । १०५ | "सर्व्वतो माधवः पायात् स यो गङ्गामदीधरत् ॥<br>अब्जेन त्वन्मुखं तुल्यं हरिणा हतशक्तिना ।<br>उच्चरद्भूरिकीलालः शुशुभे वाहिनीपतिः" ॥ १०५ |
| सदर्थनिदर्शना —— १०६ | "विभावनं सम्पदानां फलं सुहृदनुग्रहः" । १०६ | "उदयन्नेव सविता पद्मेष्वर्पयति श्रियं" ॥ १०६ |
| सन्देहः —— १०७ | "स्यात् स्मृतिभ्रान्तिसन्देहैस्तदङ्कालङ्कृतित्रयं" ।१०७ | "पङ्कजं वा सुधांशुर्व्वेत्यस्माकन्तु न निर्णयः" ॥ १०७ |
| समं —— १०८<br>तत् त्रिविधं । | "समं स्याद्वर्णनं यत्र द्वयोरप्यनुरूपयोः ।<br>सारूप्यमपि कार्य्यस्य कारणेन समं विदुः ।<br>विना यत्नेन तत्सिद्धिर्यदर्थं कर्त्तुमुद्यमः" । १०८ | "स्वानुरूपं कृतं सद्म हारेण कुचमण्डलं ॥<br>नीचप्रवणता लक्ष्मि जलजायास्तवोचिता ॥<br>युक्तो वारणलाभोऽयं भूपतेर्वारणार्थिनः" ॥ १०८ |
| समाधिः —— १०९ | "समाधिः कार्य्यसौकर्य्यं कारणान्तरसन्निधेः" । १०९ | "उत्कण्ठिता च कुलटा जगामास्तञ्च भानुमान्" ॥१०९ |
| समासोक्तिः —— ११० | "समासोक्तिः परिस्फूर्त्तिः प्रस्तुते प्रस्तुतस्य चेत्" ।११० | "अयमैन्द्रीमुखं पश्य रक्तश्चुम्बति चन्द्रमाः" ॥ ११० |
| समुच्चयः —— १११<br>स द्विविधः । | "बहूनां युगपद्भावानां भावगुम्फः समुच्चयः ।<br>अहं प्रथमिकाभाजामेककार्य्यान्वयोऽपि सः" ।१११ | "नश्यन्ति पश्चात् पश्यन्ति भश्यन्ति च तव द्विषः ॥<br>कं शीलं वयो विद्या धनञ्च मदयत्यमुं" ॥ १११ |
| सम्बन्धातिशयोक्तिः —— ११२<br>लक्षणभेदेन सा द्विधा । | "सम्बन्धातिशयोक्तिः स्यादयोगे योगकल्पनं ।<br>योगेप्ययोगसम्बन्धातिशयोक्तिरितीर्य्यते" । ११२ | "सौधाग्राणि पुरस्यास्य स्पृशन्ति विधुमण्डलं ।<br>त्वयि दातरि राजेन्द्र स्वर्द्रुमान्नाद्रियामहे" ॥ ११२ |
| सम्भावनं —— ११३ | "सम्भावनं यदीत्थं स्यादित्यूहोऽन्यस्य सिद्धये" । ११३ | "यदि शेषोऽभवद्वक्ता कथिताः स्युर्गुणास्तव" ॥ ११३ |
| सहोक्तिः —— ११४ | "सहोक्तिः सहभावश्चेद्भासते जनरञ्जनः" । ११४ | "दिगन्तमगमत्तस्य कीर्त्तिः प्रत्यर्थिभिः सह" ॥११४ |
| सामान्यं —— ११५ | "सामान्यं प्रकृतस्यान्यतादात्म्यं सदृशैर्गुणैः" । ११५ | "मल्लिकाचितधम्मिल्लाश्चारुचन्दनचर्च्चिताः ।<br>अविभाव्याः सुखं यान्ति चन्द्रिका अभिसारिकाः" ॥११५ |
| सारः —— ११६ | "उत्तरोत्तरमुत्कर्षः सार इत्यभिधीयते" । ११६ | "मधुरं मधु पीयूषं तस्मात् तस्मात् कवेर्वचः" ॥११६ |
| सूक्ष्मं —— ११७ | "सूक्ष्मं पराशयाभिज्ञे तरसाकूतचेष्टितं" ।११७ | "मयि पश्यति सा केशैः सीमन्तमणिमावृणोत्" ॥ ११७ |
| लोकोक्तिः —— ११८ | "लोकोक्तिर्यच्च लोकोक्तेः स्यादर्थान्तरगर्भिता" ।११८ | "भुजङ्ग एव जानीते भुजङ्गचरणं सखे" ॥ ११८ |
| स्वभावोक्तिः —— ११९ | "स्वभावोक्तिः स्वभावस्य जात्यादिस्थस्य वर्णनं" ।११९ | "कुरङ्गैरुत्तरङ्गाक्षैः स्तब्धकर्णैः समीक्ष्यते" ॥ ११९ |

| अथालङ्कारनामानि | तल्लक्षणानि | तदुदाहरणानि |
| --- | --- | --- |
| भ्रान्तिमान् —— १२० | "स्यात् स्मृतिभ्रान्तिसन्देहैस्तदङ्गालङ्कृतित्रयं" ।१२० | "पङ्कजं पश्यतः कान्ता मुखं मे गाहते मनः" ॥१२० |
| हेतुः —— १२१ | "हेतोर्हेतुमता सार्द्धं वर्णनं हेतुरुच्यते । | "असावुदेति शीतांशुर्मानच्छेदाय सुभ्रुवां ॥ |
| स द्विविधः । | हेतुर्हेतुमतोरैक्यवर्णनं हेतुरुच्यते" । १२१ | लक्ष्मीविलासो विदुषां कटाक्षो वेङ्कटप्रभोः" ॥१२१ |
| हेत्वपह्नुतिः —— १२२ | "शुद्धापह्नुतिरन्यस्यारोपार्थो धर्म्मनिह्नवः । | "नेन्दुस्तीव्रो न निशायां सिन्धोरौर्वोऽयमुत्थितः" ॥ |
| | स एव युक्तिपूर्व्वश्चेदुच्यते हेत्वपह्नुतिः" । १२२ | १२२ |

---

अलङ्क्रिया, स्त्री, (अलम् + कृ + भावे श ।) भूषितकरणं । तत्पर्य्यायः । भूषा २ । इत्यमरः ॥

अलङ्कृतः, त्रि, (अलम् + कृ + कर्म्मणि क्तः ।) अलङ्कारयुक्तः । तत्पर्य्यायः । भूषितः २ प्रसाधितः ३ परिष्कृतः ४ मण्डितः ५ । इत्यमरः ॥
("अलङ्कृतं जनाकीर्णं विविशुर्वारणावतम्" ।
इति महाभारते ।)

अलञ्जरः, पुं, (अलम् + जॄ + अच् ।) मृण्मयवृहज्जलधरपात्रं । जाला इति ख्यातः । तत्पर्य्यायः । अलिञ्जरः २ मणिकं ३ । इत्यमरटीकायां भरतः ॥

अलतिः, पुं, (अल + बाहुलकात् अतिच् ।) गीतविशेषः । इत्युणादिकोषः ॥

अलन्धूमः, पुं, (अलमत्यर्थं धूमः ।) धूमसमूहः । इति जटाधरः ॥

अलम्, व्य, भूषणं । पर्य्याप्ता । सामर्थ्यं । निषेधः । इत्यमरः ॥ निरर्थकं । इति भरतः ॥

अलम्बुषः, पुं, (अलं पुष्णाति, पुष + क, पृषोदरादित्वात् पस्य बः ।) प्रहस्तः । वमनं । राक्षसविशेषः ॥ इति मेदिनी ॥ (कुरुक्षेत्रयुद्धे कौरवाणां सहायः स्वनामख्यातो राक्षसः ।
"सात्यकिश्चापि संक्रुद्धो राक्षसं क्रूरमाहवे ।
अलम्बुषं शरैर्घोरैर्विव्याध बलिनां बली" ॥
इति महाभारते ।)

अलम्बुषा, स्त्री, (अलं पुष्णाति, पुष + क, पस्य बः, ततः स्त्रियां टाप् ।) मुण्डीरी । स्वर्गवेश्याभेदः । इति मेदिनी ॥
("अलम्बुषा मिश्रकेशी पुण्डरीका तिलोत्तमा ।
सुरूपा लक्षणा क्षेमा तथा रम्भा मनोरमा" ॥
इति महाभारते ।) अन्यप्रवेशवारणार्थदत्तरेखादिः ॥ लज्जालुभेदः । तत्पर्य्यायः । खरत्वक् २ मेदः ३ गला ४ । अस्या गुणाः । लघुत्वं । स्वादुत्वं । कृमिपित्तकफनाशित्वञ्च । इति राजनिर्घण्टः ॥
(भावप्रकाशस्य ॥
"अलम्बुषा गोक्षुरकं त्रिफला नागरा मृताः ।
यथोत्तरं भागवृद्ध्या श्यामाचूर्णन्तु तत्समं ॥
पिबेन्मस्तुसुरातक्रकाञ्जिकोष्णोदकेन वा ।
पीतं जयत्यामवातं सशोथं वातशोणितं ॥
त्रिकजानूरुसन्धिस्थं ज्वरारोचकनाशनं ।
मण्डलाद्धान्यत्रिफला भागवृद्ध्यावयं क्रमः" ॥ * ॥
अलम्बुषाद्यं चूर्णम् ॥ * ॥ इति वैद्यकचक्रपाणिसंग्रहः ॥
"अलम्बुषा गोक्षुरकं मूलं वरुणकस्य च ।
गुडूची नागरञ्चेति समभागानि कारयेत् ॥
काञ्जिकेन तु तत्पेयं त्रिकाजयदमाक्षकं ।
आमवाते प्रवृद्धे च योगोऽयममृतोपमः ॥ * ॥
अपराजम्बुषाद्यं चूर्णं ॥ * ॥ इति च भावप्रकाशे ॥)

अलर्कः, पुं, (अलमर्च्यतेऽर्थ्यते वा, अर्च + घञ्, अर्थ + घञ् वा ।) क्षिप्तकुक्कुरः । ("आलर्कं विषमिव सर्व्वतः प्रसृप्तम्" । इति उत्तरचरिते ।) श्वेतार्कवृक्षः । श्वादा आकन्द इति भाषा ।
(अस्य पर्य्यायान्तरं गुणान्तरञ्च यथा—
"अलर्को गणरूपः स्यान्मन्दारो वसुकोऽपि च ।
श्वेतपुष्पः सदापुष्पः सबालार्कः प्रतापसः ॥
रक्तोऽपरोऽर्कनामा स्यादर्कपर्णो विकीरणः ।
रक्तपुष्पः शुक्लफलस्तथास्फोटः प्रकीर्त्तितः ॥
अर्कद्वयं सरं वातकुष्ठकण्डूविषव्रणान् ।
निहन्ति प्लीहगुल्मार्शःश्लेष्मोदरशकृत्कृमीन् ॥
अलर्ककुसुमं वृष्यं लघुदीपनपाचनं ।
अरोचकप्रसेकार्शःकासश्वासनिवारणम्" ॥
इति भावप्रकाशः ॥
"दुष्टकर्द्दमसंस्पर्शात् कण्डूक्लेदान्वितान्तराः" ।
अङ्गुल्योऽलस मित्याहुः ॥ इति वाभटः ॥)
तत्पर्य्यायः । प्रतापसः २ राजार्कः ३ गणरूपी ४ । इति रत्नमालामरौ ॥ शूकराकाराष्टपादतीक्ष्णदन्तसूच्याकृतिलोमजन्तुविशेषः । दंशनामासुरो भृगुशापात् अयं जन्तुर्भूत्वा कर्णस्योरुं भित्त्वा परशुरामदृष्टिपातात् शापमुक्तः पूर्व्वरूपो बभूव । इति महाभारते राजधर्म्मे ॥
("ददर्श रामस्तं चापि कृमिं शूकरसन्निभं ।
अष्टपादं तीक्ष्णदंष्ट्रं सूचीभिरिव संवृतं ॥
रोमभिः संनिरुद्धाङ्गमलर्कं नाम नामतः ।
सोऽब्रवीदहमासं प्राग्दंशो नाम महासुरः ।
पुरा देवयुगे तात ! भृगोस्तुल्यवया इव ।
सोऽहं भृगोः सुदयितां भार्य्यामपहरं बलात् ॥
महर्षेरभिशापेन कृमिभूतोऽपतं भुवि" ।
स्वनामख्यातो नृपतिः ।
"शैब्यः श्येनकपोतीये स्वमांसं पक्षिणे ददौ ।
अलर्कश्चक्षुषी दत्वा जगाम गतिमुत्तमाम्" ॥
इति रामायणे । स्वनामख्यातः काशिराजः, स हि वत्सराजस्य पुत्रः सन्नतेश्च पिता, यथा हरिवंशे,—
"वत्सपुत्रस्त्वलर्कस्तु सन्नतिस्तस्य चात्मजः ।
अलर्कः काशिराजस्तु ब्रह्मण्यः सत्यसङ्गरः ॥
षष्टिं वर्षसहस्राणि षष्टिं वर्षशतानि च ।
तस्यासीत् समनुज्ञातं रूपयौवनशालिनः" ।)

अलले, व्य, पिशाचभाषायां सम्बोधनं । तत्पर्य्यायः । अरे २ अररे ३ । इति शब्दरत्नावली ॥

अलवालं, क्ली, (लवमालाति, ला + क, ततो नञ्समासः ।) आलवालं । वृक्षमूले जलधारणार्थकृतालिः । थाल्हा इति ख्यातः । इत्यमरटीकायां भरतादयः ॥

अलवालकं, क्ली, (अलवाल एव, अलवाल + स्वार्थे कन् ।) आलवालं । इति शब्दरत्नावली ॥

अलसः, त्रि, (न लसति आश्रियते, लस + अच् ।) आलस्ययुक्तः । आल्स्या इति भाषा । तत्पर्य्यायः । मन्दः २ तुन्दपरिमृजः ३ आलस्यः ४ शीतकः ५ अनुष्णः ६ । इत्यमरः ॥ शीतलः ७ कुण्ठः ८ मुखनिरीक्षकः ९ । इति शब्दरत्नावली ॥ (क्रियामन्दः । क्रियाजडः । अवश्यकर्त्तव्येषु अप्रवृत्तिशीलः । "अव्यवसायिनमलसं दैवपरं साहसाच्च परिहीनं । प्रमदेव वृद्धपतिं नेच्छत्युपगूहितुं लक्ष्मीः" । इति हितोपदेशे ।)

अलसः, पुं, (लस + अच्, ततो नञ्समासः ।) वृक्षविशेषः । पादरोगभेदः । इति मेदिनी ॥ पाँकुइ इति भाषा । तस्य निदानरूपे ।
"क्लिन्नाङ्गुल्यन्तरौ पादौ कण्डूदाहरुजान्वितौ ।
दुष्टकर्द्दमसंस्पर्शादलसं तं विभावयेत्" ॥
अलसं काददे इति लोके । अथ तस्य चिकित्सा ।
"पादौ सिक्तारनालेन लेपनं त्वलसे हितं ।
पटोलकुलटीनिम्बरोचनामरिचैस्तिलैः ॥
दुग्धाश्वरससिद्धेन कटुतैलेन लेपयेत् ।
ततः कासीसकुलटीतिलचूर्णैर्व्विचूर्णयेत्" ॥
अवधूलयेत् ।
"करञ्जवीजं रजनी कासीसं पद्मकं मधु ।
रोचना हरितालञ्च लेपोऽयमलसे हितः" ॥
इति भावप्रकाशः ॥ ("दुष्टकर्द्दमसंस्पर्शात् कण्डूक्लेदान्वितान्तराः । अङ्गुल्योऽलसमित्याहुः" ॥
इति वाभटः ॥)

अलसकः, पुं, (न लस्यति अनेन, लस + करणे वुन् ।) उदररोगविशेषः । इति माधवकरः ॥ तस्य रूपं ।
"कुक्षिरानह्यतेऽत्यर्थं प्रताम्येत् परिकूजति ।
निरुद्धो मारुतश्चैव कुक्षावुपरि धावति ॥
वातवर्चोनिरोधश्च यस्यात्यर्थं भवेदपि ।
तस्यालसकमाचष्टे तृष्णोद्गारौ तु यस्य च" ॥
तन्त्रान्तरे ।
"प्रयाति नोर्द्धं नाधस्तादाहारो न च पच्यते ।
आमाशयेऽलसीभूतस्तेन सोऽलसकः स्मृतः" ॥
अस्य लक्षणं चिकित्सा च अजीर्णशब्दे द्रष्टव्या ॥
(अलसकमुपदेक्ष्यामः । दुर्ब्बलस्याल्पाग्नेर्बहुश्लेष्मणो वातमूत्रपुरीषवेगविधारिणः स्थिरगुरुबहुरूक्ष-

शीतमुष्णाम्बसेवितमन्नपानमनिलप्रपीडितं श्लेष्मणा च विबद्धमार्गमतिमात्रप्रलीनमलसत्वान्न बहिर्मुखी भवति । ततश्छर्दीसारवर्ज्यान्यामप्रदोषलिङ्गान्यभिदर्शयति अतिमात्राणि । अतिमात्रप्रदुष्टाश्च दोषाः प्रदुष्टामबद्धमार्गास्तिर्य्यग्गच्छन्तः कदाचित् केवलमेवास्य शरीरं दण्डवत् स्तम्भयन्ति । ततस्तमलसकमसाध्यं ब्रुवते ।
विरुद्धाध्यशनाजीर्णाशनशीलिनः पुनरेव दोषमामविषमित्याचक्षते भिषजो विषसदृशलिङ्गत्वात् । तत्परमसाध्यमाशुकारित्वात् विरुद्धोपक्रमत्वाच्चेति । तत्र साध्यमामं प्रदुष्टमलसीभूतमुल्लेखयेत् । पाययित्वा सलवणमुष्णवारि । ततः स्वेदनवर्त्तिप्रणिधानाभ्यामुपाचरेदुपवासयेच्चैनम् ।
इति चरकः ॥)

अलसा, स्त्री, ( लस + अच्, ततो नञ्समासः, स्त्रियां टाप् ।) हंसपदीलता । इति मेदिनी ॥
हंसपदीशब्देऽस्या गुणादयो ज्ञेयाः ॥

अलसेक्षणा, स्त्री, (अलसे ईक्षणे यस्याः सा ।) स्त्रीविशेषः । सा अलसदृष्टियुक्ता । इति हेमचन्द्रः ॥

अलक्षणं, क्ली, ( लक्षणमनुमापकं लक्षणं, विरोधे नञ्, नञ्समासः ।) दुर्लक्षणं । मन्दचिह्नं ।
("आचाराद् धनमक्षय्यमाचारो हन्त्यलक्षणम्"।
इति मनुः ।) तद्विशिष्टे त्रि ॥

अलक्ष्मीः, स्त्री, (न लक्ष्मीः, नञत्र विरोधे ।) नरकदेवता । तत्पर्य्यायः । निर्ऋतिः २ । इत्यमरः ॥ कालकर्णी ३ । इति शब्दरत्नावली ॥ कालकर्णिका ४ । इति जटाधरः ॥ ज्येष्ठादेवी ५ इति माघोत्तरखण्डं ॥ तस्या विवरणं ज्येष्ठाशब्दे द्रष्टव्यं ॥ * ॥ दीपान्विताऽमावास्यायां तस्याः पूजाविधिर्यथा । तत्र प्रदोषे आदौ आचारादलक्ष्मीपूजनं । इत्याचार्य्यचूडामणिप्रभृतयः ॥ गोमयपुत्तलिकां निर्माय वामहस्तेन कृष्णपुष्पं गृहीत्वा ध्यायेत् ।
"अलक्ष्मीं कृष्णवर्णां द्विभुजां कृष्णवस्त्रपरीधानां लौहाभरणभूषितां शर्कराचन्दनचर्चितां गृहसम्मार्ज्जनीहस्तां गर्दभारूढां कलहप्रियाम्" । इति ध्यात्वा विमुखेन "ॐ अलक्ष्म्यै नमः" इत्यनेन निर्म्माल्येन कृष्णपुष्पेण संपूज्य प्रणमेत् ।
"(ॐ)अलक्ष्मीस्त्वं कुरूपासि कुत्सितस्थानवासिनी ।
सुखरात्रौ मया दत्तां गृह्ण पूजाञ्च शाश्वतीम् ॥
दारिद्र्यकलहप्रिये देवि ! त्वं धननाशिनी ।
याहि शत्रोर्गृहे नित्यं स्थिरा तत्र भविष्यसि ॥
यदि त्वं मे महाभागे प्रीता भवसि सर्व्वदा ।
पुत्रबन्धुकलत्रेषु कदाचिन्नागमिष्यसि ॥
गच्छ त्वं मन्दिरं शत्रोर्गृहीत्वा चाशुभं मम ।
मदाश्रयं परित्यज्य स्थिरा तत्र भविष्यसि" ॥
ततः शूर्पवाद्येन सीमान्ते तां विसृजेत् ।
इति कालचन्द्रिका ॥ * ॥ किञ्च,—
"एवं गते निशीथे तु नारी च स्वगृहाङ्गणात् ।
अलक्ष्मीञ्च बहिष्कार्य्या अमन्त्रञ्च यथाविधि" ॥
इति ब्रह्मवैवर्त्तं भविष्यपुराणं ॥ * ॥
"एवं गते निशीथे तु जने निद्रार्द्धलोचने ।
तावन्नगरनारीभिः शूर्पडिण्डिमवादनैः ॥
निष्काश्यते प्रहृष्टाभिरलक्ष्मीः स्वगृहाङ्गणात्" ॥
इति निर्णयसिन्धौ मदनरत्नब्रह्मभविष्यपुराणं ॥

अलातं, क्ली, (ला + क्त, नञ्समासः ।) अङ्गारः । इत्यमरः ॥ (अर्द्धदग्धकाष्ठः ।
"कुरुतेऽस्मिन्नमोघेऽपि निर्व्वाणालातलाघवम्" ।
इति कुमारसम्भवे ।)

अलाबुः, पुं, स्त्री, (न लम्बते, न + लबि ऊर्ध्वे नलोपश्च वृद्धिः ।) लताविशेषः तत्फलञ्च । लाउ इति ख्याता । तत्पर्य्यायः । तुम्बः २ तुम्बकः ३ तुम्बा ४ तुम्बी ५ पिण्डफला ६ महाफला ७ आलाबुः ८ एलाबुः ९ लाबुः १० लाबुका ११ । इत्यमरस्तट्टीका च ॥ तुम्बिका १२ तुम्बिः १३ अलाबुः १४ । इति शब्दरत्नावली ॥ अस्या गुणाः ।
"अलाबुः कथिता तुम्बी द्विधा दीर्घा च वर्त्तुला
मिष्टं तुम्बीफलं हृद्यं पित्तश्लेष्मापहं गुरु ॥
वृष्यं रुचिकरं प्रोक्तं धातुपुष्टिविवर्द्धनं" ।
इति भावप्रकाशः ॥ भेदकत्वं कफकारित्वं । गुरुपाकित्वं । हिमत्वं । पित्तनाशित्वञ्च । तन्नाडीगुणाः । गुरुत्वं । मधुरत्वं ॥ मलभेदकत्वं । वातश्लेष्मकारित्वं । रूक्षत्वं । शीतलत्वं । पित्तनाशित्वञ्च । इति राजवल्लभः ॥
("वर्चोभेदीन्यलाबूनि रूक्षशीतगुरूणि च" ।
इति चरकश्च ।
"अलाबुर्भिन्नविट्का तु रूक्षा गुर्व्वतिशीतला" ।
इति च सुश्रुतः ॥ )

अलारं, क्ली, (अरार्यते, ऋ + यङ्लुक् + अच् रस्य लः ।) कवाटं । इति शब्दरत्नावली ॥

अलिः, पुं, स्त्री, (अलति दंशे समर्थो भवति यः, सः, अल + इन् ।) भ्रमरः ।
("अलिपङ्क्तिरनेकशस्त्वया,
गुणकृत्ये धनुषो नियोजिता" ।
इति कुमारसम्भवे ।
"अनुगतमलिवृन्दैर्गण्डभित्तीर्विहाय" ।
इति रघुवंशे ।) वृश्चिकः । इत्यमरः ॥ काकः । कोकिलः । इति शब्दरत्नावली॥ मदिरा । इति मेदिनी ॥ (वृश्चिकराशिः ।)

अलिकं, क्ली, (अल्यते भूष्यते, अल + कर्म्मणि इकन् ।) ललाटं । इत्यमरः ॥

अलिकुलसङ्कुलः, पुं, (अलिकुलेन सङ्कुलः व्याप्तः, तृतीयातत्पुरुषः ।) कुब्जकवृक्षः । इति राजनिर्घण्टः ॥

अलिगर्द्दः, पुं, (अलिरिव वृश्चिक इव गर्द्धति, गृध + अच ।) जलसर्पः । आलाध इति ख्यातः । इति शब्दरत्नावली ॥

अलिजिह्वा, स्त्री, (अलिरिव क्षुद्रा जिह्वा, ।) जिह्वोपरि क्षुद्रजिह्वा । आलजिब इति ख्याता । इति शब्दरत्नावली ॥

अलिजिह्विका, स्त्री, ( अलिजिह्वा एव स्वार्थे कन्; टाप् ।) अलिजिह्वा । इति शब्दरत्नावली ॥

अलिञ्जरः, पुं, (अल + इन, अलिं सामर्थ्यं जरयति नाशयति वा, अलि + जृ + अच्, पृषोदरादित्वात् साधुः ।) मृदादिनिर्म्मितजलाधारविशेषः । आल इति ख्यातः । इत्यमरः ॥
("उदकान्तमुपनीय मत्स्यं वैवस्वतो मनुः ।
अलिञ्जरे प्राक्षिपत्तं चन्द्रांशुसदृशप्रभम्" ॥
इति महाभारते ।)

अलिदूर्व्वा, स्त्री, (अलिरिवाकारेण दूर्व्वा ।) मा[illegible]दूर्व्वा । इति राजनिर्घण्टः ॥

अलिन्दः, पुं, ( अलते भूष्यते, अल + कर्म्मणि बाहुलकात् किन्दच् ।) बहिर्द्वारस्थचत्वरभूमिः । तत्पर्य्यायः । प्रघाणः २ प्रघणः ३ बहिर्द्वारप्रकोष्ठः ४ आलिन्दः ५ । इत्यमरः ॥ गृहद्वारपिण्डकः । अलिन्दः नास्तीति अलम् इन्द्रकस्यादिः । यस्यामलिन्देषु न चक्रुरेवेति माघः । स्वार्थे ण्यो आलिन्दो दीर्घादिरपि ।
"गृहैकदेशे आलिन्दः प्रघाणःप्रघणस्तथा" ।
इत्यमरदत्तः । अथ पिण्डक आलिन्द इति चतु[illegible] इह तूभयमेव श्लेषादिति साम्प्रतं ।
इत्यमरटीकायां भरतः ॥*॥ अन्यच्च ।
"प्रघाणप्रघणालिन्दा द्वारबाह्यप्रकोष्ठके ।
गृहाभ्यन्तरशय्यार्थपिण्डिकायामपि त्रयं ॥
आलिन्दः स्यादलिन्दोऽपि स्यादलिन्दक इत्यपि" ।
इति शब्दरत्नावली ॥
("शुकाङ्गनीलोपलनिर्म्मितानां
लिप्तेषु भासा गृहदेहलीनां ।
यस्यामलिन्देषु न चक्रुरेव
मुग्धाङ्गना गोमयगोमुखानि ॥"
इति माघः ।)

अलिपकः, पुं, स्त्री, (कुत्सितवर्णेन लिप्यते, लिप बाहुलकात् कर्म्मणि वुन् ।) भ्रमरः । कोकिलः । कुक्कुरः । इति मेदिनी ॥ (वृश्चिकः ।)

अलिपत्रिका, स्त्री, (अलिर्वृश्चिक इव पत्रमस्याः कपि अत इत्वम् ।) वृश्चिकाख्यक्षुपः । इति राजनिर्घण्टः ॥

अलिपर्णी, स्त्री, (अलिरिव पर्णमस्याः, ङीप् ।) वृश्चिकालीवृक्षः । इति राजनिर्घण्टः ॥

अलिप्रियं, क्ली, (अलीनां प्रियं षष्ठीतत्पुरुषः) रक्तोत्पलं । रक्तपद्मं । इति त्रिकाण्डशेषः ॥

अलिप्रिया, स्त्री, (अलीनां प्रिया, षष्ठीतत्पुरुषः) पाटलावृक्षः । इति रत्नमाला ॥

अलिमकः, पुं, (अलिरिव मक्कते, मक्क + [illegible] पृषोदरादित्वात्कलोपः ।) भेकः । कोकिलः । भ्रमरः । पद्मकेशरः । मधूकवृक्षः । इति मेदिनी ॥

अलिमोदा, स्त्री, ( अलीन् मोदयति मुद + णिच् + अच् ।) गणिकारीवृक्षः । इति राजनिर्घण्टः ॥

अलिम्पकः, पुं, (न + लिपि + वुन् ) पद्मकेशरः । भेकः । भ्रमरः । कोकिलः । इति शब्दरत्नावली ॥ (कुक्कुरः । मधूकवृक्षः ।)

अलिवाहिनी, स्त्री, (अलिं वाहयति गन्धेन, [illegible] + णिच् + णिनि + ङीप् ।) केविकापुष्पं । [illegible] राजनिर्घण्टः ॥

अली, [ न् ] पुं, (अलं वृश्चिकपुच्छस्थकण्टकं [illegible]तेऽस्य इनि ।) भ्रमरः ।

("मलिनिमालिनि माधवयोषिताम्"।
इति माघः।) वृश्चिकः। इति मेदिनी॥

अलीकं, क्ली, (अल + ईकन्।) अप्रियं। ("तद्यथा स महाराजो नालीकमधिगच्छति"। इति रामायणे।) मिथ्या। इत्यमरः॥ ("वातेऽलीकनिमीलिते नयनयोः"। इति अमरुशतके।) स्वर्गः। इति मेदिनी॥ ललाटं। इति हेमचन्द्रः॥

अलीकं, त्रि, (अल + ईकन्।) मिथ्या। अप्रियं। अल्पं। इति शब्दरत्नावली॥

अलीकमत्स्यः, पुं, अङ्गारक्षिप्ततिलतैलाक्तमाषपिष्टं। तस्य प्रमाणं राजनिर्घण्टे यथा।
"माषपिष्टिकया लिप्तनागवल्लीदलैर्भृत्।
ततु संस्वेद्य इत्युक्ता खाद्यामङ्गारकोपरि॥
ततो निष्काशितं खण्डं तिलतैलेन भर्ज्जयेत्।
अलीकमत्स्य उक्तोऽयं प्रकारः पाकपण्डितैः॥
तं हिङ्गुवटिचेन वास्तूकेन च भक्षयेत्॥"

अलुः, स्त्री, (अल + उन्।) आलुः। क्षुद्रकलसी। इत्यमरटीकायां रमानाथः॥

अलुब्धः, त्रि, (लुभ + क्तः, नञ्समासः।) लोभरहितः। यथा मनुः।
"एकोऽप्यलुब्धः साक्षी स्यात् बह्व्यः शुच्योऽपि न स्त्रियः। स्त्रीबुद्धेरस्थिरत्वात्तु दोषैश्चान्येऽपि ये वृताः"॥
"एकोऽलुब्धस्तु साक्षी स्यादिति कुल्लूकभट्टधृतपाठः।" इति व्यवहारतत्त्वं॥
("अलुब्धैः स्निग्धैः प्रबुद्धैश्चामात्यैः परिवृतः'। इति कादम्बरी।)

अले, व्य, मिथ्याप्रभावया सम्बोधनं। इति शब्दरत्नावली॥

अलेले, व्य, मिथ्याप्रभावया सम्बोधनं। इति शब्दरत्नावली॥

अलोभः, पुं, (न लोभः, अभावे नञ्।) लोभाभावः। यथा,—
"इज्याध्ययनदानानि तपः सत्यं धृतिः क्षमा।
अलोभ इति मार्गोऽयं धर्म्मस्याष्टविधः स्मृतः"॥
इति महाभारतं॥

अलोभी, [न्] त्रि, (लोभोऽस्त्यस्य इति लोभी, न लोभी इति नञ्समासः।) लोभशून्यव्यक्तिः। नास्ति लोभो यस्य इति बहुव्रीहिसमासादिन्-प्रत्ययविभ्रमः॥

अलोहितं, क्ली, (न लोहितं, नास्ति लोहितं यस्मात् इति वा।) रक्तपद्मं। इति रत्नमाला॥

अलौकिकः, त्रि, (लोके विदितः, लोक + ठक् ततोनञ्समासः।) लौकिकप्रत्यक्षाविषयः। अमानुषिकः। लोकातीतः। यथा,—
"अलौकिकत्वादमरः स्वकोषे
न यानि नामानि समुल्लिलेख।
विलोक्य तैरप्यधुना प्रचार-
मयं प्रयत्नः पुरुषोत्तमस्य"॥
इति त्रिकाण्डशेषद्वितीयश्लोकः॥
("उपसंहर विश्वात्मन्नदोरूपमलौकिकम्"। इति भागवतपुराणम्।)

अल्पं, त्रि, (अल् + प।) किञ्चित्। तत्पर्य्यायः। ईषत् २ मनाक् ३ स्तोकं ४।
("अल्पोऽप्येवं महान् वापि विक्रयस्तावदेव सः"। इति मनुः।) क्षुल्लकं ५ स्वल्पं ६ दभ्रं ७ कृशं ८ तनुः ९ तनूः १० त्रुटिः ११ त्रुटी १२ मात्रा १३ लवः १४ लेशः १५ कणः १६ कणी १७ कलिका १८ अणुः १९ सूक्ष्मं २०। इत्यमरः॥ क्षुद्रं २१ क्षुल्लकं २२ खल्लं २३ काष्ठा २४। इति शब्दरत्नावली। (अतिसामान्यः।
"अल्पस्य हेतोर्बहु हातुमिच्छन्
विचारमूढः प्रतिभासि मे त्वम्"।
इति रघुवंशे। संक्षिप्तं। अदीर्घं।
"अनन्तपारं किल शब्दशास्त्रं,
स्वल्पं तथायुर्बहवश्च विघ्नाः"।
इति पञ्चतन्त्रम्।)

अल्पकः, पुं, (अल्प एव, अल्प + स्वार्थे कन्।) यवासकः। इति राजनिर्घण्टः॥ अस्य गुणाः॥
"यासः स्वादुः सरस्तिक्तस्तुवरः शीतलो लघुः।
कफमेदोमदभ्रान्तिपित्तासृक्कुष्ठकासजित्॥
तृष्णाविसर्पवातास्रवमिज्वरहरः स्मृतः।
यवासस्य गुणैस्तुल्या बुधैरुक्ता दुरालभा"॥
इति भावप्रकाशः।) (स्वल्पपरिमितः। किञ्चित्।
"यदावगच्छेदायत्यामाधिक्यं ध्रुवमात्मनः।
तदात्वे चाल्पिकां पीडां तदा सन्धिं समाश्रयेत्"॥
इति मनुः।)

अल्पकेशी, स्त्री, (अल्पः केश इव पत्रमस्याः सा।) भूतकेशीवृक्षः। इति रत्नमाला॥

अल्पगन्धं, क्ली (अल्पो गन्धो यस्य तत्।) रक्तकैरवं। इति रत्नमाला॥

अल्पतनुः, त्रि, (अल्पा क्षुद्रापरिमाणा तनुर्यस्य।) खर्व्वः। दुर्ब्बलः। अल्पास्थियुक्तः। क्षुद्रदेहवान्। तत्पर्य्यायः। पृश्निः २। इत्यमरः॥

अल्पपत्रः, पुं, (अल्पं पत्रं यस्य सः।) क्षुद्रपत्रतुलसी। इति रत्नमाला॥

अल्पपद्मं, क्ली, (अल्पमसम्पूर्णं पद्मं।) रक्तपद्मं। इति रत्नमाला॥

अल्पप्रमाणकः, पुं, (अल्पं प्रमाणमस्य, वा कप्।) चेलानं। इति रत्नमाला॥ चेलो चेला तरमूज इति ख्यातः। खरमूज इति केचित्।

अल्पमारिषः, पुं, (अल्पः क्षुद्रः मारिषः नटिया इति ख्यातः शाकः, कर्म्मधारयः।) शाकविशेषः। क्षुद्रनटिया इति ख्यातः। तत्पर्य्यायः तण्डुलीयः २। इत्यमरः॥ (तण्डुलीयशब्देऽस्य गुणा ज्ञेयाः।)

अल्पसरः, [स्] क्ली, (अल्पं क्षुद्रं सरः, कर्म्मधारयः।) क्षुद्रसरोवरः। डोवा गेड़े इति भाषा। तत्पर्य्यायः। वेशन्तः २ पल्वलं ३। इत्यमरः॥

अल्पायुः, [स्] पुं, (अल्पं संक्षिप्तं आयुर्जीवनकालो यस्य सः।) छागः। इति त्रिकाण्डशेषः॥ अचिरजीविते त्रि॥ (अदीर्घजीवी।
"दुराचारो हि पुरुषो लोके भवति निन्दितः।
दुःखभागी च सततं व्याधितोऽल्पायुरेव च"।
इति मनुः।)

अल्पिष्ठः, त्रि, (अतिशयेन अल्पः, अल्प + इष्ठन्। अत्यल्पं। इत्यमरः॥ [अत्यल्पं। इत्यमरः॥

अल्पीयः, [स्] (अतिशयेन अल्पः, अल्प ईयसुन्।)

अल्लः, पुं, ( अल् + क। )
अल्ला, स्त्री, (अल + क, स्त्रियां टाप्।) } परमेश्वरः।

यवनभाषया यवना उपासन्ते। यथा। "ॐ अस्मल्लां इल्ले मित्रावरुणो दिव्यानि धत्ते। इल्लल्ले वरुणो राजा पुनर्ददुः। ह्यामि मित्रो इल्लां इल्लल्लेति इल्लाल्लां वरुणो मित्रो तेजस्कामाः। होतारमिन्द्रो होतारमिन्द्रो महासुरिन्द्राः। अल्लो ज्येष्ठं श्रेष्ठं परमं पूर्णं ब्रह्माणमल्लां अल्लोरसुल महमदरकं वरस्य अल्लो अल्लां आदल्लाबुकमेककं। अल्लां बुकं। निखातकं। अल्लो यज्ञेन हुतहुत्वा अल्ला सूर्य्यचन्द्रसर्व्वनक्षत्राः अल्ला ऋषीणां सदिव्या इन्द्राय पूर्व्वं मायापरमन्त अन्तरिक्षाः। अल्लो पृथिव्या अन्तरिक्षं विश्वरूपं दिव्यानि धत्ते इल्लल्ले वरुणो राजा पुनर्ददुः। इल्लाकबर इल्लाकबर इल्लल्लेति इल्लाल्लाः इल्ला इल्लल्ला अनादिस्वरूपा अथर्व्वणी शाखां हूँ ह्रीं जनान् पशून् सिद्धान् जलचरान् अदृष्टं कुरु कुरु फट्। असुरसंहारिणी ॐ अल्लो रसुरमहमदरकं वरस्य अल्लो अल्लां इल्लल्लेति इल्लल्लाः"। इत्याथर्व्वणसूक्तं।

अल्ला, स्त्री, (अल्यते इत्यल्, क्विप्, अले भूषायै लाति गृह्णाति, ला + क।) माध्योक्तौ माता। इति वोपदेवः॥ (अथर्व्ववेदे अल्लाल्लेत्यादिख्यातो यवनोपास्यः परमेश्वरः।)

अव रक्षणे। (यथायथं सकं-अकं-च, भ्वादिं-परं-सेट्।) गतौ। कान्तौ। स्पृहायामिति यावत्। प्रीतौ। तृप्तौ। श्रुतौ। शोभायामिति यावत्। श्रुतौ। आकर्णने इति यावत्। प्राप्तौ। श्लेषे। आलिङ्गने इति यावत्। अर्थने। याच्ञायामिति यावत्। वेशे। प्रवेशे इति यावत्। भावे। सत्तायामिति यावत्। वृद्धौ। ग्रहे। आदाने इति यावत्। वधे। सामर्थ्ये। अवगमे। क्षतौ। करणे इति यावत्। कामे। इच्छोत्पादने इति यावत्। (इति वोपदेवीयकविकल्पद्रुमः तट्टीका च॥) "अव रक्षे गतौ कान्तौ प्रीतौ तृप्तौ श्रुतौ क्षतौ। प्राप्तौ श्लेषेऽर्थने वेशे भागे वृद्धौ ग्रहे वधे। सामर्थ्येऽवगमे कामे द्युतौ"। ऊनविंशतिरर्थाः। कान्तिरिच्छा। द्युतिः शोभा। काम इति आत्मनावुत्पत्तेरिच्छोत्पादना इति भेदः। श्लेष आलिङ्गनं। सामर्थ्यं शक्तिः। रक्षणे प्रसिद्धोऽयं। प्रीतौ तु। "न मामवति सद्वीपा रत्नसूरपि मेदिनी"। इति रघुः॥ अन्यत्र विरलप्रयोगः। केचित्तु श्रुति-भाग-ग्रह-काम-द्युतीन् पठित्वा क्रिया-अवगम-दहन-भावानाहुः। अवति। इति दुर्गादासः॥

अव, व्य, (अव + अच्।) उपसर्गविशेषः। अस्यार्थः। निश्चयः। असाकल्यं। अनादरः। इति दुर्गादासः॥ आलम्बनं। विज्ञापनं। व्यापनं। शुद्धिः। अल्पं। परिभवः। नियोगः। पालनं। इति शब्दरत्नावली॥

अवकटं, क्ली, (अव + स्वार्थे कटच् ।) वैरूप्यं । अवात् कुटारश्च वैरूप्ये चकारात् कटच । इति गोयीचन्द्रधृतलक्षणं ॥

अवकरः, पुं, (अव + कृ + अप् ।) सम्मार्ज्जन्यादिनिःक्षिप्तधूल्यादिः । जञ्जाल इति ख्यातः । तत्पर्य्यायः । सङ्करः २ । इत्यमरः ॥ अवस्करः ३ । इत्यमरटीकायां मथुरानाथः ॥ सङ्कारः ४ । इति शब्दरत्नावली ॥ ("अवकरनिकरं विकिरति तत् किं कृकवाकुरिव हंसः" । इति नीतिशतके ।)

अवकलितः त्रि, (अव + कल + क्त ।) दृष्टः । इति भरती ॥

अवकाशः, पुं, (अव + काश + घञ् ।) अवस्थानदेशः । फाँक इति यावत् । अवसरः । व्याप्तिरहितस्थानं । इत्यन्तरशब्दटीकायां भरतः ॥
("न खल्वनन्तोरपि तावकस्य
तत्रावकाशो भवतः कथं स्यात्" ।
इति रत्नावलीनाटिकायाम् ।)
अपि च ।
"एवञ्च मञ्जूषादिष्वप्यवकाशमलभमानं" ।
इति तिथ्यादितत्त्वं ॥ अन्यच्च ।
"अवकाशेषु चोक्षेषु नदीतीरेषु चैव हि ।
विविक्तेषु च तुष्यन्ति दत्तेन पितरः सदा" ॥
इति मानवे ३ अध्याये २०७ श्लोकः ॥ (प्रशस्तप्रदेशः ।
"अवकाशो विविक्तोऽयं महानद्योः समागमे" ।
इति रामायणे । अभ्यादिसञ्चयस्थानं । अवस्थानं । स्थितिः ।
"अवकाशं किलोदन्वान् रामायाभ्यर्थितो ददौ" ।
इति रघुवंशे ।)

अवकीर्णः, त्रि, (अव + कॄ + क्त ।) अवचूर्णितः । तत्पर्य्यायः । अवध्वस्तः २ । इति हेमचन्द्रः ॥ (विस्तृतः । प्रसृतः । विक्षिप्तः ।
"भुक्तानि यौवनसुखानि यशोऽवकीर्णं
राज्ये स्थितं स्थिरधिया चरितं तपोऽपि" ।
इति नागानन्दे । उल्लङ्घितः । अतिक्रान्तः ।)

अवकीर्णी, [न्] त्रि, (अवकीर्णमनेन अव + कॄ + क्त + इनि, अवकीर्णं ध्वस्तं व्रतमिति शेषः, अस्यास्तीति ।) क्षतव्रतः । स्त्रीसंसर्गादिना त्यक्तनियमव्रतिः । इत्यमरजटाधरौ ।
("कुशीलवोऽवकीर्णी च वृषलीपतिरेव च ।
पौनर्भवश्च काणश्च यस्य चोपपतिर्गृहे" ॥
इति मनुः ।)

अवकुटारं, क्ली, (अव + स्वार्थे अतिशये वा कुटारच् ।) वैरूप्यं । इति संक्षिप्तसारव्याकरणस्य परिशिष्टं ॥ (अवाचीनत्वं । वैपरीत्यं ।)

अवकृष्टः, त्रि, (अव + कृष् + क्त ।) बहिष्कृतः । दूरीकृतः । तत्पर्य्यायः । निष्काशितः २ । इत्यमरः ॥ निःसारितः ३ । इति जटाधरः ॥ निर्गमितः ४ । इति शब्दरत्नावली ॥ (बहिष्कारितः । निर्गलितः । आकृष्टः ।
"एकाकिनापि हि मया रभसावकृष्ट-
निस्त्रिंशदीधितिसटाभरभासुरेण" ।
इति नागानन्दे । नीचः । निकृष्टः ।
"प्रतिकर्त्तुं प्रकृष्टस्य नावकृष्टेन युज्यते" ।
इति रामायणे । हीनजातीयः ॥ नीचजातीयः । अपकृष्टवर्णः ।
"चान्द्रायणं चरेत् सर्व्वानवकृष्टान् निहत्य तु" ।
इति याज्ञवल्क्यः । गृहादिसम्मार्ज्जकोदकवाह्यादिः कर्म्मकारः ।
"पणौ देयोऽवकृष्टस्य षडुत्कृष्टस्य वेतनम् ।
षाण्मासिकस्तथाच्छादो धान्यद्रोणस्तु मासिकः" ॥
इति मनुः ।)

अवकेशी, [न्] त्रि, (अवच्युतं कं सुखं यस्मात्, अवकं फलशून्यतामीशितुं शीलमस्य, अवक + ईश + णिनि ।) फलकालेऽप्यनुत्पन्नफलकवृक्षादिः । इत्यमरः ॥ तत्पर्य्यायः । वन्ध्यः २ अफलः ३ ॥

अवक्तव्यं, त्रि, (न वक्तव्यं, नञ्समासः ।) वचनायोग्यं । अकथनीयं । न वक्तव्यं अवक्तव्यमिति नञ्समासनिष्पन्नं । यथा,—
"असम्भाव्यं न वक्तव्यं प्रत्यक्षमपि दृश्यते" ।
इति चाणक्यः ॥

अवक्रयः, पुं, (अवक्रीयते प्रतिरूपदानेन स्वाधीनं क्रियतेऽनेन, अव + क्री + अच् ।) क्रयसाधनद्रव्यं । मूल्यं । इत्यमरः ॥ (राजग्राह्यं द्रव्यं । वणिग्भिः शुल्कस्थाने प्रतिभाण्डमधिपतये देयं ।
"विक्रयावक्रयाधानयाचितेषु पणान् दश" ।
इति याज्ञवल्क्यः । एतावत्कालमुपयोगार्थं भाण्डवस्त्राश्वादिर्मया दीयते मह्यं च युष्माभिरेतावद्धनं देयमित्येवंविधं भाटकं । भाड़ा इति भाषा ।)

अवगणितं, त्रि, (अव + गण + कर्म्मणि क्त ।) अवज्ञातं । अवमानितं । इत्यमरः ॥ (तिरस्कृतं ।
"आयासेनालसाङ्गोऽप्यवगणितरुजः कानने चन्दनानां, अस्मिन् गायन्तु रागादुरगयुवतयः कीर्त्तिमेतां तवैव" । इति नागानन्दः ।)

अवगण्डः, पुं, (अव + गम + ड, डकारस्य नेत्वम् ।) गण्डस्थव्रणः । वयस्फोड़ा इति यावत् । तत्पर्य्यायः । वरण्डः २ । इति त्रिकाण्डशेषः ॥

अवगतं, त्रि, (अव + गम + क्त ।) ज्ञातं । तत्पर्य्यायः । बुद्धं २ बुधितं ३ मनितं ४ विदितं ५ प्रतिपन्नं ६ अवसितं ७ । इत्यमरः ॥ प्रमितं ८ मतं ९ प्रतीतं १० । इति जटाधरः ॥

अवगतिः, स्त्री, (अव + गम + भावे क्तिन् ।) ज्ञानसामान्यं । इति जटाधरः ॥ (बोधमात्रं । अपगमः । अपसरणम् ।)

अवगथः, त्रि, (अव + गा + कर्त्तरि थ, निपातनात् ह्रस्वः ।) प्रातःस्नातः । प्रातःस्नायी । इति सिद्धान्तकौमुदी ॥

अवगारः, पुं, (अव + गर + घञ् ।) जलद्रोणी । नौकाजलसेचनकाष्ठपात्रं । इति हलायुधः ॥

अवगाहः, पुं, (अव + गाह + घञ् ।) स्नानं । स्नानगृहं । इति वोपदेवः ॥
("प्रचण्डसूर्य्यः स्पृहणीयचन्द्रमाः
सदावगाहक्षतवारिसञ्चयः" ।
इति ऋतुसंहारः ।)

अवगाहनं, क्ली, (अव + गाह + भावे ल्युट् ।) स्नानकरणं । तत्पर्य्यायः । अवगाहः २ वगाहः ३ मज्जनं ४ ("कन्दर्पबाणानलदग्धगात्रीणामवगाहनाय विधिना रम्यं सरो निर्म्मितम्" । इति शृङ्गारतिलके ।) निमज्जनं ५ । डुव दिया नाओया इति भाषा । शिरःस्नानं । अम्भसि मज्जनं । यथा । अवगाहनन्तु चक्षुःकर्णनासिकामङ्गुलीभिराच्छाद्य कुर्य्यात् ।
"अङ्गुलीभिः पिधायैवं श्रोत्रदृङ्नासिकामुखं ।
निमज्जेत प्रतिस्रोतस्त्रिः पठेदघमर्षणं" ॥
इति समुद्रकरधृतात् । अत्रानुकृते वारत्रयमेवावगाहनं ।
"नाभिमात्रजले गत्वा स्नात्वा केशान् दिधा द्विजः ।
निरुध्य कर्णौ नासाञ्च त्रिःस्नात्वा मज्जनं ततः" ॥
इति वामनपुराणात् । इत्याह्निकाचारतत्त्वं ॥ अन्यत् स्नानशब्दे द्रष्टव्यं ॥*॥ श्राद्धीयब्राह्मणस्य श्राद्धकर्त्तुरपि अवगाहनस्नानकर्त्तव्यत्वं । यथा गोभिलः । "स्नातान् शुचीन् आचान्तान्" इत्यादि । स्नातान् अवगाहितान् न तु मन्त्रादिस्नातान् । स्वयमपि सूतकादिरहितः स्नातः । इति श्राद्धतत्त्वं ॥

अवगीतं, क्ली, (अव + गै + क्त ।) निर्व्वादः । लोकापवादः । इति विश्वमेदिन्यौ ॥ (गीतादिना निन्दाख्यापनम् । असाधुगीतं । अशोभनगानं ।)

अवगीतः, त्रि, (अव + गै + क्त ।) ख्यातगर्हणः । निन्दितः । इत्यमरः ॥ ("विधुरं किमतः परं परैरवगीतां गमिते दशामिमाम्" । इति भारविः ।) दुष्टः । इति मेदिनी ॥ मुहुर्दृष्टः । इति विश्वः ॥

अवगुण्ठनं, क्ली, (अव + गुण्ठ + ल्युट् ।) योषाननावरकसरन्ध्रवस्त्रं । स्त्रीमुखाच्छादनवस्त्रं । घोम्टा इति ख्याता । इति शब्दरत्नावली ॥ मुखाविशेषः । ("अवगुण्ठनसंवीता कुलजाभिसरेद्यदि" । इति साहित्यदर्पणे । "जादे ! मुहुत्तअं मा लज्ज, अवणइस्सं दाव दे अवगुण्ठणम्" । इति शाकुन्तले ।) मुद्राविशेषः ।
तथा च तन्त्रसारे ।
"सव्यहस्तकृता मुष्टिर्दीर्घाधोमुखतर्ज्जनी ।
अवगुण्ठनमुद्रेयमभितो भ्रामिता मता" ॥
धूल्यादिरक्षणं ॥

अवगुण्ठिका, स्त्री, (अवगुण्ठयति आवृणोति, अव + गुण्ठ + ण्वुल्, स्त्रीत्वात् टापि अत इत्वम् ।) अवगुण्ठनं । स्त्रीमुखावरकवस्त्रं । इति शब्दरत्नावली ॥

अवगुण्ठितं, त्रि, (अव + गुण्ठ + क्त ।) चूर्णितं । इति त्रिकाण्डशेषः ॥ गुँड़ा करा इति भाषा ।

अवगोरणं, क्ली, (अव + गुर उद्यमे + ल्युट् ।) ताड़नार्थदण्डादीनामुद्यमः इति प्राञ्चः ॥ मारिवार निमित्ते ठेङ्गा उठान इति भाषा । यथा प्रायश्चित्तविवेके । "दण्डनिपातप्रायश्चित्तेनैव गुरुणा तन्नान्तरीयकावगोरणप्रायश्चित्तमपि सम्पद्यत इत्युक्तं । ननु दण्डनिपातप्रायश्चित्तात् तदन्तः-

दृढयिष्यति तां रज्जुं न त्रुट्यति यथा तथा ।
सर्व्वाणि वीजान्यादाय सवेदान् सप्त वै ऋषीन् ॥
तस्यां नावि निमग्नायां वर्त्तमाने जलप्लवे ।
दत्तेया सह संगम्य स्मरिष्यसि मनो मम ॥
स्मृतोऽहं तूर्णमायास्ये भवतो निकटं प्रति ।
श्यामलेनाथ शृङ्गेण त्वं मां ज्ञास्यसि वै तदा ॥
यावत् प्रस्तुतविध्वस्तं चरं स्याद्भुवनत्रयं ।
तावत् एकेन तां नावं वोढाहं नात्र संशयः ॥
जलप्लवे तु संपूर्णे शृङ्गे मम च तां तरिं ।
त्वं तथा वटिकया तुर्णं सदा नेष्यसि वै दृढं ॥
बद्धायां नावि मे शृङ्गे दैवमानेन वत्सरान् ।
सहस्रं प्रेरयिष्यामि तां नावं शोषयन् जलं ॥
ततः शुष्केषु तोयेषु प्रोन्नते शिखरे गिरेः ।
हिमाचलस्य बद्धा तां तस्मिन्नावमहं मनो ॥
त्वां वै गोपयिता नित्यं तावत् शोषये जलं ।
चिन्तितोऽहं त्वया यास्ये यदाहं निकटं तव ॥
शृङ्गेण श्यामलेनैव त्वं मां ज्ञास्यसि पुष्करे ।
पुनः सृष्टिं ततः कृत्वा मत्प्रसादान्महामते ॥
त्रैलोक्यदुर्लभाम्सिद्धिमवाप्स्यसि सनातनीं ।
अहमाराधितो येन जप्येन भवता मनो ॥
सर्व्वसिद्धिर्भवेत्तस्य यस्तोषयति तेन मां" ।

श्रीमार्कण्डेय उवाच ।

"इति दत्त्वा वरं तस्मै मत्स्यस्तेन नमस्कृतः ।
अन्तर्द्दधे जगन्नाथो लोकानुग्रहकारकः ॥
स्वायम्भुवोऽपि भगवानन्तर्द्धानं गते हरौ ।
यथोक्तं हरिणा पूर्वं नावं रज्जुं तथाकरोत् ॥
सर्व्वयाज्ञियवृक्षौघान् छित्त्वा स्वायम्भुवस्तदा ।
उद्वेन कारयामास नावं दृढतरां ततः ॥
तेषां वल्कसमुद्भूतसूत्रसंघैर्वटीरिकां ।
पूर्व्वोक्तेन प्रमाणेन कारयामास वै मनुः ॥
ततः कालेन महता वृत्तं युद्धं महाद्भुतं ।
विष्णोर्यज्ञवराहस्य सरभस्य हरस्य च ॥
ततो जलप्लवे भूते विध्वस्ते भुवनत्रये ।
तया रज्ज्वा तरिं बद्धा वीजान्यादाय सर्व्वशः ॥
वेदान्ऋषीन् तथा सप्त दत्तां चादाय वै मनुः ।
तस्यां नावि समाधाय तोयमग्ने चराचरे ॥
स्वायम्भुवस्तदा मत्स्यं हरिं सस्मार वै ततः ।
ततो जलानामुपरि सशृङ्ग इव पर्व्वतः ॥
उद्दीप्तस्त्वैकशृङ्गेण विष्णुर्मत्स्यस्वरूपधृक् ।
आगतस्तत्र न चिरायमास्ते स मनुर्हरिः ॥
तरिमारुह्य विपुले तोयराशौ भयङ्करे ।
यावच्चलाचलं तोयं तावत् शृङ्गे तरिं न्यधात् ॥
मत्से प्रकृतिमापन्ने शृङ्गे बद्धा तरिं तदा ।
तां नावं चोदयामास सहस्रं दैववत्सरान् ॥
स्वयं नावमवष्टभ्य दधार परमेश्वरः ।
योगनिद्रा जगद्धात्री समासीद्वटीरिका ॥
ततः शनैः शनैस्तोये शोषं गच्छति वै चिरात् ।
पश्चिमं हिमवत् शृङ्गमुन्नतं तोयमध्यतः ॥
दिशाहस्तैर्योजनानामुच्छ्रितस्य हिमप्रभोः ।
सहस्राणि सहस्राणि शृङ्गं तत्तस्य चोच्छ्रितं ॥
तस्मिन् शृङ्गे ततो नावं बद्धा मत्स्यात्मधृक् हरिः ।
जगाम शोषयायाशु जलानां जगतां पतिः ॥
एवं हि मत्स्यरूपेण वेदास्त्राताश्च शार्ङ्गिणा ।
कपिलस्य तु शापेन कृतोऽथाकालिको लयः ॥
आकालिकोऽयं प्रलयो यतो भगवता कृतः ।
इति वः कथितं सर्व्वं यथावत् द्विजसत्तमाः" ॥
इति कालिकापुराणे ३२ अध्यायः ॥

आकालिकी, स्त्री, (अकाल + ठञ् + ङीप् ।) विद्युत् । इति हेमचन्द्रः ॥

आकाशः, पुं, क्ली, (आ समन्तात् काशन्ते दीप्यन्ते सूर्य्यादयो यत्र । आ + काश् + घञ् ।) पञ्चभूतान्तर्गतभूतविशेषः । स तु शून्यः । तत्पर्य्यायः । द्योः २ द्यौः ३ अभ्रं ४ अम्भं ५ व्योम ६ पुष्करं ७ अम्बरं ८ नभः ९ अन्तरीक्षं १० अन्तरिक्षं ११ गगनं १२ अनन्तं १३ सुरवर्त्म १४ खं १५ वियत् १६ विष्णुपदं १७ विहायः १८ । इत्यमरः ॥ नाकः १९ अनङ्गः २० नभसं २१ मेघवेश्म २२ महाविलं २३ । इति जटाधरः ॥ मरुद्वर्त्म २४ मेघवर्त्म २५ त्रिपिष्टपं २६ । इति शब्दरत्नावली ॥ न्यायमते अस्य सामान्यगुणाः सङ्ख्यादि-पञ्च । विशेषगुणः शब्दः । स तु नित्यः अशरीरी च । अस्येन्द्रियं कर्णः । तत्त्वेकः किन्तु उपाधिभेदेन नाना भवति ।
("शब्दः श्रोत्रेन्द्रियश्चापि छिद्राणि च विविक्तता ।
वियतः कथिता एते गुणागुणविचारिभिः" ॥
तथा च भाषापरिच्छेदे ।
"आकाशस्य तु विज्ञेयः शब्दो वैशेषिको गुणः ।
इन्द्रियं तु भवेत् श्रोत्रमेकः सन्नप्युपाधितः" ॥)
वेदान्तमते स जन्यः ॥

आकाशगङ्गा, स्त्री, (आकाशपथवाहिनी गङ्गा ।) स्वर्गगङ्गा । यथा, शिवरात्रिव्रतकथायां,—
"आकाशगङ्गासलिलतरङ्गगणनादिते ।
त्रैगुण्यललितैश्चामरमञ्जिरूपवीजिते" ॥
("मदत्याकाशगङ्गायाः स्रोतस्युद्दामदिग्गजे" ।
इति रघौ १ । ७८ ।
"उभौ यदि व्योम्नि पृथग् प्रवाहा-
वाकाशगङ्गापयसः पतेताम्" । इति माघः ।)

आकाशजननी [न्] पुं, (आकाशमार्गस्य जननी ।) प्रगण्डीमध्यस्थितजनानां वाह्यार्थदर्शनार्थानि सूक्ष्म-च्छिद्राणि । यद्द्वारा आग्नेयास्त्रगुलिकाः प्रक्षिप्यन्ते । इति राजधर्म्मः ॥ (आकाशजननी स्त्री आकाशपथस्य जननीव पोषिका । इति केचित् ।)

आकाशदीपः, पुं, (आकाशे दीयमानो दीपः ।) कार्त्तिकमासे भगवदुद्देशेन नभसि दत्तप्रदीपः । यथा । कार्त्तिके आकाशदीप उक्तो निर्णयामृते पुष्करपुराणे ।
"तुलायां तिलतैलेन सायंकाले समागते ।
आकाशदीपं यो दद्यात् मासमेकं हरिं प्रति ॥
महतीं श्रियमाप्नोति रूपसौभाग्यसम्पदम्" । इति तद्विधिश्च हेमाद्रौ आदिपुराणे ।
"दिवाकरेऽस्ताचलमौलिभूते
गृहाददूरे पुरुषप्रमाणं ।
यूपाकृतिं यज्ञियवृक्षदारु-
मारोप्य भूमावथ तस्य मूर्द्धि ॥
यवाङ्गुलच्छिद्रयुतास्तु मध्ये
द्विहस्तदीर्घा अथ पट्टिकास्तु ।
कृत्वा चतस्रोऽष्टदलाकृतीस्तु
याभिर्भवेदष्टदिशानुसारी ॥
तत्कर्णिकायान्तु महाप्रकाशो
दीपः प्रदेयो दलगाश्चयाष्टौ ।
निवेद्य धर्म्माय हराय भूम्यै
दामोदरायाप्यथ धर्म्मराजे ॥
प्रजापतिभ्यस्त्वथ सत्पितृभ्यः
प्रेतेभ्य एवाथ तमःस्थितेभ्यः" । इति ।
अपरार्के त्वन्यो मन्त्रो यथा,—
"दामोदराय नभसि तुलायां लोलया सह ।
प्रदीपं ते प्रयच्छामि नमोऽनन्ताय वेधसे" ॥
इति निर्णयसिन्धौ २ परिच्छेदे कार्त्तिकमाहात्म्यं ॥

आकाशप्रदीपः, पुं, (आकाशे दीयमानः प्रदीपः ।) तुलायां दीयमानलक्ष्मीदामोदरसम्प्रदानकाकाश-दीपः । तथाच ब्रह्माण्डपुराणे ।
"तुलायां तिलतैलेन सायं सन्ध्यासमागमे ।
आकाशदीपं यो दद्यात् मासमेकं निरन्तरं ।
सश्रीकाय श्रीपतये स श्रीमान् भुवि जायते ॥
ॐ दामोदराय नभसि तुलायां लोलया सह ।
प्रदीपं ते प्रयच्छामि नमोऽनन्ताय वेधसे ॥
इति मन्त्रेण यो दद्यात् प्रदीपं सर्पिरादिना ।
आकाशे मण्डपे वापि स चाक्षयफलं लभेत् ।
विष्णुवेश्मनि यो दद्यात् कार्त्तिके मासि दीपकं ॥
अग्निष्टोमसहस्रस्य फलमाप्नोति मानवः" ॥

आकाशमांसी, स्त्री, (आकाशजाता मांसी ।) सूक्ष्म-जटामांसी । केदारे उत्पत्तिरस्याः । तत्पर्य्यायः । निरालम्बा २ खसम्भवा ३ शैवाली ४ सूक्ष्मपत्री ५ गौरी ६ पर्व्वतवासिनी ७ अम्भमांसी ८ । अस्या गुणाः । हिमत्वं । शोथव्रणनाडीरोग-नाशित्वं । लूतागर्द्दभकच्छ्वाबाधाहारित्वं । वर्णकारि-त्वञ्च । इति राजनिर्घण्टः ॥

आकाशमूली, स्त्री, ( आकाशे भूमिरहितस्थाने मूलमस्याः । ङीप् ।) कुम्भिका । इति हारावली ॥ पाना इति ख्याता । (कुम्भिकाशब्देऽस्याः गुणा द्रष्टव्याः ।)

आकाशरक्षी [न्] पुं, (आकाशे उच्चस्थाने स्थितः सन् रक्षतीति यः । आकाश + रक्ष + णिन् ।) प्रग-ण्डीस्थितप्रणिधिः । दुर्गवहिःप्राचीरोपरिस्थित-चरः । इति राजधर्म्मः ॥

आकाशवल्ली, स्त्री, (आकाशस्य वल्लीव । अमूल-त्रिस्थत्वात् ।) लताविशेषः । आकाशवेल अमर-वेल इति ख्याता । तत्पर्य्यायः । खवल्ली २ दु-स्पर्शा ३ व्योमवल्लिका ४ । अस्या गुणाः । मधु-रत्वं । कटुत्वं । पित्तनाशित्वं । शुक्रवर्द्धकत्वं । रसायनत्वं । बलकारित्वं । दिव्यौषधिपरत्वं । इति राजनिर्घण्टः ॥
"आकाशवल्ली तु बुधैः कथितामरवल्लरी ।
खवल्ली ग्राहिणी तिक्ता पिच्छिलाक्ष्यामयापहा ॥
तुवराग्निकरी हृद्या पित्तश्लेष्मामनाशिनी" ।
इति भावप्रकाशः ॥

आकाशवाणी, स्त्री, (आकाशादुद्भवा वाणी।) अश-रीरिणी वाक्। दैववाणी। इति पुराणं॥

आकाशसलिलं, क्ली, (आकाशात्पतितं सलिलं जलं।) दिव्योदकं। इति राजनिर्घण्टः॥

आकिञ्चन्यं, क्ली, (अकिञ्चनस्य दरिद्रस्य भावः। अकिञ्चन + ष्यञ्।) अकिञ्चनता॥

आकीर्णं, त्रि, (आङ् + कॄ श विक्षेपे + क्तः।) व्याप्तं। तत्पर्य्यायः। संकीर्णं २ संकुलं ३। इत्यमरः। समाकीर्णं ४। इति शब्दरत्नावली॥ (यथा, रघुवंशे। प्रथमसर्गे ५० श्लोकः।

"आकीर्णमृषिपत्नीनामुटजद्वाररोधिभिः"॥)

जनादिभिर्निरवकाशं। इति भरतः॥

आकुञ्चनं, त्रि, (आङ् + कुचि + ल्युट्।) न्यायमते पञ्चप्रकारकर्म्मान्तर्गतकर्म्मविशेषः। सङ्कोचः॥ (प्रसारितस्य संकुचितत्वसम्पादनं। वक्रता-सम्पादनं। यथा। भाषापरिच्छेदे।

"उत्क्षेपणं ततोऽवक्षेपणमाकुञ्चनं तथा।

प्रसारणञ्च गमनं कर्म्माण्येतानि पञ्च च"॥)

आकुलं, त्रि, (आङ् + कुल + कः।) व्याकुलं। तत्पर्य्यायः। व्यग्रं २ असमग्रं ३। इत्यमरः॥ (यथा शाकुन्तले। "विमनसुखविः क्वचित्सस्य प्रतिसुख-माकुला"॥)

आकूतं, क्ली, (आङ् + कूङ् + क्तः) अभिप्रायः) आशयः। इति हेमचन्द्रः॥ (तात्पर्य्यं। इच्छा। यथा साहित्यदर्पणे। २य परिच्छेदे।

"दत्केनार्पिताकूतं लीलापद्मं निमीलितं"। इति

"हृदयनिहितं भावाकूतं वमद्भिरिवेक्षणैः"॥

इति शाकुन्तले।)

आकृतिः, स्त्री, (आक्रियते इयं गौरयं अश्वः इति व्यज्यतेऽनया। आङ् + कृ + क्तिन्।) रूपं। शरीरं। जातिः। इति मेदिनी॥ (यथा शाकु न्तले प्रथमाङ्के।

"किमिव हि मधुराणां मण्डनं नाकृतीनां"॥

न्यायमते सामान्यं, जातिः। "आकृतिर्जाति-लिङ्गाख्या"। इति न्यायसूत्रम्। जातिलिङ्ग-मित्याख्या यस्याः जातेर्गोत्वादेर्हि शाखादिसंस्थान-विशेषो लिङ्गम्। तस्य च परम्परया अवच्छि-न्नम्। जातिद्रव्यासमवायिकारणतावच्छेदिकालिङ्गं धर्म्मो यस्याः सा इत्यर्थः इति कश्चित्॥)

आकृतिच्छत्रा, स्त्री, (आकृत्या छत्रमिव या।) घोषा-लतीवृक्षः। श्वेतघोषा इति भाषा। इति रत्न-माला॥ (घोषकशब्देऽस्या विशेषो ज्ञेयः।)

आकृष्टं, त्रि, (आङ् + कृष् + कर्म्मणि + क्तः।) कृताकर्षणं। आकर्षितं॥ (प्रलोभितः, मुग्धः। यथा हितोपदेशे। "ततो लोभाकृष्टेन केनचित् पान्थेनालोचितं"॥ इति)

आकोकेरः, पुं, मकरराशिः। इति ज्योतिस्तत्त्वं॥

आक्रन्दः, पुं, (आङ् + क्रन्द + घञ् + अच् वा।) रोदनं। यथा रामायणे।

("ताराभाक्रन्दशब्देन सहसोद्भ्रान्तलोचनः"।)

आह्वानं। मित्रं। दारुणयुद्धं। भ्राता। इति मेदिनी॥ ध्वनिः (यथा रामायणे।

"तथैव निशि नागानामाक्रन्दः श्रूयते महान्"॥)

नाथः। पार्ष्णिग्राहात् परो राजा। इति धरणिः। (यथा माघे ७। २०७।

"पार्ष्णिग्राहश्च संप्रेक्ष्य तथाक्रन्दञ्च मण्डले"।)

आक्रमः, पुं, (आङ् + क्रम् + अच्।) आक्रमणं। तत्पर्य्यायः। अधिक्रमः २ क्रान्तिः ३। इति हेमचन्द्रः॥ (अधिरोहः। व्याप्तिः। विक्षेपः। अधिगमः। प्राप्तिः। अधिकारः।)

आक्रमणं, क्ली, (आङ् + क्रम् + ल्युट्।) आक्रमकरणं। ("यः पृष्ठवर्त्ती नृपतिः देशाक्रमणमाचरति"। इति कुल्लूकभट्टः।) व्यापनं॥ (अतिवर्त्तनं। यथा, रामायणे।

"कष्टकाक्रमणक्लान्ता वनमद्य गमिष्यति"।

आरोहणम्। यथा रामायणे।

"न देवलोकाक्रमणं नामरत्वमहं वृणे"।)

आक्रान्तः, त्रि, (आङ् + क्रम + क्त) कृताक्रमणः। अधिक्रान्तः। आक्रमविशिष्टः। इति हलायुधः॥ (अभिभूतः। पराभूतः। वशीभूतः। यथा मनुः—

"न पापिष्ठगणाक्रान्ते नोपसृष्टेऽन्त्यजैर्नृभिः"।)

आक्रीड़ः, पुं, (आङ् + क्रीड़ + घञ्।) राजोपवनं। राज्ञः साधारणं वनं। इत्यमरः॥ (केलीकाननं, लीलोद्यानं। यथा, रामायणे।

"आक्रीड़ानद्भुतं स्फीतं सुविभक्तं सुसंस्कृतं"।

तथा च कुमारे। २। ६७।

"आक्रीड़पर्व्वतास्तेन कल्पिताः स्वेषु वेश्मसु"।

कुवलयाश्वमथ प्राप्तः स्वनामख्यातः पौरवः"॥

यथा हरिवंशे।

"दुष्मन्तस्य तु दायादः कुवलयाश्वः प्रजेश्वरः।

कुवलयाश्वादथाक्रीड़श्चत्वारस्तस्य चात्मजाः"॥)

आक्रोशः, पुं, (आङ् + क्रुश + घञ्।) क्रोधाकर्त्तव्य-निश्चयः। तत्पर्य्यायः। आक्षेपः २ अभिषङ्गः ३ शापः ४। इति हेमचन्द्रः॥ (यथा रामायणे।

"आक्रोशं मम मातुश्च प्रमार्ज्जय पुरुषर्षभ" इति।)

आक्रोशनं, क्ली, (आङ् + क्रुश् + ल्युट्।) अभिशापः। तत्पर्य्यायः। अभिषङ्गः २ अभीषङ्गः ३। इत्यमरः॥

आक्षपाटिकः, पुं, (अक्षपटे नियुक्तः। अक्षपट + ठञ्।) अक्षदर्शकः। धर्म्माध्यक्षः। इति जटाधरः॥

आक्षपादः, पुं, (अक्षपाद + अण्।) नैयायिकः। इति भूरिप्रयोगः॥

आक्षारणा, स्त्री, क्ली, (आङ् + क्षर + णिच् + युच्।) मैथुनं प्रति आक्रोशः। इत्यमरः॥ परस्त्री-निमित्तं पुंसः परपुरुषनिमित्तं स्त्रिया वा दूषणं। यथा "कुलाङ्गनागमनरूपं व्याजान्तरं गच्छ"। इति भरतः॥ छेनालि अपवाद इति भाषा॥

आक्षारितं, त्रि, (आङ् + क्षर + णिच् + क्त।) पर-स्त्रियां परपुरुषे वा मैथुनं प्रति मिथ्यादूषितं। अपवादग्रस्तं। इत्यमरः॥

आक्षिकः, पुं, आच्छुकवृक्षः। इति रत्नमाला॥ आचेर गाछ इति भाषा। (द्यूतनिमित्तः। पाश-क्रीड़ाविषयकः। अक्ष अक्षैर्दीव्यति जितो वा इति अक्ष + ठञ्। यथा मानवे ।८।१६०।

"प्रातिभाव्यं वृथादानमाक्षिकं सौरिकञ्च यत्।

दण्डशुल्कावशेषञ्च न पुत्रो दातुमर्हति"॥

("पित्तश्लेष्मप्रशमनञ्च वातिकञ्चाक्षिकीफलं।

मधुराम्लविपाकञ्च वातपित्तहरञ्च तत्"॥

इति चरकः॥

"आक्षिकः पाण्डुरोगघ्नो भव्यः संग्राहको लघुः"।

इति सुश्रुतः॥)

आक्षीवः, पुं, (आङ् + क्षीव + अच्।) अक्षीवः। शोभाञ्जनवृक्षः। इति रायमुकुटः॥

आक्षेपः, पुं, (आङ् + क्षिप् + घञ्।) अपवादः। इत्यमरः॥ भर्त्सनं। (यथा—नीतिशतके।४२॥

'क्षान्त्यैवाक्षेपरूक्षाक्षरमुखरमुखान्दुर्मुखान्दूषयन्तः सन्तः साश्चर्य्यचर्य्या जगति बहुमता कस्य नाभ्यर्थनीयाः'

आकर्षणं।

("नवपरिणयलज्जाभूषणां तत्र गौरीं।

वदनमपहरन्तीं तत्कृताक्षेपमीशः"॥

इति कुमारे। ७। ९५। विन्यासः। स्थापनं।

"कर्णार्पितो लोध्रकषायरूक्षे

गोरोचनाक्षेपनितान्तगौरे।

तस्याः कपोले परभागलाभात्"।

इति कुमारे। ७। १७ अपहरणं। यथा,—

"यत्रांशुकाक्षेपविलज्जितानां"। १। १४ कुमारे। उपस्थितिः। यथा साहित्यदर्पणम्।

"मुख्यार्थस्येतराक्षेपो वाक्यार्थेऽन्वयसिद्धये"।

इति।) काव्यालङ्कारः। इति मेदिनी॥ (अल-ङ्कारप्रकरणे विशेषो द्रष्टव्यः।)

आक्षेपकः, पुं, (आङ् + क्षिप् + ण्वुल्।) निन्दाकरः। व्याधः। इति मेदिनी॥ वातरोगविशेषः। तस्य कारणलक्षणे। निदाने यथा—

"यदा तु धमनीः सर्व्वाः कुपितोऽभ्येति मारुतः।

तदा क्षिपत्याशु मुहुर्मुहुर्देहं मुहुश्चरः॥

मुहुर्मुहुस्तदाक्षेपादाक्षेपक इति स्मृतः"।

आक्षोटः, पुं, (अक्षोट एव स्वार्थे अण्।) अक्षोट-वृक्षः। पर्व्वतजपीलुवृक्षः। इति शब्दरत्नावली॥

("वातामाभिषुकाक्षोटमकूलकनिकोचकाः।

गुरूष्णस्निग्धमधुराः सोरुमाणा बलप्रदाः।

वातघ्ना बृंहणा वृष्याः कफपित्ताभिवर्द्धनाः"॥

इति चरकः॥)

आक्षोड़ः, पुं, आक्षोटवृक्षः। इत्यमरटीकायां भरतः॥

आक्षोदनं, क्ली, (आङ् + क्षुद् + ल्युट्।) मृगया। इत्यमरः॥

आखण्डलः, पुं, (आङ् + खण्ड + कलच्।) इन्द्रः। इत्यमरः॥ (यथा कुमारसम्भवे। द्वितीयसर्गे।११।

"आखण्डलः काममिदं बभाषे"।)

आखनिकः, पुं, (आङ् + खन + इकन्।) चौरः। उन्दुरः। शूकरः इति मेदिनी॥ (खनित्रादिकं खननसाधनद्रव्यं। खननकर्त्ता।)

आखातं, पुं, क्ली, (आङ् + खन् + क्त।) अखातं। देवखातं। इत्यमरटीकायां रायमुकुटः॥

आखुः, पुं, (आङ् + खन + कुः।) मूषिकः। इत्यमरः॥ (यथा नीतिशतके। "कृत्वाखुर्विवरं स्वयं निप-तितो नक्तं मुखे भोगिनः"।) शूकरः। चौरः।

इति हेमचन्द्रः ॥ देवताड़वृक्षः । इति रत्नमाला ॥ (आखुमांसगुणा यथा,—
("आखोर्मांसं प्रमदि बहुधा खण्डखण्डीकृतं यत्तैले पाच्यं भवति नितरां यावदेतद्र सव्यक् ।
तत्तैलाक्तं वसनमनिशं योनिभागे दधाना,
हन्ति प्रौढ़ाकारमनघमं वाच सन्देहबुद्धिः" ।
इति वैद्यकचक्रपाणिसंग्रहः ॥)

आखुकर्णी, स्त्री (आखोः कर्णमिव पत्रमस्याः । आखुकर्ण + ङीष् ) लताविशेषः । मूषाकाणी इति भाषा । तत्पर्य्यायः । द्रवन्तिका २ प्रत्यक्श्रेणी ३ चित्रा ४ सुवर्णी ५ उन्दुरकर्णी ६ न्यग्रोधी ७ मूषककर्णी ८ वृषिकर्णी ९ बहुकर्णिका १० माता ११ भूमिचरी १२ चण्डा १३ शम्बरी १४ बहुपादिका १५ प्रत्यक्श्रेणी १६ वृषा १७ पुत्रश्रेणी १८ अग्निभूः १९ । अस्या गुणाः । कटुत्वं उष्णत्वं । कफपित्तहरत्वं । सारकत्वं । आनाहज्वरशूलनाशित्वं । पक्वप्रमापकत्वं । इति राजनिर्घण्टः ॥
"आखुपर्णी आखुकर्णी कर्णिका भूंदरीभवा ।
आखुकर्णी कटुस्तिक्ता कषाया शीतला लघुः ॥
विपाके कटुका मूत्रकृमामयकृमिप्रणुत्" ।
इति भावप्रकाशः ॥

आखुगः, पुं, (आखुना गच्छति यः । गणेशस्य मूषिकवाहनत्वात् तथात्वं ।) गणेशः । इति हेमचन्द्रः ॥

आखुपर्णिका, स्त्री, ( आखोः कर्णमिव पर्णमस्याः ।) लताविशेषः । इति रत्नमाला ॥ इन्दुरकाणी इति भाषा । (आखुपर्णीशब्दे आखुकर्णीशब्दे चास्या गुणादयो ज्ञातव्याः ।)

आखुपर्णी, स्त्री, ( आखोः कर्णमिव पर्णमस्याः ।) आखुपर्णिका । इति रत्नमाला ॥
"मुस्ताखुपर्णीफलदारुशिग्रु-
क्वाथः सकृष्णा क्रिमिशत्रुकल्कः ।
मार्गद्वयेनापि चिरप्रवृत्तान्
क्रिमीन्निहन्यात् क्रिमिजांश्च रोगान्" ॥
इति वैद्यकचक्रपाणिसंग्रहः ।
"आखुपर्णीकिशलयैः सुपिष्टैः पिष्टमिश्रितैः ।
पक्त्वा पूपलिकां खादेत्काञ्जिकञ्च पिबेदनु" ॥
इति वाभटः ॥ गुणादयोऽन्येऽस्या आखुकर्णीशब्दे ज्ञातव्याः ॥)

आखुपाषाणः, पुं, पाषाणभेदः । आखुपाषाणनामोऽयं लोहसंकरकारकः । इति राजनिर्घण्टः ॥

आखुभुक् [ज्] पुं, ( आखुन् भुङ्क्ते यः । आखु + भुज् + क्विप्) विड़ालः । इत्यमरः ॥

आखुरथः, पुं, (आखुः रथो वाहनं यस्य ।) गणेशः । इति हलायुधः ॥

आखुविषहा, स्त्री, ( आखोर्विषं हन्ति या ।) देवताड़वृक्षः । इति जटाधरः ॥ देवदालीलता । इति राजनिर्घण्टः ॥

आखेटः, पुं, (आङ् + खिट् + घञ् ) मृगया । इत्यमरः ॥ शिकार इति भाषा । ("सुभमाखेटभूमिषु" । कथासरित्सागरे १५ । १२० ।
"आखेटकस्य धर्म्मेण विभवाः सुखंसे यथाम् ।
मृगयाः प्रेरयन्तो कृतयज्योऽस्य सुगानिव" ॥)

आखेटकः, पुं, ( आङ् + खिट् + ण्वुल् ।) मृगया । इति शब्दरत्नावली ॥ यथा मत्स्यपुराणे ।

आखेटशीर्षकं, क्ली, कुट्टिमभेदः । इति शब्दरत्नावली सुरङ्ग इति भाषा । (यदुक्तं ।
"कपिशीर्षं मुमशीर्षं तथाखेटशीर्षकं ।
इति कुट्टिमभेदाः स्युः शाब्दिकैः समुदाहृताः" ।)

आखेटिकः, पुं, ( आखेटे मृगयायां कुशलः । आखेट + ठक् ।) मृगयाकुशलकुक्कुरः । तत्पर्य्यायः । आखेटिकः २ चित्रकायः ३ । इति हारावली ॥ (मृगयाकर्त्ता । आखेटकः । भयङ्करः । मृगयुः । व्याधः ।)

आखोटः, पुं, (आख + उट् ।) वृक्षविशेषः । आखरोट् इति भाषा । तत्पर्य्यायः । पार्वतीयः २ फलस्नेहः ३ गुडाशयः ४ कीरेष्टः ५ कन्दराजः ६ मधुमज्जा ७ वृत्तच्छदः । अस्य गुणाः । मधुरत्वं । बलकारित्वं । स्निग्धत्वं । उष्णत्वं । वातपित्तनाशित्वं । रक्तदोषप्रशमनत्वं । शीतलत्वं । कफकोपनत्वं । इति राजनिर्घण्टः ॥ (आक्षोड़शब्दे आखोटशब्दे चास्य गुणादिकं ज्ञेयं ।)

आख्या, स्त्री, (आङ् + ख्या + अङ् + टाप् ) नाम । संज्ञा । इत्यमरः ॥ यथा कुमारसम्भवे १ । २६ ।
"उमेति मात्रा तपसो निषिद्धा
पश्चादुमाख्यां सुमुखी जगाम" ।

आख्यातं, त्रि, (आङ् + ख्या + क्तः) कथितं । उक्तं । इत्यमरः ॥ (प्रथितः, प्रसिद्धः, प्रकाशितः ।) व्याकरणोक्तधातूत्तरविहितलिङ्प्रत्ययादि ॥

आख्यानं, क्ली, (आङ् + ख्या + ल्युट् ) कथनं । यथा
"कथितं सर्व्वमाख्यानं ब्रह्मपुत्र यथागमं ।
देवी मङ्गलचण्डी या तदाख्यानं निशामय" ॥
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ४१ अध्यायः ॥

आख्यायिका, स्त्री, ( आङ् + ख्या + ण्वुल् । टाप् ।) उपलब्धार्थकथा । इत्यमरः ॥ इतिहास उपन्यास इति ख्याता ॥ (आख्यायिकालक्षणं । यथा,—
"प्रबन्धकल्पनां स्तोकसत्यां प्राज्ञाः कथां विदुः ।
परम्पराश्रया या स्यात् सा मताख्यायिका क्वचित्"
इति च साहित्यदर्पणे ।
"आख्यायिका कथावत्स्यात् कवेर्वंशादिकीर्त्तनं"

आगः, [स्] क्ली, पापं । अपराधः । इत्यमरः ॥ (यथा शिशुपालवधे ३य सर्गे १०८ श्लोकः ।
"सहिष्ये शतमागांसि सूनोस्त इति यत्त्वया" ।)

आगतं, त्रि, (आङ् + गम् + क्तः । ) आयातं । उपस्थितं ॥ (लब्धः । प्राप्तः यथा, हितोपदेशे ।
"आगतन्तु भयं वीक्ष्य प्रतिकुर्य्याद् यथोचितम्" ।)

आगन्तुः, त्रि, ( आङ् + गम् + तुन् । ) अतिथिः । इत्यमरः ॥ आगमनशीलः । अनियतः ॥
("अज्ञातकुलशीलस्य वासो देयो न कस्यचित्" ।
इति हितोपदेशः । आकस्मिकरोगादि । यथा,
"आगन्त्वपि शरीरस्यव्यतिरेकेण यावन्नोभावा दुःखमुत्पादयन्ति" । इति सुश्रुतः ।
निजागन्तुभेदेन रोगस्य कारणद्वैविध्यादागन्तुशब्दोऽप्यामयस्यान्यतरकारणवाची ।
तद्यथा,—
"द्विविधा पुनः प्रकृतिरेषामागन्तुनिजविभागात्" । "मुखानि तु खल्वागन्तोर्नखदशनपतनाभिचाराभिशापाभिषङ्गवधबन्ध-पीड़न-रज्जु-दहन-मन्त्राशनि-भूतोपसर्गादीनि" ।
"आगन्तुर्हि व्यथापूर्व्वंसमुत्पन्नो जघन्यं
वातपित्तश्लेष्मणां वैषम्यमापादयति" ।
उदाहरणं । "तत्रागन्तवश्छेदनभेदनव्यधनभञ्जनपिच्छनोत्पेषणवेष्टनप्रहार-वध-बन्धन-वन्धन-पीड़नादिभिर्व्वा । भल्लातक-पुष्पफलरसात्मगुप्तामूककिमिसूकाहितमपत्रलतागुल्मसंस्पर्शनैर्वा स्वेदनपरिसर्पणावसूचकेर्व्वा विषिकाम् ॥ सविषाविषप्राणिदन्तविषाणनखनिपातनैर्व्वा ।
सागरविषवात-हिम-दहन-संस्पर्शनैर्व्वा शोथाः समुपजायन्ते" ॥ इति चरकेणोक्तं ॥)

आगन्तुकं, त्रि, ( आगन्तु + स्वार्थे कन् ) आगन्तुः । अनित्यस्थायि । इति त्रिकाण्डशेषः ॥
(अज्ञातकुलशीलादिर्नवागतः पुरुषः । यथाः
"यथा च मूलभृत्यानपास्यापमागन्तुकः पुरस्कृतः" । इति हितोपदेशे ॥ अतिथिः । अज्ञातस्वामिकः पश्वादिः । यथा याज्ञवल्क्ये ॥
"भक्तेऽभोज्य कष्टपशवः सूतिकागन्तुकादयः ।
पालो येषां तु ते मोच्या दैवराजपरिप्लुताः" ॥
आकस्मिकक्षतादिरोगः । यथा, सुश्रुते ।
"तत्रासन्न आयुरागमने धातुस्तस्य प्रयत्नमिति कृत्यं तत् द्विविधं, शारीरमागन्तुकं च" । इति ॥)

आगमं, क्ली, (आङ् + गम + अच् ।) तन्त्रशास्त्रं । शास्त्रार्थः । यथा तन्त्रशास्त्रं ॥
"आगतं पञ्चवक्त्रात्तु गतञ्च गिरिजानने ।
मतञ्च वासुदेवस्य तस्मादागममुच्यते" ॥ इति
(एतल्लक्षणं यथा,—
"सृष्टिश्च प्रलयश्चैव देवतानां तथार्च्चनं ।
साधनञ्चैव सर्व्वेषां पुरश्चरणमेव च ॥
षट्कर्म्मसाधनं चैव ध्यानयोगश्चतुर्विधः ।
सप्तभिर्लक्षणैर्युक्तं त्वागमं तद्विदुर्बुधाः" ॥ इति
यथा रघुवंशे । १० । २६ ॥
"बहुधाप्यागमैर्भिन्नाः पन्थानः सिद्धिहेतवः" )

आगमः, पुं, (आ + गम् + अच् ।) आगमनं ।)
("आगमादिव तमोपहादितः
सम्भवन्ति मतयो भवच्छिदः" ।
इति किराते । ५ । २२ ।) आगमनं । इति मेदिनीकरहेमचन्द्रौ ॥ ( अर्थादीनामागमः । यथा, नीतिशतके ७२ श्लोके । "विनयधरा प्रचुरनिजधनागमा च" । इति । प्राप्तिः । उपार्जनम् ।
"धर्म्मध्वजस्य कश्चिन्मनुष्यान् प्रति वर्त्तते" ।
इति मनुः ॥)
शास्त्रिपत्रादिः । इति व्यवहारमातृका ॥ प्रकृतिप्रत्ययानुपपातिकार्य्यं । इति व्याकरणं ॥ (शास्त्रज्ञानं । श्रुतवत्ता । यथा,
"आकारसदृशप्रज्ञः प्रज्ञया सदृशागमः" ।
इति रघुवंशे १म सर्गे १५ । यथा च रघौ १४ । ८० ।
"तामर्पयामास च शोकदीनां
तदागमप्रीतिषु तापसीषु" ॥)

आगमनं, क्ली, आङ्पूर्व्वगमधातोरनट्प्रत्ययान्तस्य रूपमिदं । आसा इति भाषा ॥ (यथा रघुवंशे । "रामस्याप्रदेशात् भरतागमनं पुनः" । स्त्रीसङ्गमः । यथा,—
"अन्यागमनपापस्य पापः प्रत्यहन् स निष्कृतिं" । इति राजतरङ्गिणी ।)

आगमावर्त्ता, स्त्री, वृश्चिकालीवृक्षः । इति राजनिर्घण्टः ॥

आगमितं, त्रि, ( आ+गम+णिच्+क्त ) अधीतं । पठितं । इति जटाधरः ॥ (ज्ञापितं प्रापितं ।)

आगाधं, क्ली, (अगाध एव । स्वार्थे अण् ।) अगाधं । अतिगभीरं इत्यमरटीकायां मथुरानाथः ॥

आगान्तुः, त्रि, आगन्तुकः । अतिथिः । इत्यमरटीकायां नीलकण्ठः ॥ (अभ्यागतः । आगन्तुः ।)

आगामी, [न्] त्रि, ( आङ्+गम्+णिन् । भविष्यत्कालः । इति राजनिर्घण्टः ॥ (यथा, हितोपदेशे । "भो यजमान ! आगामिन्याममावास्यायां यक्ष्यामि यज्ञम्" । )

आगारं, क्ली, ( आग+ऋ+अण् ) गृहं । इत्यमरटीका ॥ ( यथा मनुः ।
"आसीनं भिक्षुकैर्वान्यैरागारमुपसंव्रजेत् ।)

आगुः, [र्] स्त्री, आगूः । प्रतिज्ञा । इत्यमरटीकायां रमानाथः ॥

आगूः, स्त्री, (आ-गमेः क्विपि गमः क्वावित्यनुनासिकलोपे ऊङ्गमादीनामित्यूकारादेशः ।) प्रतिज्ञा । इत्यमरः ॥

आग्नीध्रं, क्ली, (अग्निमिन्धे, इन्धीदिसौ, क्विप्, नलोपः । अग्नीधः स्थानं; अग्नीधः शरणे रण् । तत्रस्थितत्वात् ऋत्विगप्याग्नीध्र उच्यते) अग्नीध्रं । होत्रगृहं । इत्यमरटीकायां रमानाथः ॥ आग्नेय्या अग्नीध्रमुपतिष्ठते इत्यत्र आग्नीध्रं मण्डपमित्याख्यानदर्शनात् । यज्ञद्वारा वरणीयऋत्विजि पुं ॥ ( स्वायम्भुवस्य प्रथमस्य मनोर्दशपुत्रमध्ये परिगणितः स्वनामख्यातः पुत्रः । यथा हरिवंशे ।
"आग्नीध्रश्चाग्निबाहुश्च मेधा मेधातिथिर्वसुः ।
ज्योतिष्मान् द्युतिमान् हव्यसवनः पुत्र एव च ॥
मनोः स्वायम्भुवस्यैते दश पुत्रा महौजसः" ।
प्रियव्रतज्येष्ठपुत्रः स्वनामख्यातो मनुवंशीयो नृपतिः । यदुक्तं,—
"आग्नीध्रो नाम नृपतिर्जम्बुनाथो मनोः कुले ।
तज्जातो नृपसंज्ञाभिः कथ्यन्ते भरतादयः" ॥
प्रियव्रतस्य राज्ञः दशपुत्रमध्येपरिगणितः स्वनामख्यातः पुत्रः । यदुक्तम् विष्णुपुराणे २ । १ ॥
"प्रियव्रतसुताः ख्यातास्तेषां नामानि मे शृणु ॥
आग्नीध्रश्चाग्निबाहुश्च वपुष्मान् द्युतिमांस्तथा ।
मेधा मेधातिथिर्भव्यः सवनः पुत्र एव च ॥
ज्योतिष्मान् दशमस्तेषां सत्यनामा सुतोऽभवत्" ॥८

आग्नेयं, क्ली, (अग्निर्देवता यस्य ।) स्वर्णं । इति राजनिर्घण्टः ॥ देशविशेषः । इति शब्दरत्नावली ॥ रक्तं । इति हेमचन्द्रः ॥ घृतं । इति पाणिनिः ॥

आग्नेयः, पुं, (अग्निर्देवतास्य अण् । अग्निनोक्तं पुराणं यदाग्नेयं वेदसम्मितमित्युक्तलक्षणे महापुराणभेदे वह्निपुराणे च । अग्निदेवताके अष्टमात्रे च त्रि । अग्निर्योषिति स्वाहायाम् अग्निदेवताकायामृचि च । आग्नेयमतं । यथा मनौ ९।३१० ।
"दुष्टसामन्तहिंस्रस्य तदाग्नेयमतं स्मृतम्" ।)
अगस्त्यमुनिः । इति पाणिनिः ॥ अग्निसम्बन्धीये त्रि

आग्नेयी, स्त्री, ( आग्नेय+ङीप् । ) अग्निकोणं ॥ स्वाहा । इति जटाधरः ॥

आग्रयणं, क्ली, नवशस्येष्टिः । यथा,—
"शरद्वसन्तयोः केचिन्नवयज्ञं प्रचक्षते ।
धान्यपाकवशादन्ये श्यामाको वनिनः स्मृतः" ॥
इत्यनेन शरद्वसन्तविहितनवशस्येष्टेः ।
"श्यामाकैर्व्रीहिभिश्चैव यवैरन्योन्यकालतः ।
प्रयष्टुं युज्यतेऽवश्यं न त्वाग्रयणात्ययः" ॥
इति कालान्तरदर्शनात् आद्येऽपि तथा इति ।
आग्रयणं नवशस्येष्टिः । इति मलमासतत्त्वं ॥

आग्रहः, पुं, (आङ्+ग्रह+अप्) अनुग्रहः । आसक्तिः । आक्रमः । ग्रहणं । इति मेदिनी ॥ (प्रसादः, अभिनिवेशः, आसङ्गः, यथा,
"इत्याग्रहात् वदन्तं तं स पिता तत्र नीतवान्" ॥
इति कथासरित्सागरे २५।९९ ।)

आग्रहायणः, पुं, मार्गशीर्षमासः । इति रायमुकुटः ॥

आग्रहायणिकः, पुं, ( आग्रहायण्या मृगशिरसा युक्ता पौर्णमासी अस्मिन् । आग्रहायणी+ठक् ) अग्रहायणमासः । मतभेदे वत्सरादिमासोऽयं । अस्मिन् मासे वृश्चिकराशिस्थो रविः । तत्पर्यायः । मार्गशीर्षः २ सहाः ३ मार्गः ४ । इत्यमरः ॥ आग्रहायणी ५ अलकः ६ सहः ७ मार्गशिरः ८ । इति शब्दरत्नावली ॥ अग्रहायणसम्बन्धिनि त्रि ।

आग्रहायणी, स्त्री, ( अग्रे हायनमस्याः । मतभेदे मार्गशीर्षमारभ्य वर्षप्रवृत्तेः । प्रज्ञाद्यण् । पूर्व्वपदादिति णत्वं । गौरादित्वात् ङीष् ) मृगशिरोनक्षत्रं । इत्यमरः ॥ अग्रहायणमासस्य पौर्णमासी ॥

आघट्टकः, पुं, (आङ्+घट्ट+वुन् । ततः स्वार्थे कः) रक्तापामार्गः । इति राजनिर्घण्टः ॥

आघाटः, पुं, ( आङ्+घट्+घञ् ) सीमा । इति हेमचन्द्रः ॥ अपामार्गः । इति राजनिर्घण्टः ॥

आघातः, पुं, (आङ्+हन्+घञ् ) वधस्थानं । इति त्रिकाण्डशेषः ॥ हननं । छेदनं । चोट चोप इत्यादि भाषा ॥ ( यथा साहित्यदर्पणे । "पादाघातादशोकं विकसति बकुलं योषितामास्यमद्यैः" ॥ )

आघातनं, क्ली, (आङ्+हन्+स्वार्थे णिच्+ल्युट्) वधस्थानं । इति हारावली ॥ हननं ॥

आघारः, पुं, (आङ्+घृ+घञ् ) घृतं । इति हेमचन्द्रः । ऋग्वेदिनां स्रुवेण चतुराज्यं स्रुचि दत्त्वा प्रजापतिं मनसा ध्यात्वा तूष्णीमग्नेर्वायव्यकोणादारभ्याग्नेयीं यावदविच्छिन्नघृतधारादानं । पुनः स्रुवेण चतुराज्यं स्रुचि दत्त्वा इन्द्रं ध्यात्वाग्नेर्नैरृतकोणादारभ्य ऐशानीं यावदविच्छिन्नघृतधारादानं । इति कालेशिः ॥ यजुर्वेदिनान्तु स्रुवेण मन्त्रोच्चारणपूर्व्वकपूर्व्वोक्तक्रमेण घृतधारादानं । इति पशुपतिः ॥

आघूर्णितं, त्रि, (आङ्+घूर्ण+क्त) घूर्णितनेत्रादिः । घूराण इति भाषा । यथा, देवीमाहात्म्ये ॥
"आघूर्णितो वा वातेन स्थितः पोते महार्णवे" ।।

आघ्राणं, क्ली, ( आङ्+घ्रा+ल्युट् ) तृप्तिः । इति हेमचन्द्रः ॥ गन्धग्रहणं । सोँका इति भाषा ॥
"भेदघ्राणं गन्धाघ्राणतः ।" इति कथासरित्सागरे १३ । १६ ।)

आघ्रातः, त्रि, (आङ्+घ्रा+क्त) शिङ्घितः । आक्रान्तः । इति मेदिनी ॥ तृप्तः । इति हेमचन्द्रः ॥ (घ्राणविषयीकृतः । यथा, नागानन्दे । "नीताः किं न निशा शशाङ्कधवला नाघ्रातमिन्दीवरं ॥)

आर्घ्यं, क्ली, पीतवर्णदीर्घतुण्डषट्पदसन्निभमाक्षिकोत्पन्नमधु । अस्य गुणाः । अतिशयचक्षुर्हितकारित्वं । कफपित्तरक्तदोषनाशित्वञ्च ॥ इति राजनिर्घण्टः ॥ यथा, भावप्रकाशः ॥
"मधूकवृक्षा निर्यासं क्षरन्त्यार्घ्याश्रमोद्भवाः ।
स्रवन्त्यार्घ्यं तदा ख्यातं श्वेतकं मालवे पुनः ॥
तीक्ष्णतुण्डास्तु याः पीता मक्षिकाः षट्पदोपमाः ।
आर्घ्यास्तास्तत्कृतं यत्तदार्घ्यमित्यपरे जगुः" ॥
("आर्घ्यं मध्वतिचक्षुष्यं कफपित्तहरं परं ।
कषायं कटुपाके च बल्यं तिक्तमवातकृत्" ॥
इति सुश्रुतः ॥)

आङ्, अ, उपसर्गविशेषः । अस्यार्थः । ईषत् । यथा आपिङ्गलः । अभिव्याप्तिः । यथा आजन्मब्रह्मचारी । सीमा । यथा आसमुद्रक्षितीशानां । इति रघौ १ म सर्गे । धातुयोगजः । यथा आरोहति । इत्यमरभरतौ ॥ समन्तात् । ग्रहणं । प्रत्याहृतिः । इति दुर्गादासः ॥

आङ्गं, क्ली, (अङ्गस्य इदं । अङ्ग+अण्) कोमलाङ्गं । इति त्रिकाण्डशेषः ॥

आङ्गारं, क्ली, ( अङ्गार+अण् ) अङ्गारसमूहः । इति रायमुकुटः ॥

आङ्गिकः, त्रि, ( अङ्ग+ठञ् ) अङ्गनिष्पन्नभावव्यञ्जकभ्रूक्षेपादिः । इत्यमरः ॥ मार्दङ्गिकः । इति शब्दरत्नावली ॥ ( यथा साहित्यदर्पणे ।
"भवेदभिनयोऽवस्थानुकारः स चतुर्विधः ।
आङ्गिको वाचिकश्चैवमाहार्य्यः सात्त्विकस्तथा" ।)

आङ्गिरसः, पुं, (अङ्गिरस्+अण्) बृहस्पतिः । इत्यमरः । (यथा मनुः । २ । १५१ ।
"अध्यापयामास पितॄन् शिशुराङ्गिरसः कविः ।
पुत्रका इति होवाच ज्ञानेन परिगृह्य तान्" ॥)

आचमनं, क्ली, ( आङ्+चम्+ल्युट् ) वैधकर्म्मारम्भात् पूर्व्वं वारत्रयजलपानानन्तरं यथाक्रमाद्यङ्गस्पर्शरूपशुद्धिजनकक्रिया । तत्पर्य्यायः । उपस्पर्शः २ । इत्यमरः ॥ आचमः ३ शुचिप्रयोगः ४ । इति शब्दरत्नावली ॥ तद्विधानं यथा ॥
"त्रिराचामेदपः पूर्व्वं द्विः प्रमृज्यात्ततो मुखं ।
संमृज्याङ्गुष्ठमूलेन त्रिभिरास्यमुपस्पृशेत् ॥
अङ्गुष्ठेन प्रदेशिन्या घ्राणं पश्चादनन्तरं ।
अङ्गुष्ठानामिकाभ्याञ्च चक्षुःश्रोत्रे पुनः पुनः ॥
कनिष्ठाङ्गुष्ठयोर्नाभिं हृदयन्तु तलेन वै ।
सर्व्वाभिस्तु शिरः पश्चाद्बाहू चाग्रेण संस्पृशेत् ॥

ऋचो यजूंषि सामानि त्रिः पिबन् प्रीणयेत् क्रमात् ।
अथर्व्वाङ्गिरसौ पूर्व्वं द्विः प्रमार्ज्या नयेन्मुखं ॥
सेतिहासपुराणानि वेदाङ्गानि यथाक्रमं ।
खं मुखं नासिके वायुं नेत्रे सूर्य्यं श्रुती दिशः ॥
प्राणग्रन्थिमथो नाभिं ब्रह्माणं हृदयं स्पृशेत् ।
रुद्रं मूर्द्धानमालभ्य प्रीणात्यथ शिखाम्बरीन् ॥
बाहू यमेन्द्रवरुणकुबेरवसुधानलान् ।
अभ्युक्ष्य चरणौ विष्णुमिन्द्रविष्णुकरद्वयं ।
वासुकिप्रमुखान् नागान् जलं क्षिपति यत् क्षितौ ।
येऽन्तरा विन्दवो यान्ति भूतग्रामञ्च तैर्द्दिवं ॥
अग्निवायुसूर्य्येन्द्रा गिरयोऽङ्गुलिपर्व्वसु ।
गङ्गाद्याः सरितस्तासु या रेखाः करमध्यगाः ॥
तले सोमः सतीर्थश्च स्रुतोऽन्तः पावनः करः ।
इति मार्कण्डे २१५ अध्यायः ॥ * ॥
अन्यच्च । अथाचमनं । पराशरः । यथा,—
"कृत्वाथ शौचं प्रक्षाल्य पादौ हस्तौ च मृज्जलैः ।
निबद्धशिख आसीनो द्विज आचमनं चरेत्" ॥
आपस्तम्बः । यथा,—
"हस्तेवमद्भिराजानु प्रक्षाल्य चरणौ पृथक् ।
हस्तौ चामणिबन्धाभ्यां पश्चादासीत संयतः" ॥
आजान्विति अभ्यन्तमादिना तत्पर्य्यन्तमशौचे
आजन्नात इति हारीतोक्तं सामान्यतः ।
"कृतोपवीती सव्यांशे वाङ्मनःकायसंयतः" ॥ * ॥
शिखाबन्धे विशेषमाह ब्रह्मपुराणम् ।
"गायत्र्या तु शिखां बद्ध्वा नैर्ऋत्यां ब्रह्मरन्ध्रतः ।
जुटिकाञ्च ततो बद्ध्वा ततः कर्म्म समारभेत्" ॥
याज्ञवल्क्यः । यथा,—
"अन्तर्जानु शुचौ देशे उपविष्ट उदङ्मुखः ।
प्राग्वा ब्राह्मेण तीर्थेन द्विजो नित्यमुपस्पृशेत्" ।
अन्तर्जानु जानुनोर्मध्ये हस्तौ कृत्वेति शेषः ॥
भविष्यपुराणे । यथा,—
"समौ तु चरणौ कृत्वा तथा बद्धशिखोऽनघ !" ।
आचामेदित्यनुवृत्तौ देवलः । यथा,—
"शिखां बद्ध्वा वसित्वा तु निर्णिक्ते वाससी शुभे ।
तूष्णीं भूत्वा समादाय नोद्र्ध्वञ्च विलोकयन्" ॥ * ॥
शाखान्तरोधे तु मनुः । यथा,—
"कायत्रैदशिकाभ्यान्तु न पिबेच्च कदाचन" ।
मार्कण्डेयः । यथा,—
"सपवित्रेण हस्तेन कुर्य्यादाचमनक्रियां ।
नोच्छिष्टं तत् पवित्रन्तु भुक्तोच्छिष्टन्तु वर्जयेत्" ॥
उदकग्रहणे परिमाणमाह भरद्वाजः । यथा,—
"आयतं पर्व्वणां कृत्वा गोकर्णाकृतिमत् करं ।
संहताङ्गुलिना तोयं गृहीत्वा पाणिना द्विजः ॥
मुक्ताङ्गुष्ठकनिष्ठाभ्यां शेषेणाचमनं चरेत् ।
माषमज्जनमात्रास्तु संगृह्य त्रिः पिबेदपः" ॥
याज्ञवल्क्यः ॥ यथा,—
"अद्भिस्तु प्रकृतिस्थाभिर्हीनाभिः फेनबुद्बुदैः ।
हृत्कण्ठतालुगाभिश्च यथासंख्यं द्विजातयः ॥
शुध्येरन् स्त्री च शूद्रश्च सकृत् स्पृष्टाभिरन्ततः" ।
अन्ततः ओष्ठप्रान्ते । प्रचेताः ॥
"अनुष्णाभिरफेनाभिः पूताभिर्वीक्ष्य चक्षुषा ।
हृद्गताभिरशब्दाभिस्त्रिश्चतुर्व्वाद्भिराचमेत्" ॥

चतुर्व्वेति भावप्रत्ययपेक्षया ॥ * ॥
आचमनप्रकारमाह दक्षः ।
"प्रक्षाल्य हस्तौ पादौ च त्रिः पिबेदम्बु वीक्षितं ।
संवृत्याङ्गुष्ठमूलेन द्विः प्रमृज्यात्ततो मुखं ॥
संहत्य तिसृभिः पूर्व्वमास्यमेवमुपस्पृशेत् ।
अङ्गुष्ठेन प्रदेशिन्या घ्राणं पश्चादनन्तरं ॥
अङ्गुष्ठानामिकाभ्याञ्च चक्षुःश्रोत्रे पुनः पुनः ।
नाभिं कनिष्ठाङ्गुष्ठेन हृदयन्तु तलेन वै ॥
सर्व्वाभिस्तु शिरोदेशं बाहू चाग्रेण संस्पृशेत्" ।
पुनःपुनरिति घ्राणादीनां प्रत्येकद्वयाभिप्रायेण ।
इति कौर्म्मः ॥ * ॥
वीक्षणानुक्षणयोरपवादमाह यमः ।
"रात्रावनीक्षितेनापि शुद्धिरुक्ता मनीषिभिः ।
उदकेनातुराणाञ्च तथोष्णेनोष्णपायिनां" ॥ * ॥
मुखमार्ज्जनानन्तरं व्यासः । "वामहस्तं पादौ
शिरश्च दक्षिणेन पाणिना जलेनाभ्युक्षयेत्" इति
सामवेदिक्रमः । यजुर्व्वेदिनान्तु गोतमः । "पादौ
चाभ्युक्षयेत् खानि चोपस्पृशेत् शीर्षणि मूर्द्धि
दद्यात् उदकविन्दून्" ॥ * ॥
इन्द्रियस्पर्शे विशेषमाह मनुः । "खानि चैव
स्पृशेदद्भिः" इति । नाभिस्पर्शे व्यासः । यथा,—
"ततः स्पृशेन्नाभिदेशं पुनरापश्च संस्पृशेत्" ।
इन्द्रियस्पर्शानन्तरं भविष्ये । यथा,—
"यद्भूमावुदकं वीर सहुत्सृजति दानव ।
वासुकिप्रमुखान्नागान् तेन प्रीणाति मानवः" ॥ * ॥
जलस्थलोभयकर्म्मानुष्ठानार्थञ्च जलस्थलैकचरणे-
नाचमनं कर्त्तव्यमाह पैठीनसिः । "अन्तरुदके
आचान्तो अन्तरेव शुद्धो भवति वहिरुदके आ-
चान्तो वहिरेव शुद्धः स्यात् तस्मादन्तरेकं वहि-
रेकञ्च कृत्वा पादमाचामेत् सर्व्वत्र पूतो भवति"
इति ॥ * ॥ जलमध्ये जानोरूर्द्धमुत्तिष्ठन्नाचमन-
माह विष्णुः । यथा,—
"जानोरूर्द्धं जले तिष्ठन्नाचान्तः शुचितामियात् ।
अधस्ताच्छतकृत्वोऽपि समाचान्तो न शुध्यति" ॥
हारीतः । यथा, —
"आर्द्रवासा जले कुर्य्यात्तर्पणाचमनं जपं ।
शुष्कवासाः स्थले कुर्य्यात्तर्पणाचमनं जपं" ॥ * ॥
आचमननिषेधे देवलः । यथा,—
सोपानत्को जलस्थो वा मुक्तकेशोऽपि वा पुनः ॥
उष्णीषी वापि नाचामेद्वस्त्रेणावेष्ट्य वा शिरः ॥
न गच्छन्न शयानश्च न चलन्न परान् स्पृशन् ।
न हसन् नैव संजल्पन्नात्मानञ्चैव वीक्षयन् ॥
केशान्नीवीमधःकायमस्पृशन् धरणीमपि ।
यदि स्पृशति चैतानि भूयः प्रक्षालयेत् करं" ॥
आत्मानं हृदयं । तथा व्यासः ।
"शिरः प्रावृत्य कण्ठं वा मुक्तकच्छशिखोऽपि वा ।
अकृत्वा पादयोः शौचमाचान्तोऽप्यशुचिर्भवेत्" ॥
मरीचिः । यथा,
"न वहिर्जानु त्वरया नासनस्थो न चास्थितः ।
न पादुकास्थो नाम्यक्तः शुचिः प्रयतमानसः ॥
भुक्तासनस्थोऽप्याचामेन्नान्यकाले कदाचन ।
जानुभ्यामूर्द्धमाचम्य जले तिष्ठन्न दुष्यति" ॥

शाट्यायनः । यथा,
"स्नानमाचमनं होमं भोजनं देवतार्च्चनं ।
प्रौढ़पादो न कुर्व्वीत स्वाध्यायं पितृतर्पणम्" ॥ * ॥
द्विराचमननिमित्तानि ॥
"स्नात्वा पीत्वा क्षुते सुप्ते भुक्त्वा रथ्योपसर्पणे ।
आचान्तः पुनराचामेद्वासो विपरिधाय च" ॥
ब्रह्मपुराणं ॥ यथा,
"होमे भोजनकाले च सन्ध्ययोरुभयोरपि ।
आचान्तः पुनराचामेदन्यत्रापि सकृत् सकृत्" ॥ * ॥
अथाचमननिमित्तानि ॥
"निष्ठीवने तथाभ्यङ्गे तथा पादावसेचने ।
उच्छिष्टस्य च सम्भाषादशुच्युपहतस्य च ॥
सन्देहेषु च सर्व्वेषु शिखां बद्ध्वा तथैव च ।
विना यज्ञोपवीतेन नित्यमेवमुपस्पृशेत् ॥
उष्ट्रवायससंस्पर्शे दर्शने चान्त्यवासिनां" ॥
हारीतः । यथा,
क्रोधमोहोच्छिष्टसम्भाषणे मूत्रपुरीषोत्सर्गदर्शने
देवमभिगन्तुकाम आचामेत् ॥ * ॥
अथ आचमनप्रतिप्रसवमाह स्मृतिः । यथा,
"क्षुते निष्ठीवने सुप्ते परिधानेऽश्रुपातने ।
कर्म्मस्थ एषु नाचामेद्दक्षिणं श्रवणं स्पृशेत्" ॥
वृद्धशातातपः ।
"वातकर्म्मणि निष्ठीवे दन्तश्लिष्टे तथानृते ।
क्षुते पतितसंलापे दक्षिणश्रवणं स्पृशेत्" ॥
मार्कण्डेयपुराणम् ॥ यथा,
"कुर्य्यादालम्भनं स्पर्शं गोपृष्ठस्यार्कदर्शनम् ।
कुर्व्वीतालम्भनं वापि दक्षिणश्रवणस्य च ॥
यथाविभवतो ह्येतत् पूर्व्वाभावे ततः परम्" ॥ * ॥
आचमने जलाधारविशेषमाह । उशनाः ॥ यथा,
"कांस्यायसेन पात्रेण त्रपुसीसकपित्तलैः ।
आचान्तः शतकृत्वोऽपि न कदाचित् शुचिर्भवेत्" ॥
इति गोपालचक्रवर्त्तिकृताचारनिर्णयः ॥
"आयतं पर्व्वणां कृत्वा गोकर्णाकृतिवत् करं ।
संहताङ्गुलिना तोयं गृहीत्वा पाणिना द्विजः ॥
मुक्ताङ्गुष्ठकनिष्ठाभ्यां शेषेणाचमनं चरेत् ।
माषमज्जनमात्रास्तु संगृह्य त्रिः पिबेदपः" ॥
इति भारद्वाजः ॥
"अद्भिस्तु प्रकृतिस्थाभिर्हीनाभिः फेनबुद्बुदैः ।
हृत्कण्ठतालुगाभिश्च यथासंख्यं द्विजातयः ॥
शुध्येरन् स्त्री च शूद्रश्च सकृत्स्पृष्टाभिरन्ततः" ॥
इति याज्ञवल्क्यः ॥
"हृद्गाभिः पूयते विप्रः कण्ठगाभिश्च भूमिपः ।
वैश्योऽद्भिः प्राशिताभिश्च शूद्रः स्पृष्टाभिरन्ततः" ॥
इति मनुः ॥
"स्त्रियाश्चैदशिकं तीर्थं शूद्रजातेस्तथैव च ।
सकृदाचमनाच्छुद्धिरेतयोरेव चोभयोः" ॥
इति मिताक्षरा ॥

आचमनकः, पुं, (आचमन + वुन् । ) निष्ठीवनपात्रं । पिक्दान डावर इति भाषा । तत्पर्य्यायः । प्रोथः २ कटकोलः ३ पतद्ग्रहः ४ । इति हारावली ॥ ("कोणस्थिताङ्गानकिताचमनकवाहिनि" । इति हर्षचरिते ॥)

आचमनीयं, क्ली, (आचम्यतेऽनेन । आङ्+चम्+अनीयर् ।) मुखप्रक्षालनार्थजलं । तद्दानविधिर्यथा, कालिकापुराणे ६७ अध्यायः ॥

"दद्यादाचमनीयन्तु सुगन्धिसलिलैः शुभैः ।
कर्पूरवासितैर्वापि छायागुरुसुधूपितैः ॥
यथा तथा सुगन्धैर्वा प्रसन्नैः फेनवर्ज्जितैः ।
तत्तेजसेन पात्रेण शङ्खेनाथ प्रदापयेत् ॥
उदकं दीयते यत्तु प्रसन्नं फेनवर्ज्जितं ।
आचमनाय देवेभ्यस्तदाचमनमुच्यते ॥
केवलं तोयपात्रेण तदा दद्यात्प्रसिञ्चितं ।
वाञ्छितन्तु सुराध्यायैः कर्त्तव्यं यदि लभ्यते ॥
आयुर्बलं यशोवृद्धिं प्रदायाचमनीयकं ।
लभते साधको नित्यं कामांश्चैव यथेप्सितान्" ॥

आचरणं, क्ली, (आङ्+चर्+ल्युट्) आचारः । व्यवहारः ॥ ("अधीतिबोधाचरणप्रचारणैः" । इति नैषधे । )

आचरितं, त्रि, (आङ्+चर्+क्तः) कृताचरणं । ("अयं वामकरे कृत्वा या सन्ध्याचरिता द्विजैः" । इति काशीखण्डे ।) व्यवहृतं । (यदुक्तं ।
"दारपुत्रपशून् हत्वा कृत्वा द्वारोपवेशनं ।
यत्रार्थी दाप्यतेऽर्थं स्वं तदाचरितमुच्यते" ॥
एतत्तु पारिभाषिकं ।)

आचान्तः, त्रि, (आङ्+चम्+क्तः) कृताचमनः । यथा । बौधायनः ।
"स्नात्वा पीत्वा क्षुते सुप्ते भुक्त्वा रथ्योपसर्पणे ।
आचान्तः पुनराचामेत् वासो विपरिधाय च" ॥
इत्याह्निकतत्त्वं ।

आचामः, पुं, (आङ्+चम्+घञ्) आचमनं । इति शब्दरत्नावली ॥ भक्तमण्डः । इत्यमरः ॥ (भक्षणं । पानं । यथा, काव्यप्रकाशे ।
"अचोर्द्ध एव निमुक्ताचलिन्धिकाचामकम्पीति" ॥)

आचारः, पुं, (आङ्+चर्+घञ् ) व्यवहारः । तत्पर्य्यायः । चरित्रं २ चरितं ३ चारित्रं ४ चरणं ५ वृत्तं ६ शीलं ७ । इति हेमचन्द्रः ॥ आगाचमनादिः । इति मानवे २ अध्याये ६९ श्लोकटीकायां कुल्लूकभट्टः । व्यवहारः ॥ स तु विचारः । यथा बृहस्पतिः ।
"आचारेणावसन्नोऽपि पुनर्लेखयते यदि ।
सोऽभियोज्यो जितः पूर्व्वं प्राड्न्यायस्तु स उच्यते" ॥
इति व्यवहारतत्त्वं ॥ चरित्रं । एतद्विवरणं सदाचारशब्दे द्रष्टव्यं ॥ ( रघुः । २ । १० । "आचारशालैरिव पौरकन्याः" ।)

आचारवर्ज्जितः, त्रि, (आचारेण वर्ज्जितः ।) आचारबहिर्भूतः । इति जटाधरः ॥ (अव्यवस्थितः । नियमरहितः । )

आचारी, स्त्री, (आङ्+चार+ङीप्) हिलमोचिका लता । इति राजनिर्घण्टः ॥ हेलञ्चा इति भाषा । आचारविशिष्टे त्रि । (हिलमोचिकाशब्देऽस्या गुणादयो ज्ञातव्याः ॥)

आचार्य्यः, पुं, (आङ्+चर्+ण्यत् ।) वेदाध्यापकः । वैदिकमन्त्रव्याख्याकर्त्ता । तत्पर्य्यायः । मन्त्रव्याख्याकृत् २ । इत्यमरः ॥ द्रोणाचार्य्यः । इति त्रिकाण्डशेषः ॥ तल्लक्षणं यथा,—
"उपनीय तु यः शिष्यं वेदमध्यापयेत् द्विजः ।
सकल्पं सरहस्यञ्च तमाचार्य्यं प्रचक्षते" ॥
इति मानवे २ । १४० ॥

(ततोऽनन्तरमाचार्य्यं परीक्षेत । तद्यथा,—
"पर्य्यवदातश्रुतं परिदृष्टकर्म्माणं दक्षं दक्षिणं शुचिं जितहस्तमुपकरणवन्तं सर्व्वेन्द्रियोपपन्नं प्रकृतिज्ञं प्रतिपत्तिज्ञमनुपस्कृतविद्यमनहङ्कृतमनसूयकमकोपनं क्लेशक्षमं शिष्यवत्सलमध्यापकं ज्ञापनसमर्थमिति । एवंगुणो ह्याचार्य्यः सुक्षेत्रमार्त्तवो मेघ इव शस्यगुणैः सुशिष्यमाशु वैद्यगुणैः सम्पादयति । तमुपसृत्यारिराधयिषुरुपचरेदग्निवच्च देववच्च राजवच्च पितृवच्च भर्त्तृवच्चाप्रमत्तस्ततस्तत्प्रसादात् कृत्स्नं शास्त्रमधिगम्य शास्त्रस्य दृढ़तायामभिधानस्य सौष्ठवेऽर्थस्य विज्ञाने वचनशक्तौ च भूयः प्रयतेत सम्यक्" । इति चरकः ॥)

आचार्य्या, स्त्री, (आचार्य्य+टाप् ।) मन्त्रव्याख्याकर्त्री । इत्यमरसिंहः ॥ (वेदादिशास्त्राध्यापनकर्त्री ।)

आचार्य्याणी, स्त्री, (आङ्+चर्+ण्यत्+ङीप्+आनुक् ॥) आचार्य्यपत्नी । इत्यमरः ॥ (यथा महावीरचरिते ॥
"त्र्यम्बकं देवमाचार्य्यमाचार्य्याणीञ्च पार्व्वतीं" ॥)

आचितं, क्ली, ( आङ्+चि+क्त ।) दशभारपरिमाणं । इत्यमरः । २५ मोन इति भाषा ॥

आचितः, पुं, (आङ्+चि+क्त ।) शाकटो भारः । इत्यमरः । एक गाड़िर बोझा इति भाषा ॥ आयुतमात्रं । इति मेदिनी ॥

आचितः, त्रि, (आङ्+चि+क्तः) संगृहीतः । छन्नः । इति मेदिनी ॥ (एतत्र सन्निवेशितः, आकीर्णः, व्याप्तः, ग्रथितः, गुम्फितः । यथा भारविः ।
"कथाचितौ विष्वगिवागजौ गजौ" ॥ यथा रघुवंशे ।
"अङ्काचिता सत्वरमुत्थितायाः
पदे पदे दुर्निमिते गलन्ती" ।)

आच्छकः, पुं, वृक्षविशेषः । आच इति भाषा । तत्पर्य्यायः । रक्तवृन्तः २ पत्नीकः ३ पलिकः ४ आच्छिकः ५ । इति रत्नमाला ॥

आच्छन्नं, त्रि, (आङ्+छद्+क्तः ।) आच्छादितं । आवृतं । यथा । "मेघाच्छन्नेऽह्नि दुर्दिनं" । इत्यमरः ॥
("पङ्कपांशुजलाच्छन्नं सुपथं दस्युविद्रुतं" ।
इति हितोपदेशः ॥ )

आच्छादः, पुं, (आङ्+छद्+घञ् ।) वस्त्रं । इति हेमचन्द्रः ॥

आच्छादनं, क्ली, ( आङ्+छद्+ल्युट् ।) वस्त्रं । इत्यमरः ॥ संपिधानं । अपवारणमात्रं । इति मेदिनी ॥ (यथा मनुः । ३ । ५९ ॥
"तस्मादेताः सदा पूज्या भूषणाच्छादनाशनैः" ॥)

आच्छादितं, त्रि, (आङ्+छद्+णिच्+क्तः) कृताच्छादनं । आवृतं । ढाका इति भाषा ।

आच्छुरितं, क्ली, (आङ्+छुर+क्तः) सशब्दहास्यं । नखवाद्यं । इति धरणिः ॥ आवृतं । (यथा कथासरित्सागरे ।
"न सेहे कञ्चुकेनापि स्निग्धमाच्छुरितं वपुः" ।)

आच्छुरितकं, क्ली, (आङ्+छुर+भावे क्तः । ततः स्वार्थे कन्) सोत्प्रासहासः । इत्यमरः ॥ हास्यं । नखाघातविशेषः । इति मेदिनीकरहेमचन्द्रौ ॥

आच्छोदनं, क्ली, (आङ्+छिद्+ल्युट् । ततः पृषोदरादित्वात् इत ओत् ।) मृगया । इत्यमरः ॥

आछ, इ, आयामे । (भ्वादिं-परं-सकं-सेट् ।) इति कविकल्पद्रुमः ॥ इकारो दित्वाभावः प्रकृतिश्रमनिरासार्थः । इ आञ्छते । आयामो दीर्घीकरणं । आञ्छति कटं शिल्पी । इति । दुर्गादासः ॥

आजं, क्ली, (अज+अण् । अजसम्बन्धी छागस्य इत-मांसादिः) घृतं । इति जटाधरः ॥ (यथा वैद्यके ।
"गव्यमाजं तथा चौष्ट्रमाविकं माहिषञ्च यत् ।
अतो धातुविवृद्ध्यर्थमाजं मांसं प्रशस्यते" ॥)
(तथाच रामायणे । २ । ९१ । ६७ ।
"आजैश्चापि च वाराहैर्निष्ठानवरसञ्चयैः" ।
घृतार्थे—गव्यादिघृतभेदेन यदुक्तं तद्यथा घृतशब्दे ज्ञातव्यं किन्त्वाजशब्दव्युत्पत्त्या दुग्धादिकं यदुपलभ्यते तदत्रैव प्रदर्श्यते ॥
"आजं दधि भवेच्छ्रेष्ठं क्षयवातविनाशनं ।
दुर्नामश्वासकासेषु हितमग्निप्रदीपनं ॥
विपाके मधुरं हृद्यं रक्तपित्तप्रसादनं ।
शस्तं काश्मीपत्रं प्रोक्तं वातपित्तनिवर्हणं" ॥
इति हारीतसंहिता ॥
"नातिशीतं गुरुस्निग्धं मांसमाजमदोषलं ।
शरीरधातुसामान्यादनभिष्यन्दि बृंहणं" ॥
इति चरको वाभटश्च ॥
"गव्यतुल्यगुणन्त्वाजं विशेषाच्छोषिणां हितं ।
दीपनं लघु संग्राहि श्वासकासास्रपित्तनुत् ।
अजानामल्पकायत्वात् कटुतिक्तनिषेवनात् ॥
नात्यम्बुपानाद्व्यायामात् सर्व्वव्याधिहरं पयः" ।
"दध्याजं कफपित्तघ्नं लघुवातक्षयापहं ।
दुर्नामश्वासकासेषु हितमग्नेः प्रदीपनं ॥
विपाके मधुरं हृद्यं रक्तपित्तप्रसादनं" ॥
"आजं घृतं दीपनीयं चक्षुष्यं बलवर्द्धनं ।
कासे श्वासे क्षये चापि पथ्यं पाके च तल्लघु" ॥
इति च सुश्रुतः ॥)

आजकं, क्ली, (अज+वुञ्) अजसमूहः । छागलेर पाल इति भाषा । इत्यमरः ॥

आजकारः, पुं, (आज+कृ+अण्) शिववृषः । इति शब्दरत्नावली ॥

आजगवं, क्ली, (अजगव+प्रज्ञाद्यण्) शिवधनुः । इति हेमचन्द्रः ॥

आजन्मसुरभिपत्रः, पुं, (आ जन्मनः सुरभीणि पत्राणि यस्य सः) मरुवकवृक्षः । इति राजनिर्घण्टः ॥

आजानेयः, पुं, स्त्री, (अज्+अण्+आज+आनेयः) कुलीनाश्वः । श्रेष्ठघोटकः । इत्यमरः ॥ "शक्तिभिर्भिन्नहृदयाः स्खलन्तोऽपि पदे पदे । आजानन्ति यतः संज्ञामाजानेयास्ततः स्मृताः" ॥ इत्यश्वतत्त्वं ॥

आजिः, स्त्री, (अज्+इण्) । युद्धं । समानभूमिः ।

इत्यमरकोषमेदिन्यौ। श्रमः। इति हेमचन्द्रः। (युद्धार्थे यथा,—"आरुषती लोचनमार्गमाजौ रजोऽन्धकारस्य विजृम्भितस्य"। इति रघुः।७।४२।) आक्षेपः। इति शब्दरत्नावली॥

आजीवः, पुं, (आङ्+जीव+घञ्।) जीविका। इत्यमरः॥ ("बहुमूलफलो रम्यः स्वाजीवः प्रतिभाति मे"॥ इति रामायणे।)

आजुः, [स्] स्त्री, (आङ्+जुष्+क्विप्।) आजूः। विष्टिः। इति स्वामी॥

आजूः, स्त्री, (आ+जुगतौ+क्विप् दीर्घश्च।) वेतनं विना कर्म्मकारः। बेगार इति भाषा। इत्यमरः॥ (यदुक्तम्, "हठादकृतिकः कोऽपि विष्टिराजूश्च कीर्त्त्यते"।)

आज्ञप्तः, त्रि, (आ+ज्ञा+णिच्+क्त।) आज्ञाप्राप्तः। यथा, देवीमाहात्म्यम्। "आज्ञप्तास्ते ततो दैत्याश्चण्डमुण्डपुरोगमाः। चतुरङ्गबलोपेता ययुरभ्युद्यतायुधाः"॥

आज्ञा, स्त्री, (आङ्+ज्ञा+अङ्+टाप्।) आदेशः। तत्पर्य्यायः। अववादः २ निर्देशः ३ निदेशः ४ शासनं ५ शिष्टिः ६। इत्यमरः॥ ("तथेति शेषामिव भर्त्तुराज्ञां"। इति कुमारे। ३।२२। "पश्चाद् वनाय गच्छेति तदाज्ञां मुदितोऽग्रहीत्" इति रघौ। १२।७।)

आज्ञाकारी, [न्] त्रि, (आज्ञा+कृ+णिनि।) आज्ञया कर्म्मकारी। आज्ञावहः। आज्ञानुवर्त्ती॥

आज्ञाचक्रं, क्ली, षट्चक्रान्तर्गतषष्ठचक्रम्। तथा च तन्त्रे,—"आज्ञानामाम्बुजं तद्धिमकरसदृशं ध्यानधामप्रकाशं हक्षाभ्यां वै कलाभ्यां प्रविलसितवपुर्नेत्रपत्रं सुशुभ्रं। तन्मध्ये हाकिनी सा शशिसमधवला वक्त्रषट्कं दधाना विद्यां मुद्रां कपालं डमरुजपवटीं बिभ्रती शुद्धचित्ता॥ एतत् पद्मान्तराले निवसति च मनः सूक्ष्मरूपं प्रसिद्धम्"॥ इति तत्त्वचिन्तामणौ षष्ठप्रकाशः॥

आज्ञापकः, त्रि, (आङ्+ज्ञा+णिच्+ण्वुल्।) आज्ञाकर्त्ता।

आज्ञापत्रं, (आज्ञायै पत्रं।) क्ली आदेशलिपिः। निदेशलिखनं। हुकुमनामा इति पारस्यभाषा॥

आज्ञापनं, क्ली, (आङ्+ज्ञापि+ल्युट्।) विज्ञापनं। जानान इति भाषा॥

आज्ञाप्तः, त्रि, (आङ्+ज्ञापि+क्त।) आज्ञप्तिविशिष्टः। लब्धाज्ञः। आज्ञाप्राप्तः॥

आज्यं, क्ली, (आङ् पूर्व्वात् अञ्जेः संज्ञायामिति क्यप्।) घृतं। इत्यमरः॥ श्रीवासः। इत्यमरमालः॥ (यागक्रियासाधनं तैलदुग्धादिकमपि आज्यशब्देनोच्यते। यदुक्तं कर्म्मप्रदीपे। "घृतं वा यदि वा तैलं पयो वा दधि यावकं। आज्यस्थाने नियुक्तानामाज्यशब्दो विधीयते"॥ यथा रघुवंशे। १।२०। "तस्याभिलोऽभज्जपतेः पुरोधाः हुत्वाभिराज्यादिभिरग्निकल्पः"॥)

आज्यभागः, पुं, (आज्यस्य भागः) ऋग्वेदिनां अग्नेरुत्तरभागे श्वेताभिसम्भवदानकाहुत्याकृतिः तद्दक्षिणभागे सोमसम्भवदानकाकृतिश्च। इति कात्यायनः। यजुर्वेदिनान्तु अग्नेरुत्तरदक्षिणयोः पश्चिमादिप्राच्यन्तघृतधारा। इति पशुपतिः॥

आञ्जनेयः, पुं, (अञ्जनाया अपत्यं, अञ्जना+ढक्।) अञ्जनानामवानरीपुत्रः। स तु हनूमान्। इति त्रिकाण्डशेषः॥ (यथा महानाटके।

"उल्लङ्घ्य सिन्धोः सलिलं सलीलं
यः शोकवह्निं जनकात्मजायाः।
आदाय तेनैव ददाह लङ्कां
नमामि तं प्राञ्जलिराञ्जनेयं"॥)

आञ्जिनेयः, पुं, (आञ्जन+ढक्+इट्।) जन्तुविशेषः। आजगाह इति ख्यातः। इति शब्दमाला॥

आटिः, पुं, (आङ्+अट+इन्।) पक्षिविशेषः। शराति इति ख्यातः। इत्यमरः॥

आटीकनं, क्ली, (आङ्+टीक्+ल्युट्।) वत्सानां गमनं। इति त्रिकाण्डशेषः॥

आटीकरः, पुं, (आटीक+र।) वृषः। इति भूरिप्रयोगः॥

आटोपः, पुं, (आङ्+टुप्+घञ्) दर्पः। इति हेमचन्द्रः॥ वायुजन्य-उदरगुड़गुड़ाशब्दः। इति वैद्यकं॥ (गर्व्वः, सम्भ्रमः, संरम्भः। यथा-पञ्चतन्त्रे "विषं भवतु मा वाभूत् फटाटोपो भयङ्करः"। यथा शिशुपालवधे। 'साटोपमुर्व्वीमनिशं नदन्तः'। "आटोपशूलानवमीगुरुत्व-स्तैमित्यमावाहकफप्रसेकैः"। इति माधवकरः॥)

आडम्बरः, पुं, (आङ्+डम्+वरच्। ततः द स्थाने ड। आडम्यते इवि क्षेपे घञ् भावे वा। आडम्बं राति रमयति वा आतोद्यमेति कः। मूलविभुजेति वा कः। आडम्बयति वा बाहुलकादरन्।) पटहः। तूर्य्यरवः। गजेन्द्रगर्जनं। इत्यमरः॥ आरम्भः। इति त्रिकाण्डशेषः॥ पक्ष। दर्पः। इति मेदिनी॥ क्रोधः। इति स्वामी॥ हर्षः। इति शब्दरत्नावली॥ (आयोजनं। एकत्र सन्निवेशः, यथा, भामिनीविलासे। "धातः किं नु विधौ विधातुमुचितो धाराधराडम्बरः"॥ युद्धं। रवार्थे यथा, "असारस्य पदार्थस्य प्रायेणाडम्बरो महान्। नहि तादृक्ध्वनिः स्वर्णे यथा कांस्ये प्रजायते"॥)

आडिः, स्त्री, (आङ्+अड्+इन्।) शरालिपक्षी। इत्यमरः॥ स्वनामख्यातमत्स्यविशेषः। अस्याः गुणाः। गुरुत्वं। स्निग्धत्वं। वातश्लेष्मप्रकोपणत्वं। अतिबलशुक्रमेधाग्निवृद्धिकारित्वञ्च॥ इति राजवल्लभः॥ (विश्वामित्रशापेन वशिष्ठो महर्षिराडिपक्षिरूपतां गतः इति पौराणिकी कथा॥ यथा मार्कण्डेयपुराणे आडिबकयुद्धे,—"श्रुत्वा शापं महातेजा विश्वामित्रोऽपि कौशिकः। त्वमप्याडिर्भवस्वेति प्रतिशापमयच्छत॥ आडिं सोऽप्यभवत्तीवो बकः पञ्चाममप्यगात्"॥)

आडूः, पुं, (अड शब्दे। बलीहोऽहोप्रभृ।) उडुपः। भेला भाड इत्यादि भाषा। इत्युणादिकोषः।

आढकं, क्ली, (आ समन्तात् ढौकते ढौक्यते वा ढौक गतौ अच् घञ् वा पृषोदरादिः। परिमाणविशेषः। आढा इति भाषा। यथा,—"शतयोजनविस्तीर्णं त्रिंशद्दुयोजनमायतं। आढकस्य प्रवेशान्तं मुनिभिः परिकीर्त्तितं"॥ अपि च॥ "त्रिंशद्दुयोजनविस्तीर्णं शतयोजनमायतं। विंशयोजनगम्भीरमाढकं परिकीर्त्तितं"॥ इति गयामतिभद्रः। इति ज्योतिस्तत्त्वं॥

आढकः, पुं, स्त्री, चतुःप्रस्थपरिमाणं। आढ़ी इति भाषा। इत्यमरः॥ द्रोणचतुर्थभागः। इति लीलावती॥ अष्टमुष्टिर्भवेत् कुञ्चिरित्यादिवचनात् षट्पञ्चाशदधिकद्विशतमुष्टिर्भवति। व्यवहारे षोडशसेरो विंशतिसेरो वा। वैद्यकमते अष्टशरावपरिमाणं। तत्पर्य्यायः। पात्रं २ कंसं ३ भाजनं ४। इति परिभाषा॥ ("चतुःप्रस्थैस्तथाढकं। भाजनं कांस्यपात्रञ्च चतुःषष्टिपलञ्च तत्"॥ इति शार्ङ्गधरः। "चतुःप्रस्थमथाढकं। "पात्रं तदेव विज्ञेयं कंसं प्रस्थाष्टकन्तथा"॥ इति चरकः।) अपत्यविवक्षायां आढकिकेत्यपि स्यात्। इत्यमरटीकासारसुन्दरी॥ आढिका। इति भरतः॥

आढकिकः, त्रि, (आढक+ठञ्।) आढकपरिमितबीजवपनादियोग्यक्षेत्रादिः। इत्यमरः॥

आढकी, स्त्री, शमीधान्यविशेषः। अरहर इति भाषा। तत्पर्य्यायः। तुवरी २ वर्णा ३ करवीरभुजा ४ वृत्तबीजा ५ पीतपुष्पा ६। अस्याः गुणाः। कषायत्वं। मधुरत्वं। कफपित्तनाशित्वञ्च। तद्दलगुणाः। ईषद्वातविकारित्वं। गुरुत्वं। ग्राहित्वञ्च। पीता रक्ता सिता त्रिविधेयं। श्वेता दीपना। लोहिता वृष्या बल्या विषसापादिघ्नी च। पीता दीपनी पित्तदाहध्वंसिनी च॥ तद्यूषं बल्यं। इति राजनिर्घण्टः॥ अमरमते तत्पर्य्यायः। काक्षी २ मृतत्स्ना ३ तुवरिका ४ मृत्तालकं ५ सुराष्ट्रजं ६। भरतमल्लिकमते एतत् षट्कं गोपीचन्दनस्य। सारसुन्दरीमते तुवरिकाख्यगन्धद्रव्यस्य। केषाञ्चिन्मते सुगन्धिमृत्तिकायाः॥ (अस्याः पर्य्यायगुणावाह। "आढकी तुवरी चापि सा प्रोक्ता शणपुष्पिका॥ आढकी तुवरा रूक्षा मधुरा शीतला लघुः। ग्राहिणी वातजननी वर्ण्या पित्तकफास्रजित्"॥ इति भावप्रकाशः॥

"मृदुः कषाया च तराक्षपित्तं
निहन्ति कासानलिवातला स्यात्।
गुल्मज्वरारोचककासहृर्दि-
हृद्रोगदुर्नामहराढकी स्यात्"॥

इति हारीतः॥ "आढकी कफपित्तघ्नी वातला,"। इति चरकः॥ "आढकी कफपित्तघ्नी नातिवातप्रकोपनी"। इति सुश्रुतः॥)

दित्यादिश्रुतेः इन्द्रियाणामभावे शरीरचलनाभावात् काणोऽहं बधिरोऽहं इत्याद्यनुभवाच्च इन्द्रियाण्यात्मेति वदति ॥ ३ ॥ अन्यस्तु चार्व्वाकः अन्योऽन्तर आत्मा प्राणमय इत्यादिश्रुतेः प्राणाभावे इन्द्रियचलनायोगात् अहमशनायावानहं पिपासावाम् इत्याद्यनुभवाच्च प्राण आत्मेति वदति ॥ ४ ॥ इतरस्तु चार्व्वाकः अन्योऽन्तर आत्मा मनोमय इत्यादिश्रुतेः मनसि सुप्ते प्राणादेरभावात् अहं सङ्कल्पवानहं विकल्पवानित्याद्यनुभवाच्च मन आत्मेति वदति ॥ ५ ॥ बौद्धस्तु अन्योऽन्तर आत्मा विज्ञानमय इत्यादिश्रुतेः कर्त्तुरभावे करणस्य शक्त्यभावात् अहं कर्त्ताहं भोक्ता इत्याद्यनुभवाच्च बुद्धिरात्मेति वदति ॥ ६ ॥ प्राभाकरतार्किकौ तु अन्योऽन्तर आत्मा आनन्दमय इत्यादिश्रुतेः सुषुप्तौ बुद्ध्यादीनामज्ञाने लयदर्शनात् अहमज्ञोऽहं ज्ञानीत्याद्यनुभवाच्च अज्ञानमात्मेति वदतः ॥ ७ ॥ भट्टस्तु प्रज्ञानघन एवानन्दमय आत्मेत्यादिश्रुतेः सुषुप्तौ प्रकाशाप्रकाशसद्भावात् मामहं न जानामि इत्याद्यनुभवाच्च अज्ञानोपहितं चैतन्यमात्मेति वदति ॥ ८ ॥ अपरबौद्धः असदेवेदमग्र आसीदित्यादिश्रुतेः सुषुप्तौ सर्व्वाभावादहं सुषुप्तौ नासमित्युत्थितस्य स्वाभावपरामर्शविषयानुभवाच्च शून्यमात्मेति वदति ॥ ९ ॥ एतेषां पुत्त्रादीनां शून्यपर्य्यन्तानामनात्मत्वमुच्यते। एतैरतिप्राकृतादिवादिभिरुक्तेषु श्रुतियुक्त्यनुभवाभासेषु पूर्व्वपूर्व्वोक्तश्रुतियुक्त्यनुभवाभासानामुत्तरोत्तरश्रुतियुक्त्यनुभवाभासैरात्मबाधदर्शनात् पुत्त्रादीनामनात्मत्वं स्पष्टमेवेति ॥ १० ॥ किञ्च प्रत्यगस्थूलोऽचक्षुरप्राणोऽमना अकर्त्ता चैतन्यं चिन्मात्रं सदित्यादिप्रबलश्रुतिविरोधात् अस्य पुत्त्रादिशून्यपर्य्यन्तस्य जडस्य चैतन्यभास्यत्वेन घटादिवदनित्यत्वात् अहं ब्रह्मेति विद्वदनुभवप्राबल्याच्च तत्तच्छ्रुतियुक्त्यनुभवाभासानां बाधितत्वादपि पुत्त्रादिशून्यपर्य्यन्तमखिलमनात्मैव। अतस्तद्भासकं नित्यशुद्धबुद्धमुक्तसत्यस्वभावं प्रत्यक्चैतन्यमेवात्मवस्त्विति वेदान्तविदनुभवः" । इति वेदान्तसारः ( ५०—५८ ) ।

आत्मदर्शः, पुं, (आत्मन् + दृश् + घः ।) दर्पणः। इति हेमचन्द्रः। (यथा रघुवंशे। "निश्वासवाष्पापगमात् प्रपन्नः । प्रसादमात्मीयमिवात्मदर्शः"। )

आत्मनीनं, त्रि, (आत्मन् + खः ।) आत्मने हितं । इति व्याकरणं ॥ पथ्यं । इति राजनिर्घण्टः ॥ ("भवभिर्दलितमात्मनीनाम्" । इति प्रबोधचन्द्रोदयः । )

आत्मनीनः, पुं, ( आत्मन् + ख । ) सुतः । श्यालः ॥ प्राणाधारः । विदूषकः । इत्यजयः ॥

आत्मबन्धुः, पुं, ( आत्मनः बन्धुः । षष्ठीतत्पुरुषः । यदुक्तं "आत्ममातुःस्वसुः पुत्त्रा आत्मपितुःस्वसुः सुताः । आत्ममातुलपुत्त्राश्च विज्ञेया आत्मबान्धवाः" ।) पितृष्वसृपुत्त्रः । मातुलपुत्त्रः । मातृष्वसृपुत्त्रः । इति स्मृतिः ॥

आत्मवीरः, पुं, (आत्मा वीरइव यस्य ।) प्राणवान् । श्यालकः । विदूषकः । इति मेदिनी ॥

आत्मभूः, पुं, (आत्मन् + भू + क्विप् ।) ब्रह्मा । कामदेवः । इत्यमरः ॥ विष्णुः । शिवः । इति शब्दरत्नावली ॥

(यथा रघुवंशे १० । २० ।

"सर्व्वज्ञस्त्वमविज्ञातः सर्व्वयोनिस्त्वमात्मभूः" ।)

आत्ममूली, स्त्री, (आत्मन् + मूल + ङीष् ।) दुरालभावृक्षः । इति शब्दमाला ॥ (दुरालभाशब्देऽस्याविशेषोऽवसेयः ।)

आत्मम्भरिः त्रि, ( आत्मानं बिभर्त्तीति, आत्मन् + भृ + इन् + मुम् ।) आत्मोदरमात्रभरणकर्त्ता । तत्पर्य्यायः । कुक्षिम्भरिः २ स्वोदरपूरकः ३ । इत्यमरः ॥ ( आधूनः, परार्थवैमुख्येन स्वार्थसाधनपरः । यथा भट्टिकाव्ये । "आत्मम्भरिस्त्वं पिशितैर्नराणां" । यथा हितोपदेशे ।

"शिष्टैरप्यविशेषज्ञ उग्रश्च कृतनाशकः ।

त्यज्यते किं पुनर्नान्यैः यश्चाप्यात्मम्भरिर्नरः" ॥)

आत्मयोनिः, पुं, (आत्मैव योनिरुपादानकारणमस्य बहुव्रीहिः ।) ब्रह्मा । विष्णुः । शिवः । कामदेवः । इति मेदिनीशब्दरत्नावल्यौ (यथा कुमारे ३ । ७० ।

"स्वयं शरीरेण घनाश्रितापां

प्रहर्त्तुमभ्युद्यतमात्मयोनिं" ॥)

आत्मरक्षा, स्त्री, महेन्द्रवारुणीवृक्षः । इति राजनिर्घण्टः ॥ (आत्मशरीररक्षणं ।)

आत्मशल्या, स्त्री, शतावरी । इति राजनिर्घण्टः ॥

आत्मश्लाघा, स्त्री, ( आत्मनः श्लाघा । ) आत्मगर्व्वः । स्वीयप्रशंसा ॥

आत्महत्या, स्त्री, ( आत्मनः हत्या । ) आत्मघातः । स्ववधः ॥

आत्महा, [न्] पुं, (आत्मन् + हन् + क्विप् ।) देवलः । इति शब्दरत्नावली ॥ आत्मघाती । "नृदेहमाद्यं सुलभं सुदुर्लभं प्लवं सुकल्पं गुरुकर्णधारं । मयानुकूलेन नभस्वतेरितं पुमान् भवाब्धिं न तरेत् स आत्महा" ॥ इति श्रीभागवतं ॥ (अपरञ्च यथा, "लब्ध्वा कथञ्चित् नरजन्म दुर्लभं तत्रापि पुंस्त्वं श्रुतिपारदर्शनं । यस्त्वात्ममुक्त्यै न यतेत मूढधीः स आत्महा स्वं विनिहन्त्यसद्ग्रहात्" ॥)

आत्मा, [ न् ] पुं, (अतति सन्ततभावेन जाग्रदादिसर्व्वावस्थासु अनुवर्त्तते, अत सातत्यगमने + मनिण् । ) यत्नः । धृतिः । बुद्धिः । स्वभावः । ब्रह्म । देहः । इत्यमरः ॥ मनः । इति मेदिनी ॥ परव्यावर्त्तनं । इति धरणी ॥ पुत्त्रः । इति शब्दरत्नावली ॥ जीवः । अर्कः । हुताशनः । वायुः । इति हेमचन्द्रः ॥

("आत्मनः कर्म्मयोगात् ज्ञानं तस्य प्रवर्त्तते" ।

"अव्यक्तमात्मा क्षेत्रज्ञः शाश्वतो विभुरव्ययः" ।

"चेतनावान् यतश्चात्मा ततः कर्त्ता निरुच्यते" ।

"देही सर्व्वगतो ह्यात्मा स्वे स्वे संस्पर्शनेन्द्रिये ।

सर्व्वाः सर्व्वाश्रयस्थास्तु नात्मातो वेत्ति वेदनाः" ॥

"विभुत्वमत एवास्य यस्मात् सर्व्वगतो महान् ।

मनसश्च समाधानात् पश्यत्यात्मा तिरस्कृतं" ॥

"आदिर्नास्त्यात्मनः क्षेत्रपारम्पर्य्यमनादिकं" ।

"स सर्व्वगः सर्व्वशरीरभृच्च,

स विश्वकर्म्मा स च विश्वरूपः ।

स चेतनाधातुरतीन्द्रियश्च,

स नित्ययुक् सानुशयः सएव ॥

रसात्ममातापितृसम्भवानि,

भूतानि विद्याद्दश षट् च देहे ।

चत्वारि तत्रात्मनि संश्रितानि,

स्थितस्तथात्मा च चतुर्षु तेषु ॥

भूतानि मातापितृसम्भवानि,

रजश्च शुक्रञ्च वदन्ति गर्भे ।

आप्याय्यते शुक्रमसृक्षुभूतै-

र्यैस्तानि भूतानि रसोद्भवानि ॥

भूतानि चत्वारि तु कर्म्मजानि,

यान्यात्मलीनानि विशन्ति गर्भं ।

सवीजधर्म्मा ह्यपरापराणि,

देहान्तराण्यात्मनि याति याति ॥

रूपाद्धिरूपप्रभवः प्रसिद्धः,

कर्म्मात्मकानां मनसो मनस्तः ।

भवन्ति येत्वाकृतिबुद्धिभेदाः

रजस्तमस्तच्च च कर्म्महेतुः ॥

अतीन्द्रियैस्तैरतिसूक्ष्मरूपै

रात्मा कदाचिन्न वियुक्तरूपः ।

न कर्म्मणा नैव मनोमतिभ्यां

न चाप्यहङ्कारविकारदोषैः" ॥

इति चरकः ॥

"यदा यदात्माकृतिमानयं भवे-

त्तदा मनस्त्वधितिष्ठतीन्द्रियं ।

ततो मनोऽधिष्ठितमिन्द्रियं घटे-

प्रवर्त्तते संशयबुद्धिसम्भवे" ॥

इति वैद्यकवाग्भटार्थदर्पणं ॥)

आत्माधीनः, पुं, (आत्मनोऽधीनः ।) पुत्त्रः । प्राणाधारः । श्यालकः । विदूषकः । इति हेमचन्द्रः ॥

आत्माशी, [ न् ] पुं, (आत्मन् + अश + णिन् ।) मत्स्यः । इति त्रिकाण्डशेषः ॥

आत्माश्रयः, पुं, (आत्मा आश्रयो यस्य सः ।) तर्कविशेषः । तस्य लक्षणं । स्वापेक्षापादकप्रसङ्गत्वं । अपेक्षा च ज्ञप्तौ उत्पत्तौ स्थितौ च ग्राह्या । तत्राद्या यथा । एतद्घटज्ञानं यद्येतद्घटज्ञानजन्यं स्यात् एतद्घटज्ञानभिन्नं स्यात् । द्वितीया तु घटोऽयं यद्येतद्घटजनकः स्यात् एतद्घटभिन्नः स्यात् । तृतीया च अयं घटो यद्येतद्घटवृत्तिः स्यात् तथात्वेनोपलभ्येत इति ॥

आत्मीयः, त्रि, (आत्मन् + छ ।) स्वकीयः । अन्तरङ्गः । इति हेमचन्द्रः ॥ ( यथा रघुवंशे । "प्रसादमात्मीयमिवात्मदर्शः" । कुमारसम्भवे । २ । १९ ॥

"किमिदं द्युतिमात्मीयां न बिभर्त्ति यथा पुरा" ।)

आत्मोद्भवा, स्त्री, (आत्मनः उद्भवो यस्याः सा ।) माषपर्णी । इति राजनिर्घण्टः ॥ कन्या । पुत्त्रे, पुं ॥ (माषपर्णीशब्देऽस्या विशेषो ज्ञातव्यः ।)

आत्रेयः, पुं, (अत्रेरपत्यं पुमान् । अत्रि + ढक् ।) अत्रिमुनिपुत्त्रः । स च दत्तः । दुर्व्वासाः । चन्द्रश्च ।

इति मेदिनी ॥ शरीरस्थरसधातुः । इति हेमचन्द्रः ॥

आत्रेयिका, स्त्री, (अत्रि + ढक् + कन् + टाप् ।) ऋतुमती । इति हलायुधः ॥

आत्रेयी, स्त्री, (अत्रि + ढक् + ङीप् ।) पुष्पवती स्त्री । (यथाह अङ्गिराः,—
"आहिताग्नेर्ब्राह्मणस्य हत्वा पत्नीमनिन्दिताम् ।
ब्रह्महत्याव्रतं कुर्य्यात् आत्रेयीघ्नस्तथैव च" ॥)
नदीविशेषः । इति मेदिनी ॥ (अत्रिमुनिपत्नी ।) यथा भारते,—
"सरयूर्वारवत्या च लाङ्गली च सरिद्वरा ।
करतोया तथात्रेयी लौहित्यश्च महानदः" ॥)

आथर्व्वणं, क्ली, (अथर्व्वन् + अण् ।) अथर्व्वणां समूहः । अथर्व्वणाम्ना मुनिना प्रोक्तो वेदः अथर्व्वा तेषां समूहः । इत्यमरः ॥ शान्तिकर्म्म । इति हेमचन्द्रः ॥ (यथा महावीरचरिते ।
"आथर्व्वणस्यैव इवाभिचारः" ।)

आथर्व्वणः, पुं, (अथर्व्व वेत्तीति । अथर्व्वन् + अण् ।) पुरोहितः । अथर्व्ववेदज्ञब्राह्मणः । इति हेमचन्द्रः ॥

आदरः, पुं, (आङ् + दृ + अप् ।) आरम्भः । इति त्रिकाण्डशेषः ॥ समादरः । सम्मानः ॥ (यथा किरातार्ज्जुनीये ५ । १६ ।
"स जगादे वचनं प्रियमादरात्
मुखरतावसरे हि विराजते" ।
कुमारसम्भवे ६ । १३ ।
"तद्दर्शनादभूत् शम्भोर्भूयान् दारार्थमादरः" ।
हितोपदेशे ।
"सन्तुष्टस्य करप्राप्तेऽप्यर्थे भवति नादरः" ।)

आदर्त्तव्यः, त्रि, (आङ् + दृ + तव्य ।) आदरणीयः । आदर्त्तव्यः ॥ आदरोपयुक्तः ॥

आदर्शः, पुं, (आङ् + दृश् + घञ् ।) दर्पणः । टीका । प्रतिपुस्तकं । इति मेदिनी ॥ (यथा भगवद्गीतायां ।
"धूमेनाव्रियते वह्निर्यथादर्शो मलेन च ।
यथोल्वेनावृतो गर्भस्तथा तेनेदमावृतं" ॥)

आदानं, क्ली, (आङ् + दा + ल्युट् ।) ग्रहणं । अश्वाभरणं । इति मेदिनीहेमचन्द्रौ ॥ रोगलक्षणं । इति राजनिर्घण्टः । (स्वीकारः प्रतिग्रहः । यथा कुमारसम्भवे ५ । ११ ॥
"कुशाङ्कुरादानपरिक्षताङ्गुलिः" ॥ मनुः, ७ । २०४ ।
"आदानमप्रियकरं दानञ्च प्रियकारकं ।
अभीप्सितानामर्थानां काले युक्तं प्रशस्यते" ॥)

आदानी, स्त्री, (आ + दा + ल्युट् + ङीप् ।) हस्तिघोषालता । इति रत्नमाला ॥

आदिः, पुं, (आङ् + दा + कि ।) पूर्व्वः । प्रथमः । इत्यमरः ॥ मतान्तरे गवादूपकः । यथा इत्यादि ॥ (प्रारम्भः । प्राक्सत्ता । नियतपूर्व्ववर्त्तिकारणं । उत्पत्तिहेतुः । सामीप्ये । व्यवस्थायां । प्रकारे, अवयवार्थे च आदिशब्दस्य प्रयोगो भवति । यदुक्तं,—
"सामीप्येऽथ व्यवस्थायां प्रकारेऽवयवे तथा ।
आदिशब्दं तु मेधावी चतुर्ष्वर्थेषु लक्षयेत्" ॥
यथा माघे १ । ८ ।
"अपश्च सत्त्वाद्यौ तासु वीजमवासृजत्" ।
कुमारे १ । ६ । "जगदादिरनादिस्त्वं" ॥)

आदिकविः, पुं, (आदिः प्रथमः कविः ।) ब्रह्मा । इति श्रीभागवतं ॥ वाल्मीकिमुनिः । इति हेमचन्द्रः ॥ ("तेने ब्रह्म हृदा य आदिकवये मुह्यन्ति यत् सूरयः" । इति भागवते १ । ४ ।)

आदिकारणं, क्ली, (आदि आद्यं कारणम् ।) पूर्व्वनिमित्तं । मूलहेतुः । तत्पर्य्यायः । निदानं २ । इत्यमरः ॥

आदिगदाधरः, पुं, (आदिरादौ आदौ पूजितो वा गदाधरः ।) गयास्थदेवताविशेषः । यथा,—
"गयासिरस्थादधिला गुरुत्वाद्रक्षिता शिला ।
कालान्तरेण यत्नेन स्थित आदिगदाधरः ॥
तथा व्यक्तोऽव्यक्तरूपी आसीदादौ गदाधरः ।
आदिरादौ पूजितोऽत्र देवैर्ब्रह्मादिभिर्यतः ॥
पाद्यार्घ्यगन्धपुष्पाद्यैरत आदिगदाधरः" ॥
इति गारुडे गयामाहात्म्ये ८५ अध्यायः ॥
अपिच
"गदयादायकश्चैव गयासुरशिरःशिला ।
निश्चलार्थं स्थितो यस्मात्तस्मादादिगदाधरः" ॥
इति वायुपुराणीयगयामाहात्म्ये ८ अध्यायः ॥

आदितालः, पुं, (आदिरादस्तालः ।) तालविशेषः । यथा,—सङ्गीतदामोदरः ।
"एकएव लघुर्यत्र आदितालः स कथ्यते ।
गुरुवत् पुरतो वाद्यः प्रायेणैतन्निदर्शनं" ॥ इति ।

आदितेयः, पुं, (अदितेरपत्यं पुमान् । अदिति + ढक् ।) अदितिपुत्त्रः । देवः । इत्यमरः ॥

आदित्यः, पुं, (अदितेरादित्यस्य वा अपत्यं + ण्यः ।) देवः । सूर्य्यः । इत्यमरमेदिन्यौ ॥ द्वादशादित्यगणे वसुप्रभृतगणान्तः । इत्यमरः ॥ तन्नामानि । विवस्वान् १ अर्य्यमा २ पूषा ३ त्वष्टा ४ सविता ५ भगः ६ धाता ७ विधाता ८ वरुणः ९ मित्रः १० शक्रः ११ उरुक्रमः १२ । एते काश्यपात् अदितिभार्य्यायां जाताः । कल्पान्तरे त्वष्टृकन्या संज्ञा आदित्यपत्नी आदित्यस्य तेजः सोढुमसमर्थ्या अतस्तस्याः पितृकृतादित्यद्वादशखण्डा द्वादशादित्याः । तेषां द्वादशमासेष्वेकैकस्योदयः । इति पुराणं ॥ अर्कवृक्षः । इत्यमरः ॥ आकन्द इति भाषा । ("आदित्यमण्डलस्थितो हिरण्मयोविष्णुः" । यथा शान्तिशतके । ४ । २४ ।
"आदित्यस्य गतागतैरहरहः संक्षीयते जीवितं" ।
भारते ।
"आदित्यचन्द्रावनिलोऽनलश्च
द्यौर्भूमिरापो हृदयं यमश्च" ।
हरिवंशे द्वादशादित्यकथा यथा ।
"मरीचात् काश्यपाज्जाताह्यदित्या दक्षकन्यया ।
तत्र प्रकाश्य विष्णुश्च जज्ञाते पुनरेव हि ॥
अर्य्यमा चैव धाता च त्वष्टा पूषा च भारत ।
विवस्वान् सविता चैव मित्रो वरुण एव च ।
अंशो भगश्चातितेजा आदित्या द्वादश स्मृताः" ॥
तस्य संवत्सरात्मनो भगवानादित्यो गतिविशेषेणाक्षिनिमेषकाष्ठाकलामुहूर्त्ताहोरात्रपक्षमासर्त्त्वयनसंवत्सरयुगप्रविभागं करोति ॥ इति सुश्रुतः)

आदित्यपत्रः, पुं, (आदित्यस्तस्य पत्रमिव पत्रमस्य ।) क्षुपविशेषः । तत्पर्य्यायः । अर्कपत्रः २ अर्कदलः ३ सूर्य्यपत्रः ४ तपनच्छदः ५ कुष्ठारिः ६ विटपः ७ सुपत्रः ८ रविप्रियः ९ रश्मिपतिः १० बदः ११ । अस्य गुणाः । कटुत्वं । उष्णवीर्य्यत्वं । वातबालरोगजाठरगुल्मारोचकनाशित्वं । अग्निसन्दीपनत्वञ्च । इति राजनिर्घण्टः ॥

आदित्यपुष्पिका, स्त्री, (आदित्यवत् लोहितं पुष्पमस्याः ।) लोहितार्कवृक्षः । इति रत्नमाला ॥ राङ्गा आकन्द इति भाषा ।

आदित्यभक्ता, स्त्री, (आदित्यस्य भक्ता ।) ओषधीविशेषः । ऊड़ऊड़िया इति भाषा । तत्पर्य्यायः । वरदा २ अर्कभक्ता ३ सुवर्च्चला ४ सूर्य्यलता ५ सूर्य्यावर्त्ता ६ अर्ककान्ता ७ मण्डूकपर्णी ८ सुरसम्भवा ९ सौरी १० सुतेजाः ११ अर्कहिता १२ वरिष्ठा १३ मण्डूकी १४ समनामा १५ देवी १६ मार्त्तण्डवल्लभा १७ विकान्ता १८ भास्करेष्टा १९ । अस्या गुणाः । हिमत्वं । तिक्तत्वं । कटुत्वं । उष्णत्वं । कासकफदोषकण्डूत्वक्कुष्ठभूतग्रहदोषशीतज्वरनाशित्वञ्च । अन्यच्च । स्वादुपाकरसत्वं । गुरुत्वं । अग्निसन्धुक्षणत्वं । सारकत्वं । विष्टम्भवातनाशित्वञ्च । इति राजनिर्घण्टः ॥

आदित्यसूनुः, पुं, (अदितेरपत्यं पुमान् आदित्यः सूर्य्यः तस्य सूनुः षष्ठीतत्पुरुषः ।) सुग्रीववानरः । इति हेमचन्द्रः ॥ यमः । शनैश्चरः । सावर्णिमनुः । वैवस्वतमनुः । इति पुराणं ॥ (कर्णः ।)

आदिदेवः, पुं, (आदिः कारणं स च देवश्चेति कर्म्मधारयः ।) नारायणः । इति त्रिकाण्डशेषः ॥ (जगदुपादानादिगुणवान् वासुदेवः विष्णुः, महादेवः, ब्रह्मा च यथा, भगवद्गीतायां, १० । १२ ।
"परं ब्रह्म परं धाम पवित्रं परमं भवान् ।
पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुं ॥
त्वमादिदेवः पुरुषः पुराण-
स्त्वमस्य विश्वस्य परं निधानं" ॥
यथा, महाभारते,—सूर्य्यस्य नामाष्टशतके परिगणितो नामभेदः ।
"धन्वन्तरिर्धूमकेतुरादिदेवोऽदितेः सुतः" ॥)

आदिमं, त्रि, (आदौ भवं अग्रादिपश्चात् डिमच् । यद्वा मध्यान्त इत्यत्रादेश्चेति वचनात् मः ।) आद्यं । प्रथमभववस्तु । इत्यमरटीका व्याकरणञ्च ॥ (यथाह भाषापरिच्छेदे,—
"एते पञ्चान्यथासिद्धा दण्डत्वादिकमादिमम्" ।
"आदिमः स्नेहशैलादिसंयोगः परिकीर्त्तितः" ॥)

आदिराजः, पुं, (आदिः प्रथमः राजा इति राजाहःसखिभ्यष्टच् ।) पृथुराजः । इति हेमचन्द्रः ॥ (मरीचिनामाद्यो वैवस्वतो मनुः । अविक्षित्पुत्त्रः प्रख्यातः पौरवो राजा । यथा, रामायणे ।
"आदिराजो मनुरिव प्रजानां परिरक्षिता" ॥
महाभारते ।
"अविक्षितः परिक्षित्तु शबलाश्वश्च वीर्य्यवान् ।
आदिराजो विराजश्च शाल्मलिश्च महाबलः" ॥)

विषः। यथा। प्रायश्चित्तोपदेशाय ब्रह्मादिना आनुपूर्व्योपदेशः। यथा मिताक्षरायां पराशरः।
"पापं प्रख्यापयेत् पापी धेनुं दत्त्वा तथा वृषं"।
तत्रप्रमाणम्।
"प्रख्याप्य पापं प्रायश्चित्तं किञ्चिद्दत्त्वा व्रतं चरेत्।"
इति श्रुतेः।
देवलवचने "तोषयित्वा द्विजोत्तमान् इति"। अत्र तोषयित्वा इति अवचनात् आनतिकरत्वेन तदुपचय्याद्रोषः। इति प्रायश्चित्ततत्त्वम्॥

आनद्धं, क्ली, (आनह्यते चर्मणा बध्यते इति। आङ्+नह्+क्तः।) चर्म्मावनद्धमुखवाद्यमात्रं। तत्तु मुरजादि। इत्यमरः॥ बन्धमात्रं। तत्तु वेशभूषादि। इत्यजयपालः॥

आनद्धः, त्रि, (आङ्+नह्+कर्म्मणि+क्तः।) बद्धः। बद्धः। इति मेदिनी॥ (यथा सुश्रुते।
"आनद्धधारैः सविता हिमागमा नवागमा"॥)

आननं, क्ली, (आनिति अनेन। आङ्+अन्+ल्युट्) मुखं। इत्यमरः। ("तदाननं मृत्सुरभि क्षितीश्वरः" इति रघुः। ३। ३।)

आनन्दः, पुं, (आङ्+नन्द+घञ्) आह्लादः। तत्पर्य्यायः। आनन्दथुः २ शर्म्म ३ सातं ४ सुखं ५ मुत् ६ प्रीतिः ७ प्रमोदः ८ हर्षः ९ प्रमदः १० आमोदः ११ संमदः १२। इत्यमरः॥
(यथा, उत्तरचरिते।
"यत्रानन्दाश्च मोदाश्च यत्र हिमाश्च सम्पदः"।
मनुः।
"आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन"।)
महादेवस्य स्ववृत्तिभेदः। इति हेमचन्द्रः॥

आनन्दः, त्रि, (आनन्द+अर्श आदित्वात् अच्।) आनन्दविशिष्टः। हर्षयुक्तः। सुखी। इत्यमरटीका॥ ("गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति"। इत्यमरोक्तेः अस्य गुणिलिङ्गः।)

आनन्दथुः, पुं, (आङ्+नन्द+अथुच्।) आनन्दः। हर्षः। इत्यमरः॥ तद्युक्ते त्रि॥

आनन्दनं, क्ली, (आङ्+नदि+ल्युट्) गमनागमनसमये सुहृदादेरालिङ्गनादिभ्यागतादिप्रश्नादिद्वारा आनन्दोत्पादनं। तत्पर्य्यायः। सभाजनः २ आभाजनः ३ आप्रच्छनं ४ आप्रश्नः ५ आनन्दनं ६॥ इत्यमरः सटीका च॥ (आनन्दजननं, हर्षोत्पादनं। प्रमोदकरः, सुखजनकः। यदुक्तं।
"मित्रं प्रीतिरसायनं नयनयोरानन्दनं चेतसः"। इति हितोपदेशे।)

आनन्दपटं, क्ली, (आनन्दाय पटम्।) नवोढावस्त्रं। इति हारावली॥

आनन्दप्रभवं, क्ली, (आनन्दः प्रभवो यस्य तत्।) रेतः। वीर्य्यं। इति हेमचन्द्रः॥
("शब्दाद्याद्यादिभिर्भावैः सौम्यस्यं जायते ऽपि च।
तेन संवर्धिं तच्छुक्रं गवात् कुम्भादिवोदकं॥
वोर्धोर्मिः स्यन्दते देहात् समन्तात् शुक्रवाहिभिः।
हर्षोदीरितं रागात् सङ्कल्पाच्च मनोभवात्॥
वन्ही संश्रयं निर्याति स्थानाद्भिन्नाद्विवोदकं।"
इति चरकः॥)

"स्थानदेशाश्रितं शुक्रं प्रसन्नमनसस्तथा।
स्त्रीषु व्यायच्छतश्चापि हर्षात्तत् सम्प्रवर्त्तते॥"
इति सुश्रुतः।)

आनन्दमयकोषः, पुं, (आनन्दमयस्य परमात्मनः कोष इवावरकः।) आनन्दप्रधानाज्ञानं। तत्पर्य्यायः। कारणशरीरं २ सुषुप्तिः ३। इति वेदान्तः॥

आनन्दा, स्त्री, (आनन्दयति या। आङ्+नन्द+णिच्+अच्+टाप्) विजया। आरामशीतला। इति राजनिर्घण्टः॥ [इति शब्दमाला॥

आनन्दिः, पुं, (आङ्+नन्द+किः।) आनन्दः। हर्षः।

आनन्दितः, त्रि, (आङ्+नन्द+क्त। यद्वा आनन्दः सञ्जातोऽस्य। आनन्द+इतच्।) आनन्दयुक्तः। हृष्टः। आह्लादितः॥ (यथा महाभारते॥
"पुनरानन्दिताः सर्वे नगरायां बभासिरे॥")

आनन्दी, [न्] त्रि, (आनन्द+इनि।) आनन्दविशिष्टः॥

आनन्दी, स्त्री, वृक्षविशेषः। आकन्दमाला इति ख्याता। इति शब्दचन्द्रिका॥

आनयः, पुं, (आनीयते वेदाध्ययनाय। आङ्+नीङ्+अच्) उपनयनं। इति हेमचन्द्रः॥

आनयनं, क्ली, (आङ्+नी+ल्युट्।) स्थानान्तरनयनं। आना इति भाषा॥ (यथा रामायणे।
"आदिदेशानयने राज्ञामामन्त्रणे बहून्"॥)

आनर्त्तः, पुं, (आङ्+नृत्+घञ्।) देशविशेषः। द्वारका इति ख्याता। नृत्यस्थानं। युद्धं। इत्यमरः॥ जलं। इति मेदिनी॥ आनर्त्तदेशवासी लोकः। इत्यमरटीका॥ (यथा हरिवंशे। "आनर्त्तान् कालकूटांश्च कुलिन्दांश्च विजित्य सः"॥
तन्नामख्यातो राजा।
"शर्य्यातेर्मिथुनं त्वासीदानर्त्तो नाम विश्रुतः।
"आनर्त्तस्य तु दायादो रेवो नाम महाद्युतिः"॥
"आनर्त्तविषयश्चासीत् पुरी चास्य कुशस्थली"।
"आनर्त्तस्य विभोः पुत्रः सुकुमारस्ततोऽभवत्"॥)

आनायः, पुं, (आङ्+नीञ्+घञ्।) जालं। इत्यमरः॥

आनाय्यः, पुं, (आनाय्यते गार्हपत्यादानीय संस्क्रियते ऽसौ आङ्+नी+ण्यत्।) दक्षिणाग्निः। इत्यमरः॥ गार्हपत्यादमेरानीय यो दक्षिणाग्निरारोप्यते। तत्र। इति भरतः॥ होम करिवार निमित्ते घर हइते आनिया दक्षिणदिके राखा आगुन् इति भाषा॥

आनाहः, पुं, (आङ्+नह्+घञ्।) मूत्रपुरीषरोधकरोगः। तत्पर्य्यायः। विबन्धः २। इत्यमरः॥ विष्टम्भः ३ मलरोधनः ४। इति राजनिर्घण्टः॥
("आनाहार्त्तं ततो दृष्ट्वा तत्सैन्यमसुखार्द्दितम्"। इति महाभारते।) तस्य सम्प्राप्तिर्यथा,
"आमं शकृद्वा निचितं क्रमेण
भूयो विबद्धं विगुणानिलेन।
प्रवर्त्तमानं न यथास्वमेनं
विकारमानाहमुदाहरन्ति"॥ इति निदानं॥
("यस्य वातः प्रकुपितः कुक्षिमाश्रित्य तिष्ठति।
बाधो भवति मान्यूर्द्धमानाहस्तस्य जायते"॥
इति चरकः॥)

अस्य चिकित्सामाह। भावप्रकाशे यथा,—
"गुल्मोदावर्त्तका[illegible]दीर्ण क्रियां।
आनाहेषु च कुर्व्वीत विशेषश्चाभिधीयते॥ *॥
त्रिवृत्कृष्णाहरीतक्यो द्विचतुःपञ्चभागिकाः।
गुडेन तुल्या गुटिका हरत्यानाहमुल्वणं॥ *॥
वर्त्तिस्त्रिकटुसैन्धव
सर्षपगृहधूमकुष्ठमदनफलैः।
मधुनि गुडे वा पक्वे
विरचिता साङ्गुष्ठसम्मिता विधिवत्॥
वर्त्तिरियं दृष्टफला
शनैः प्रणिहिता गुदे घृताभ्यक्ता।
आनाहमुदरजातिं
प्रशमयति जठरं तथा गुल्मम्"॥ *॥
इति त्रिकटुकाद्यावर्त्तिः॥ *॥
आमपाशिसमुत्थे तु चिकित्सा यथा,—
"उदावर्त्तक्रियानाहे सामे लङ्घनपाचनम्"॥
"त्रिवृत्तरा त्रिवृच्चैव सकुष्ठा
सुवर्चिका चेति त्रिकर्षभूतैः।
सुखाम्बुनानाहविसूचिकार्त्ति-
हृद्रोगगुल्मोर्द्ध्वसमीरणघ्नम्॥ *॥
वचाभयाचित्रकयावशूकान्
सपिप्पलीकातिविषान् सकुष्ठान्।
उष्णाम्बुनानाहविमूढवातान्
पीत्वा जयेदाशु हितौदनाशी॥ *॥
त्रिवृद्धरीतकीश्यामाः स्नुहीक्षीरेण भावयेत्।
वटिका मूत्रपीतास्ता श्रेष्ठा आनाहभेदिकाः॥ *॥
राठ-धूम-विड्व्योष-गुड-मूत्रैर्विपाचिता।
गुदेऽङ्गुष्ठसमावर्त्तिर्निधेयानाहशूलनुत्॥ *॥
मूलकं शुष्कमामञ्च वर्षाभूमूलपञ्चकम्।
आरेवतफलञ्चापि पक्त्वा तेन पचेद्घृतम्।
तत् पीतमात्रं प्रशमयेदुदावर्त्तमसंशयम्"॥ *॥
शुष्कमूलकाद्यं घृतम्॥ *॥) देह्यं। इति रत्नमालायाः॥

आनिलिः, पुं, (अनिलस्य वायोरपत्यं अनिल+इञ्।) हनूमान्। इति त्रिकाण्डशेषः॥ (भीमः।)

आनिली, स्त्री, (अनिल+अण्+ङीप्।) स्वातिनक्षत्रं। इति हेमचन्द्रः॥

आनीलः, पुं, नीलघोटकः। इति हेमचन्द्रः॥
(असितः। ईषन्नीलः। यथा किरातार्जुनीये,
"आनीलाभैर्विरचितपरभागा रत्नैः"॥)

आनुकूल्यं, क्ली, (अनुकूल+ष्यञ्।) अनुकूलता॥ (साम्मुख्यं। प्रसादः। सहायता। यथा याज्ञवल्क्यः।
"यत्रानुकूल्यं दम्पत्योस्त्रिवर्गस्तत्र वर्द्धते"।
यथा,—रामायणे।
"रमतश्चानुकूल्येन ययुः संवत्सरा दश"॥)

आनुगत्यं, क्ली, (अनुगतस्य भावः कर्म्म वा। अनुगत+ष्यञ्।) अनुगतत्वं। अनुगतस्य भाव इत्यर्थे ष्यञ्प्रत्ययेन निष्पन्नम्॥

आनुपूर्व्वी, स्त्री,क्ली, (अनुपूर्व्व+ष्यञ्।) परिपाटी। अनुक्रमः। इत्यमरः॥ (यथा मनुः ३। २३।
"षडानुपूर्व्व्या विप्रस्य क्षत्रस्य चतुरो वरान्"॥
यथा रामायणे।
"आनुपूर्व्व्या स धर्मज्ञः प्रपच्छ कुशलं कुले"॥)

आनुमानिकः, त्रि, (अनुमानाय हितः। अनुमान + ठक्। युक्तिसिद्धः। सांख्यमते प्रधानं प्रकृतिः।) अनुमानसम्बन्धीयः। अनुमानविषयीभूतः॥

आनुरक्तिः, स्त्री, (आ + अनु + रन्ज + क्ति।) अनुरागः। (आसक्तिः। अनुरक्तिः॥)

आनुविधित्सा, स्त्री, (आ + अनु + वि + धा + सन् + अङ् + टाप्।) अवज्ञातेदप्रभुप्रकारेच्छा। इति पुराणम्॥

आनूपः, पुं, (अनूप + अण्।) अनूपदेशजजन्तुमांसं। तत्र खड्गिमहिषवराहादि। तस्य मांसगुणाः। गुरुत्वं। उष्णत्वं। मधुरत्वं। स्निग्धत्वं। शुक्रकारित्वं। वायुनाशित्वञ्च। इति राजवल्लभः॥ अनूपदेशजगुणाः। शमत्वं। गुरुत्वं। पिच्छिलत्वं। मधुरत्वं। श्लेष्मजनकत्वं। स्निग्धत्वं। अभिष्यन्दित्वं। प्रमेहश्लीपदकण्डूविसर्पगलगण्डादिरोगकारित्वञ्च। इति राजनिर्घण्टः॥ अनूपदेशस्थजन्तोर्लक्षणं तन्मांसस्य गुणाश्च।

"कूलेचराः प्लवाश्चापि कोषस्थाः पादिनस्तथा।
मत्स्या एते समाख्याताः पञ्चधानूपजातयः॥
आनूपा मधुराः स्निग्धा गुरवो वह्निमर्दनाः।
श्लेष्मलाः पिच्छिलाश्चापि मांसपुष्टिप्रदा भृशं॥
तथाभिष्यन्दिनस्ते हि प्रायोऽपथ्यतमाः स्मृताः"॥
इति भावप्रकाशः॥

("चमरश्चमरः खड्गो महिषो गवयो गजः।
न्यङ्कुर्वराहश्चानूपा मृगाः सर्व्वे रुरुस्तथा"॥
"गुरूष्णो मधुरो बल्यश्चानूपमिषेवणात्"।
इति चरकः॥ तथाच हारीतः॥
"आनूपास्तेषु विज्ञेयाः श्लेष्मला वातकोपनाः"।
आनूपवर्गस्तु पञ्चविधः। यथा। "कूलचराः प्लवाः कोषस्थाः पादिनो मत्स्याश्चेति" इति सुश्रुतः॥ जलजलयुक्ते, त्रि।)

आनृशंस्यं, क्ली, (अनृशंसस्य भावः। अनृशंस + ष्यञ्।) अनिष्ठुरता॥ (अक्रौर्य्यं। अहिंसत्वं। कारुण्यं। यथा मनुः १।१०१, ३।४१, ३।११२।
"आनृशंस्यात् ब्राह्मणस्य भुङ्क्ते हीतरे जनाः"।
"आर्षं तत्कुमारीणामानृशंस्यं च केवलम्"।
"भोजयेत् सह भृत्यैस्तावानृशंस्यं प्रयोजयन्"॥)

आन्तरीक्षं, क्ली, (अन्तरीक्ष + अण्।) अन्तरीक्षं। गगनं। इति त्रिकाण्डशेषः॥ (यथा महाभारते।
"उत्पातांस्त्रिविधान् प्राप्नुवन्नारदो भगवानृषिः।
दिव्यांश्चैवान्तरीक्षांश्च पार्थिवांश्च पितामह"॥)
अन्तरीक्षभवस्तूनि त्रि॥ (यथा रामायणे।
"रक्षितं तेऽस्त्वान्तरीक्षेभ्यः पार्थिवेभ्यः पुनः पुनः"॥)

आन्तिका, स्त्री, (अन्तिक + अण् + टाप्।) अन्तिका। ज्येष्ठा भगिनी॥ इति त्रिकाण्डशेषः॥

आन्त्रिकः, त्रि, (अन्त्र + ठक्।) अन्त्रे भवः। अन्त्रसम्बन्धीयः॥

आन्दोल य ङ दोलने। (अदन्तचुरा०-उभ०-सक०-सेट्।) इति कविकल्पद्रुमः॥ आन्दुदोलत्। इति दुर्गादासः॥

आन्दोलनं, क्ली, (आन्दोल + ल्युट्।) चलनं। कम्पनं॥ ("हिन्दोलायामारूढसुन्दरद्रष्टा मान्-



आमरान्दोलनाद्युद्देशकुसुमविशिकृष्णमन्मथाकाराः सन्तां मान्मंताम्"। इति काशिराजः। पुनः पुनरभ्यासः। मुहुराधोलनम्।)

आन्दोलितं, त्रि, (आन्दोल + क्त।) कृतान्दोलनं। तत्पर्य्यायः। चलितं २ कम्पितं ३ धूतं ४ वेल्लितं ५। इति हेमचन्द्रः॥

आन्धसिकः, त्रि, (अन्धस् + ठक्।) पाचकः। सूपकारः। इत्यमरः॥

आन्वयिकः, त्रि, (अन्वय + ठक्।) प्रशस्तकुलजः। सत्कुलोद्भवः। तत्पर्य्यायः। कौलः २। इति त्रिकाण्डशेषः। अन्वयसम्बन्धी॥ (कुलीनः। विनयावनतः। कुलाचारी। साधकः। "कौलाश्चौतसिकाः शैवः कौल आन्वयिकाः स्मृतः"। इति त्रिकाण्डशेषः।)

आन्वीक्षिकी, स्त्री, (अनुपश्चात् ईक्षा पर्य्यालोचना प्रयोजनमस्याः। अनु + ईक्षा + ठञ् + ङीप्।) तर्कविद्या। न्यायविद्या। इत्यमरः॥ दुर्गा। यथा,
"आत्मवेदनशीलत्वादन्वीक्षाप्रपरायणा।
अन्वीक्षां कुरुते यस्मात्तस्मादान्वीक्षिकी स्मृता"॥
इति देवीपुराणे ४५ अध्यायः॥ (अध्यात्मविद्या, प्रत्यक्षपरोक्षाभ्यामीक्षितस्य अर्थस्यानु पश्चात् ईक्षणं अन्वीक्षा सा प्रयोजनं यस्याः सा आन्वीक्षिकी अनुमानविद्या न्यायदर्शनवैशेषिकादिका। इयं हि त्रयीवार्त्तादिविद्याचतुष्टयान्तर्गता आत्मविज्ञानहेतुका धर्म्मार्थसाधिका राजभिरवश्यं रक्षणीया सती विद्येति कथ्यते॥ यथा, कामन्दकीयनीतिसारे।
"आन्वीक्षिकी त्रयी वार्त्ता दण्डनीतिश्च शाश्वती।
विद्याश्चतस्र एवैता लोकसंस्थितिहेतवः"॥
"आन्वीक्षिक्यात्मविज्ञानं धर्म्माधर्म्मौ त्रयीस्थितौ।
अर्थानर्थौ च वार्त्तायां दण्डनीतौ नयानयौ"॥
इति।)

आप ऌ न औ कि व्यापने। (चुरा० पक्षे आदि०-स्वादि० वा-उभ०-पर०-सक०-सेट्।) इति कविकल्पद्रुमः॥ ऌ आपत्। न आप्नोति कीर्त्तिं श्रेष्ठाग्रं। औ आप्ता। कि आपयति आपति। सराज्यं प्राप्स्यते भवान्। इति गणकृतानित्यत्वात्। इति दुर्गादासः॥ (पावने।
"स तेऽन्तरे सर्व्वमिदमताप्नोत्सचराचरम्"।
इति मनुः। (अभि) अभिप्राये।
"नाभ्यहमस्मीप्सामि व्यासनव! स्वकर्म्मणा।
इच्छामि तदहं स्थानं यन्न प्राप पिता मम"॥
इति विष्णुपुराणम्। (प्रति + अव) प्रतिग्रहणे।
"तां प्रत्यवापुरविलम्बितमुत्तरन्तौ
शौलाङ्गजमनवनीकपयोजनेत्रो"। इति।
शिशुपालवधे। (प्र) उपगमने।
"ते च प्रापुरुदन्वन्तं बुबुधे चादिपूरुषः"।
इति रघुवंशे १०। ६। इत्यादि।)

आपः, पुं, (आप् + घञ्।) अष्टवसुमध्ये वसुविशेषः। इति जटाधरः॥

आपः [स्] क्ली, (आप् + असुन्।) जलं। पापं। इत्युणादिकोषः॥

आपक्वं, त्रि, (आङ् + पच् + क्त।) ईषत्पक्वयवादि। तत्पर्य्यायः। पौलिः २ अभ्यूषः ३। इत्यमरः॥ वटी इति केचित्॥ (यथा ऋतुसंहारे।
"आपक्वशालिकलितान्तमान्यदृष्टिः
प्राप्ता शरन्नववधूरिव रम्यरूपा"॥१॥)

आपगा, स्त्री, (अपां समूहः आपं। तस्य समूहे इत्यण्। तत आपेन जलसमूहेन गच्छति प्रवहतीति। आप् + गम् + ड + टाप्।) नदी। इत्यमरः। (यथा रामायणे।
"आपगाः कृतपुण्याभाः पद्मिन्यश्च सरांसि च"।
"आपगाश्च महानद्यः सानुमन्तश्च पर्व्वताः"।
तथाच माघे २। १००।
"सम्भूयाम्भोधिमभ्येति महानद्या नगापगा"॥)

आपणः, पुं, (आङ् + पण + घञ्।) पण्यविक्रयशाला। दोकान इति भाषा। तत्पर्य्यायः। निषद्या २ विपणिः ३ पण्यवीथिका ४। इत्यमरः॥ चतुष्कं हट्टे इत्यन्ये। आपणादिद्वयं हट्टे विपण्यादिद्वयं हट्टसहे इति केचित्। इत्यमरटीकायां भरतः। (यथा रामायणे।
"माल्यापणेषु राजन्ते नात्र पण्यानि वै तथा"।
तथा महाभारते।
"भक्ष्यमाल्यापणानाञ्च ददृशुः श्रियमुत्तमां"॥)

आपणिकः, पुं, (आङ् + पण् + इकन्। अथवा आपण + ठक्।) वणिकः। इत्युणादिकोषः॥ दोकानि मुदि व्यवसायी इत्यादि भाषा। (क्रयार्थी क्रयविक्रयादिविषयके, त्रि॥)

आपतिकः, पुं, (आङ् + पत् + इकन्।) श्येनपक्षी। बाज इति भाषा। दैवायत्ते त्रि। इत्युणादिकोषः॥

आपत्, [द्] स्त्री, (आङ् + पद् + क्विप्।) विपत्। विपत्तिः। इत्यमरः॥ यथा।
"आपत्सु मूढो द्युतिमान् यः सम्यक् प्रतिपद्यते।
कर्म्माण्यव्यक्तकार्य्याणि तमाहुः पुरुषं बुधाः"॥
इति वह्निपुराणम्॥०॥ किञ्च।
"आपदि किं करणीयं स्मरणीयं चरणयुगलमम्बायाः। तत्स्मरणं किं कुरुते ब्रह्मादीनपि किङ्करान् कुरुते"॥ इत्युद्भटः॥०॥ मनुः ११। २८-३०।
"विश्वैश्च देवैः साध्यैश्च ब्राह्मणैश्च महर्षिभिः।
आपत्सु मरणाद्भीतैर्विधेः प्रतिनिधिः कृतः"॥
"प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्त्तते।
न साम्परायिकं तस्य दुर्म्मतेर्विद्यते फलम्"॥
इत्येकादशीतत्त्वम्॥
"आपत्काले तु विप्रेण भुक्तं शूद्रगृहे यदि।
मनस्तापेन शुध्येत द्रुपदां वा शतं जपेत्"॥
इति प्रायश्चित्ततत्त्वम्॥०॥
"आपदर्थे धनं रक्षेत् दारान् रक्षेत् धनैरपि।
आत्मानं सततं रक्षेत् दारैरपि धनैरपि"। इति।
"जानीयात् प्रेषणे भृत्यान् बान्धवान् व्यसनागमे।
मित्रञ्चापदि काले च भार्य्याञ्च विभवक्षये"॥
इति च चाणक्यम्॥ २९॥ २१॥

आपत्तिः, स्त्री, (आङ् + पद् + क्तिन्।) दोषः। इति हेमचन्द्रः॥ प्रापणं। आपत्। इति मेदिनी॥

आपत्प्राप्तः, त्रि, (आपदं प्राप्तः। द्वितीया तत्पुरुषः।)

"दिवसार्व्वादिजातीनां चिह्नार्थं विनियुज्यते ।
देवं हि चिह्नार्थस्य पूर्व्वमाप्यायनं स्मृतं" ॥)

आप्यायितः, त्रि, ( आङ् + प्याय् + णिच् + क्तः ।) तृप्तः । प्रीतः । वर्द्धितः । यथा,—
"यथा सूर्य्यस्य वीर्य्येण सोमस्याप्यायिता तनुः ।
पौर्णमास्यां स दृश्येत सम्पूर्णो दिवसक्रमात्" ॥
इति कौर्म्मे ४० अध्यायः ॥ आनन्दितः । इति सोकप्रसिद्धं । (यथा हितोपदेशे ।
"आप्यायितोऽहं भवतामनेन वचनामृतेन" ॥)

आप्रच्छन्नं, क्ली, (आङ् + प्रच्छ + ल्युट् ।) गमनागमनादिसमये सुहृदादेरालिङ्गनादिरूपप्रश्नागतादिनानन्दनं । इत्यमरः ॥

आप्रच्छन्नं, क्ली, ( आङ् + प्र + छद् + क्त ।) आप्रच्छनं । तत्पर्य्यायः । आनन्दनं २ सभाजनं ३ ॥ इति हेमचन्द्रः ॥ [प्रपर्य्यन्तं ॥

आप्रपदं, क्ली, (प्रपदं पादाग्रं । तत्पर्य्यन्तं ।) पादा-

आप्रपदीनं, त्रि, ( आप्रपदं पादाग्रान्तं आप्नोतीति । आङ् + प्र + पद + ख ।) पादाग्रपर्य्यन्तपतितवस्त्रादि । इत्यमरः ॥ ("आप्रपदीनां कण्ठे यमदोलामिव शुभ्रकुसुममालामाकृढाम्" । इति हर्षचरिते ४र्थ उच्छ्वासः ।)

आप्लवः, पुं, (आङ् + प्लु + अप् ।) स्नानं । इत्यमरः ॥

आप्लवव्रती, [न्] पुं, (आप्लवते प्लुङ् + अप्, आप्लवाख्यो व्रती च । आप्लवः स्नानं तत्र व्रती नित्यस्नायीति मुकुटः ।) आप्लुतव्रती । स्नातकब्राह्मणः । इत्यमरटीकायां भरतः ॥

आप्लावः, पुं, (आङ् + प्लुङ् + घञ् । जलप्रक्षेपः, जलसेचनं, जलमध्ये सम्यगवगाहनं, जलप्लावनं, जलानां सर्व्वतः समुच्छलनं ।) स्नानं । इत्यमरः ॥

आप्लुतः, पुं, ( आङ् + प्लुङ् + क्तः ।) आप्लुतव्रती । स्नातकः । इति मेदिनी ॥

आप्लुतः, त्रि, (आङ् + प्लु + क्त ।) स्नातः । कृतस्नानः । इति मेदिनी ॥ ( आप्लुतः सर्व्वपापेभ्यः स गङ्गायां समुच्यत । इति भारते ।) स्नाने क्ली इति हेमचन्द्रः ॥ (आर्द्रीकृतः । सिक्तः । पञ्चतन्त्रे,—
"अन्ये सर्व्वाङ्गितकलेवरा रुधिराप्लुताः" । इति )

आप्लुतव्रती, [न्] पुं, ( आप्लुतस्य स्नातस्य व्रतमस्यास्तीति । आप्लुतव्रत + इनि ।) समाप्तवेदाध्ययनब्रह्मचारी । ब्रह्मचर्य्यं त्यक्त्वा यो गृहाश्रमं गतः सः । समाप्तवेदाध्ययनो यः स्नात्वैव आश्रमान्तरं न गतः सोऽपि । आप्लुतं स्नानं तत्र व्रती नित्यस्नायीति व्युत्पत्तिः । इत्यमरटीकायां भरतः ॥

आप्व, [न्] पुं, (आप् + क्वुन् ।) वायुः । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥

आबूकं, क्ली, अफेनं । इति वैद्यकं ॥ आफिं इति भाषा । (अस्य गुणास्तु । भावप्रकाशे ॥
"आफूकं शोषणं ग्राहि श्लेष्मघ्नं वातपित्तलं" ।)

आबद्धः, पुं, (आङ् + बन्ध + क्तः ।) दृढबन्धनं । प्रेम । अलङ्कारः । इति विश्वमेदिन्यौ । (यथा मेघदूते ९ ।
"गर्भाधानक्षणपरिचयान्नूनमाबद्धमालाः" ।)
योत्रं । इति मेदिनी ॥

आबन्धः, पुं, ( आबध्यतेऽनेन आङ् + बन्ध + घञ् ।) योत्रं । इत्यमरहेमचन्द्रौ ॥ योत्‌दड़ी इति भाषा । भूषणं । प्रेम । बन्धनं । इति हेमचन्द्रः ॥
( यथा अमरुशतके । ८० ॥
"गते प्रेमाबन्धे प्रणयबहुमाने विगलिते" ।)

आबलिः, स्त्री, आलिः । श्रेणी । इत्यमरः ॥ (समूहः, आवली ।)

आविद्धः, त्रि, (आङ् + व्यध् + क्तः ।) वक्रः । क्षिप्तः । इत्यमरः । प्रताडितः । इति मेदिनी ॥ मूर्खः । इति शब्दरत्नावली ॥

आविधः, पुं, वेधनास्त्रं । इत्यमरः ॥ भोमर तुरपुन इत्यादि भाषा ।

आविलः, त्रि, ( आ + बिल + क ।) अनच्छः । अनिर्म्मलः । इत्यमरः ॥

आविलकन्दः, पुं, मालाकन्दः । इति राजनिर्घण्टः ॥

आबुत्तः, पुं, (आप् + क्विप् + आपमुत्तनोति । अन्योन्योपीति ड ।) नाट्योक्तौ भगिनीपतिः । इत्यमरः ॥

आभरणं, क्ली. (आभ्रियतेऽनेन । आङ् भृञ् । ल्युट् ।) भूषणं । अलङ्कारः । इत्यमरः ॥ (तच्चतुर्व्विधं, आवेध्यं बन्धनीयं, क्षेप्यं, आरोप्यं चेति । तत्र आवेध्यं कुण्डलादि, बन्धनीयं कुसुमादिकं, क्षेप्यं नूपुरादिकं, आरोप्यं हारादि । यदुक्तं,—
"स्यादाभरणमाभरणं चतुर्धा परिकीर्त्तितं ।
आवेध्यं बन्धनीयञ्च क्षेप्यमारोप्यमेव तत्" ॥
(यथा मनुः, ७ । २२२ ।
"वाहनानि च सर्व्वाणि शस्त्राण्याभरणानि च" ।
यथा कुमारसम्भवे । ५ । ४४ ।
"किमित्यपास्याभरणानि यौवने
धृतं त्वया वार्द्धकशोभि वल्कलं" ॥)

आभा, स्त्री, (आङ् + भा + अङ् + टाप् ।) शोभा कान्तिः । इति हेमचन्द्रः ॥ दीप्तिः । ज्योतिः ॥ (वालरोगभेदः । बबुले । यथा भावप्रकाशे वातव्याधौ चिकित्सितचिकित्सा,—
"आभा बबुलपर्य्यायः कथितः कोविदैरिह" ।)

आभातिः, स्त्री, (आङ् + भा + क्तिन् दीप्तिः, ज्योतिः ।) छाया । इति राजनिर्घण्टः ॥

आभाषणं, क्ली, (आङ् + भाष् + ल्युट् ।) आलापः । कथनं । इत्यमरः ॥ (यथा रघुवंशे । २ । ५८ ॥
"सम्बन्धमाभाषणपूर्व्वमाहुः" ।)

आभासः, पुं, (आङ् + भास् + पचाद्यच् ।) सदृशः । प्रतिबिम्बं । इति वेदान्तः ॥ दीप्तिः । अभिप्रायः ॥ (प्रतिबिम्बादिवद्वस्त्वाकारत्वमविद्याकार्य्यं, भ्रमबुद्धिः । यथा अध्यात्मरामायणे,—
"आभासस्तु मृषाबुद्धिरविद्याकार्य्यमुच्यते ।
अविच्छिन्नं तु तद्ब्रह्म विच्छेदस्तु विकल्पतः ॥
आभासलक्षणं बिम्बभूतमेवं त्रिधा चितिः ।
आभासबुद्धेः कर्तृत्वमविच्छिन्ने विकारिणि" ॥
तथा च पञ्चदशी ६—७ ।
"चिदाभासेन बह्नेन सकुला इव कल्पिताः ।
पृथक् पृथक् चिदाभासैस्तन्त्वाधारदेहिना ॥
कथ्यन्ते जीवनामानो बहुधा संसरन्त्यमी ।
वस्त्राभासे स्थितान् वर्णान् यद्वदाधारवस्त्रगान्" ॥)

आभास्वरः, पुं, (आङ् + भास् + वरच् ।) चतुःषष्टिसङ्ख्यकगणदेवताविशेषः । इत्यमरः ॥ (यदुक्तं, आभास्वराश्चतुःषष्टि । यदा,—
"आत्मा ज्ञाता दमो दान्तः शान्तिर्ज्ञानं शमस्तपः ।
कामः क्रोधो मदो मोहो द्वादशाभास्वरा इमे" ॥)

आभिजनः, पुं, (अभिजनादागतः । अभिजन + अण् ।) अभिजनस्य भावः । कुलसम्बन्धीयः । माँड़ पदवी इत्यादि भाषा ॥ (यथा कुमारसम्भवे, १ । २६ ।
"तां पार्व्वतीत्याभिजनेन नाम्ना
बन्धुप्रियां बन्धुजनो जुहाव" ॥)

आभिजात्यं, क्ली, (अभिजात + ष्यञ् ।) अभिजातस्य भावः । कौलिन्यं । पाण्डित्यं ॥ (महावंशजननजनितमर्य्यादा । यथा रामायणे,—
"आभिजात्यं हि ते मन्ये यथा मातुस्तथैव च" ॥)

आभिधा, स्त्री, (अभि + धा + अङ् + टाप् ।) शब्दः । इति शब्दरत्नावली ॥

आभिधातकं, क्ली, (अभिधा + तक् + अण् ।) शब्दः । इति शब्दरत्नावली ॥

आभिरूप्यं, क्ली, (अभिरूप + ष्यञ् ।) अभिरूपस्य भावः । यथा,—
"अर्च्चकस्य तपोयोगादर्च्चनस्यातिशायनात् ।
आभिरूप्याच्च बिम्बानां देवः सान्निध्यमृच्छति" ॥
इति तिथ्यादितत्त्वधृतहयशीर्षपञ्चरात्रवचनं ॥

आभीरः, पुं, ( आ समन्तात् भियं राति । रा दाने आत इति कः ।) गोपः । इत्यमरः ॥ आहिर इति भाषा । स च ब्राह्मणादम्बष्ठायां जातः । इति मनुः ॥

आभीरपल्लिः, स्त्री, ( आभीराणां पल्लिः ।) गोपपल्ली । इत्यमरटीकायां रायमुकुटः ॥ गोयालापाड़ा इति भाषा ॥

आभीरपल्ली, स्त्री, (आभीराणां पल्ली ।) गोपगृहसमूहः । गोपग्रामः । गोपस्थानं । गोपस्थानं । तत्पर्य्यायः । घोषः २ । इत्यमरः ॥

आभीरी, स्त्री, (आभीरपुंयोगादिति जातेरिति च ङीष् ।) गोपस्त्रीजातिः । गोपपत्नी । तत्पर्य्यायः । महाशूद्री २ । इत्यमरः ॥ आहिरिणी इति भाषा ॥

आभीलं, क्ली, (आ समन्तात् भियं लाति अभयति । आङ् + भी + ला + क ।) कष्टं । कष्टं । इत्यमरः ॥ (भयानकः, भीतिजनकः । यथा मेदिनी,—
"आभीलं न द्वयोः कष्टे वाच्यलिङ्गं भयानके" ॥
यथा महाभारते,—
"रात्रौ निशीथे स्वाभीले गतेऽर्द्धसमये नृप ।
प्रचारे सुखमारानां रक्षसां घोरकर्म्मणाम्" ॥)

आभीलः, त्रि, (आङ् + भी + ला + क ।) कष्टयुक्तः । इत्यमरः ॥ भयानकः । इति मेदिनी ॥

आभीक्ष्ण्यं, क्ली, (अभीक्ष्ण + ष्यञ् ।) पौनःपुन्यं । नित्यं । तद्युक्तक्रियायां त्रि । इति शब्दरत्नावली ॥

आभेरी, स्त्री, रागिणीविशेषः । इति हलायुधः ॥

आभोगः, पुं, (आङ् + भुज् + घञ् ।) परिपूर्णता । इत्यमरः ॥ (यथा मेघदूते, उत्तरमेघे २१ ।
"हस्ताभोगात्कठिनविषमामेकवेणीं करेण" ।

कोकिलोत्सवः १३ वसन्तदूतः १४ अम्लफलः १५ मोदाख्यः १६ मन्मथालयः १७ मध्वावासः १८ सुमदनः १९ पिकरागः २० नृपप्रियः २१ प्रियाम्बुः २२ कोकिलावासः २३। इति राजनिर्घण्टः॥ माकन्दः २४ षट्पदातिथिः २५ मधुदूतः २६ कामशरः २७ पिकप्रियः २८ स्त्रीप्रियः २९ गन्धबन्धुः ३० अलिप्रियः ३१। इति शब्दरत्नावली॥ मदिरासखः ३२। इति जटाधरः॥ बालाम्रफलगुणाः। वायुरक्तपित्तकारित्वं। इति राजवल्लभः॥ अपिच। कषायत्वं। अम्लरसत्वं। सुगन्धित्वं। कफास्रपित्तवर्द्धित्वं। दाहकरत्वं। पित्तप्रकोपवायुरक्तदोषपङ्गुत्वादिविविधदोषदत्वञ्च। तच्च मध्यस्थिताम्लम्। इति राजनिर्घण्टः॥*॥ मध्याम्रगुणाः। पित्तकारित्वं॥*॥ पक्वाम्रगुणाः। वर्णरुचिमांसशुक्रबलकारित्वं। पित्ताविरोधित्वं। वायुनाशित्वं। हृद्यत्वं। गुरुत्वं। अनुलोमनत्वं। इति राजवल्लभः॥ अपिच। त्रिदोषप्रशमताकारित्वं। स्वादुत्वं। पुष्टिजनकत्वं। बलिनधातुप्रचयकारित्वं। रुचिकान्तिकारित्वं। तृष्णाश्रमशमनत्वञ्च। इति राजनिर्घण्टः॥*॥ मधुयुक्ताम्रगुणाः। क्षयरोगशोषवातश्लेष्मरोगनाशित्वं॥*॥ घृतयुक्ताम्रगुणाः। वातपित्तनाशित्वं। रुचिबलवर्णकारित्वञ्च॥*॥ दुग्धयुक्ताम्रगुणाः। शीतलत्वं। स्वादुत्वं। गुरुत्वं। स्निग्धत्वं। भेदकत्वं। वातपित्तहारित्वं। शुक्रबलवर्णकत्वञ्च॥*॥ तत्कार्णिकगुणाः। तृष्णाच्छर्द्दिमेहातीसारनाशित्वं। इति राजवल्लभः॥*॥ तत्कुसुमगुणाः। कषायत्वं॥*॥ तन्मूलगुणाः। सुगन्धित्वं। कषायत्वं। रुचिकारित्वं। संग्राहित्वं। शीतलत्वञ्च॥*॥ तत्पुष्पगुणौ। रुचिकारित्वं। अग्निदीपनत्वञ्च॥*॥ आम्रपेशीगुणाः। कषायत्वं। अम्लत्वं। भेदकत्वं। कफवातनाशित्वञ्च॥*॥ कृत्रिमपक्वाम्रगुणाः॥ अम्लरसहानेर्मधुरत्वाच्च पित्तनाशित्वं॥*॥ शुष्किताम्रगुणाः॥ परमरुचिबलवीर्य्यकारित्वं। लघुत्वं। शीतलत्वं। शीघ्रपाकित्वं। वातपित्तहारित्वं। सारकत्वञ्च॥*॥ तद्गालितरसगुणाः। बलकारित्वं। गुरुत्वं। वातहरत्वं। सारकत्वं। हृद्यत्वं। तृप्तिजनकत्वं। अतिश्लेष्मवर्द्धकत्वं। कफवर्द्धकत्वञ्च॥*॥ तत्खण्डगुणाः॥ गुरुत्वं। रोचकत्वं। मन्दपाकित्वं। मधुरत्वं। वृंहकत्वं। बलकारित्वं। शीतलत्वं। वातनाशित्वञ्च॥*॥ अतिमात्राम्रभक्षणगुणाः॥ मन्दाग्निविषमज्वररक्तामयबद्धगुदोदरनयनामयकारित्वं। “एतदम्लाम्रविषयं न तु मधुराम्रपरं। मधुरस्य परं नेत्रहितत्वादिगुणत्वात्॥ यद्यतिमात्रभक्षणं करोति तदा शुण्ठीजलानुपानं। अथवा सौवर्चलेन सह जीरं प्रयोक्तव्यं”॥*॥ तत्पल्लवगुणाः। रुचिकारित्वं। कफपित्तनाशित्वञ्च॥*॥ तथा च राजनिर्घण्टः।

“आम्रमांसं नवं स्निग्धं मर्द्दितं पृथुपाणिना।
सितामरीचिसंयुक्तं कर्पूरमरिचान्वितं॥
प्रपानकमिदं श्रेष्ठं भीमसेनेन निर्म्मितं।
अयो रुचिकरं बल्यं शीघ्रमिन्द्रियतर्पणम्”॥

(तथा चास्य नामानि गुणाश्च।
“आम्रः प्रोक्तो रसालश्च सहकारोऽतिसौरभः।
कामाङ्गो मधुदूतश्च माकन्दः पिकवल्लभः॥*॥
आम्रपुष्पमतीसारकफपित्तप्रमेहनुत्।
असृग्दुष्टिहरं शीतं रुचिकृद्ग्राहि वातलम्॥
आम्रं बालं कषायाम्लं रुच्यं मारुतपित्तकृत्।
तरुणन्तु तदत्यम्लं रूक्षं दोषत्रयास्रकृत्॥
आम्रमामं त्वचाहीनमातपेऽतिविशोषितम्।
अम्लं स्वादुकषायं स्याद्भेदनं कफवातजित्॥*॥
पक्वन्तु मधुरं वृष्यं स्निग्धं बलसुखप्रदम्।
गुरु वातहरं हृद्यं वर्ण्यं शीतमपित्तलम्।
कषायानुरसं वह्नि-श्लेष्म-शुक्र-विवर्द्धनम्॥*॥
तदेव वृक्षसम्पक्वं गुरुवातहरं परम्।
मधुराम्लरसं किञ्चित् भवेत् पित्तप्रकोपनम्॥*॥
आम्रं कृत्रिमपक्वञ्च तद्भवेत् पित्तनाशनम्॥*॥
रसस्याम्लस्य हानेस्तु माधुर्य्याच्च विशेषतः॥
चूषितं तत्परं रुच्यं बल्यं वीर्य्यकरं लघु॥
शीतलं शीघ्रपाकि स्याद्वातपित्तहरं सरम्॥*॥
तद्रसो गालितो बल्यो गुरुर्वातहरः सरः।
अहृद्यस्तर्पणोऽतीव वृंहणः कफवर्द्धनः॥*॥
तस्य खण्डं गुरुतरं रोचनं चिरपाकि च।
मधुरं वृंहणं बल्यं शीतलं वातनाशनम्॥
वातपित्तहरं रुच्यं वृंहणं बलवर्द्धनम्॥*॥
वृष्यं वर्णकरं स्वादु दुग्धाम्रं गुरु शीतलम्॥*॥
मन्दानलत्वं विषमज्वरञ्च
रक्तामयं बद्धगुदोदरञ्च।
आम्रातियोगो नयनामयं वा
करोति तस्मादति तानि नाद्यात्॥
एतदम्लाम्रविषयं मधुराम्रपरं न तु।
मधुरस्य परं नेत्रहितत्वाद्या गुणा यतः॥
शुण्ठ्यम्भसोऽनुपानं स्यादाम्राणामतिभक्षणे।
जीरकं वा प्रयोक्तव्यं सह सौवर्चलेन च”॥*॥

आम्रबीजस्य गुणाः।

“आम्रबीजं कषायं स्याच्छर्द्यतीसारनाशनम्।
ईषदम्लञ्च मधुरं तथा हृदयदाहनुत्”॥*॥

आम्रनवपल्लवस्य गुणाः॥

“आम्रस्य पल्लवं रुच्यं कफपित्तविनाशनम्”॥*॥
इति भावप्रकाशः॥

“अपक्वमाम्रं पक्वमेव प्रश्नं
संग्राहि पित्तास्रजि कोपनञ्च।
तथा विपक्वं मधुरन्तु चाम्रं,
मेध्यं कफपित्तामयनाशनञ्च”॥

इति हारीतः॥
“वातपित्तास्रकृद्बालं बद्धास्थिकफपित्तकृत्॥
गुर्व्वाम्रं वातजित् स्वादम्लं कफशुक्रकृत्”।
इति वाभटः॥
“रक्तपित्तकरं बालमापूर्णं पित्तवर्द्धनम्।
पक्वमाम्रं जयेद्वायुं मांसशुक्रबलप्रदम्”॥*॥
“आम्रामलककलेचाश्च वृंहणा बलवर्द्धनाः।
रोचनास्तर्पणाश्चोक्ताः श्लेष्ममाधुर्य्यगौरवात्”॥
इति चरकः॥
“पित्तानिलकरं बालं पित्तलं बद्धकेशरम्॥
हृद्यं वर्णकरं रुच्यं रक्तमांसबलप्रदम्।
कषायानुरसं स्वादु वातघ्नं वृंहणं गुरु॥
पित्ताविरोधि सम्पक्वमाम्रं शुक्रविवर्द्धनम्।
वृंहणं मधुरं बल्यं गुरु विष्टभ्य जीर्य्यति”॥
इति सुश्रुतः॥)

आम्रगन्धकः, पुं, (आम्रगन्ध + कन्।) वनवर्ब्बरभेदः। इति राजनिर्घण्टः॥

आम्रपेशी, स्त्री, (आम्रस्य पेशी।) शुष्काम्रखण्डं। आमषी इति भाषा। अस्या गुणाः। अम्लत्वं। कषायत्वं। उष्णत्वं। भेदकत्वं कफवातनाशित्वञ्च। इति राजवल्लभः॥

आम्रातः, पुं, (आम्र + अत् + अण्।) आम्रातकः। इति शब्दमाला॥ (अस्य गुणाः। यथोक्तं।
“आम्रातमम्लं वातघ्नं गुरूष्णं रुचिकृत् परम्।
पक्वन्तु तुवरं स्वादुरसपाकं हिमं सरम्।
तर्पणं श्लेष्मलं स्निग्धं हृद्यं विष्टम्भि वृंहणम्।
गुरु बल्यं मरुत्पित्तक्षतदाहक्षयापहम्”।
“राजाम्रस्तु आम्रातः कामाङ्गो राजपुत्रकः।
राजाम्रस्तुवरं स्वादु विशदं शीतलं गुरु॥
ग्राहि रुच्यं विबन्धाध्मवातकृत् कफपित्तनुत्”।
इति भावप्रकाशः॥ तथा च चरके।
“मधुरं वृंहणं बल्यमाम्रातं तर्पणं गुरु।
सश्लेष्मं श्लेष्मलं शीतं हृद्यं विष्टभ्य जीर्य्यति”॥)

आम्रातकः, पुं, (आम्रं तद्रसम् आ ईषत् अतति प्राप्नोति। अत सातत्यगमने ण्वुल्।) वृक्षविशेषः। आमड़ा इति भाषा। तत्पर्य्यायः। पीतनः २ कपीतनः ३। इत्यमरः॥ वर्षपाकी ४। इति रत्नमाला॥ पीतनकः ५ कपिचूडा ६ अम्लवाटिकः ७ भृङ्गीफलः ८ रसाढ्यः ९ तनुक्षीरः १० कपिप्रियः ११ अम्बरातकः १२ अम्बरीषः १३ कपिचूतः १४। इति जटाधरः॥ तदपक्वफलगुणाः। कषायत्वं। अम्लत्वं। कृत्कण्ठहर्षणत्वञ्च। तत्पक्वफलगुणाः। मधुराम्लत्वं। स्निग्धत्वं। पित्तकफनाशित्वञ्च। इति राजनिर्घण्टः॥ अपिच। रुचिबलविष्टम्भाजीर्णकारित्वम्। गुरुत्वञ्च। इति राजवल्लभः॥ आम्रावर्त्तः। इति राजनिर्घण्टः॥ (यथा मार्कण्डेयपुराणे।

“आम्रानाम्रातकान् भव्यान्
नारिकेलान् सतिन्दुकान्”। इति।

अस्य पर्य्यायो गुणाश्च।

“आम्रातकः पीतनश्च मर्कटाम्रः कपीतनः॥
आम्रातमम्लं वातघ्नं गुरूष्णं रुचिकृत्सरम्।
पक्वन्तु तुवरं स्वादु रसे पाके हिमं सरं॥
तर्पणं श्लेष्मलं स्निग्धं हृद्यं विष्टम्भि वृंहणं।
गुरु बल्यमरुत्पित्तक्षतदाहक्षयापहम्”॥
इति भावप्रकाशः॥
“आम्रातकफलं हृद्यं ससेकं श्लेष्मवर्द्धनं”।
इति सुश्रुतः॥)

आम्रावर्त्तः, पुं, (आम्रस्य आवर्त्तः।) आम्रगुडरसः। तत्पर्य्यायः। आम्रातकः २। आमसत्त्व इति भाषा। अस्य गुणाः। तृष्णाच्छर्द्दिवातपित्तहरत्वम्। सारकत्वम्। रुचिकारित्वम्। सूर्य्यां-

ह्यकारिणोऽप्रमत्तस्य त्रिवर्गं परस्परेणानुपहत-
मुपसेवमानस्य पूजार्हसम्पूजकस्य ज्ञानविज्ञानोप-
शमशीलस्य वृद्धोपसेविनः सुनियतरागरोषेर्ष्या-
मदमानवेगस्य सततं विविधप्रदानपरस्य तपो-
ज्ञानप्रशमनित्यस्याध्यात्मविदस्तत्परस्य लोकमि-
मञ्चामुञ्चावेक्षमाणस्य स्मृतिमतो हितमायु-
रुच्यते” । इति च ॥
“अहितमतो विपर्य्ययेण प्रमाणमायुषश्चर्य्येन्द्रिय-
मनोबुद्धिचेष्टादीनां विकृतिलक्षणैरुपलभ्यते अ-
निमित्तैरिदमस्मात् क्षणान्मुहूर्त्ताद्दिवसात्त्रिपञ्च-
सप्त-दश-द्वादशाहात् पक्षान्मासात् षण्मा-
सात् संवत्सराद्वा स्वभावमापत्स्यते इति । तत्र
स्वभावः प्रवृत्तेरुपरमो मरणमनित्यता निरोध
इत्येकोऽर्थः । इत्यायुषः प्रमाणमतो विपरीतम-
प्रमाणम्” । इति च ॥
“शरीरस्य तत्त्वायुषः प्रमाणमस्मिन् काले तस्य नि-
मित्तं प्रकृतिगुणात्मसम्पद् सात्म्योपसेवनञ्चेति” ।
इति च चरकः ॥)

आयुक्तः, त्रि, (आङ्+युज्+क्तः ।) कर्म्माध्यक्षः ।
तत्पर्य्यायः । नियोगी २ कर्म्मसचिवः ३ आयुतः ४ ।
इति हेमचन्द्रः ॥

आयुधः, पुं, (आयुध्यतेऽनेनेति । आङ्+युध्+क ।)
अस्त्रं । इत्यमरः ॥ (आयुधानां त्रयो भेदाः । प्रहर-
णानि, पाणिमुक्तानि, यन्त्रमुक्तानि चेति । तत्र
प्रहरणानि खड्गादीनि, पाणिमुक्तानि चक्रादीनि,
यन्त्रमुक्तानि शरादीनि । “हृतायुधो यावदहं
तावदन्यैः किमायुधैः” । “किं वध्यत्वयमेवमस्य
विमुखं मामुद्यतेऽप्यायुधे” । इति उत्तरचरिते ।)

आयुधधर्म्मिणी, स्त्री, (आयुधस्येव धर्म्मो विद्यते
अस्याः । आयुधधर्म्म+इन्+ङीप् ।) जयन्ती-
वृक्षः । इति शब्दचन्द्रिका ॥

आयुधागारं, क्ली, (आयुधानाम् आगारं । षष्ठीतत् ।)
अस्त्रगृहं । सेलाखाना इति ख्यातं । इति महा-
भारते राजधर्म्मः ॥ तत्र नियुक्तस्य लक्षणं यथा,—
“आयसागारिकश्चैव सततं प्रतिजाग्रता ।
राज्ञः स्यादायुधागारे दक्षः कर्म्मसु चोद्यतः” ॥
इति मात्स्ये १८९ अध्यायः ॥ (यथा मनुः ९।२८० ।
“कोष्ठागारायुधागारदेवतागारभेदकान् ।
हस्त्यश्वरथहर्त्तॄंश्च हन्यादेवाविचारयन्” ॥)

आयुधिकः, पुं, (आयुधेन जीवति, आयुध+ठक् ।)
अस्त्रजीवी । तत्पर्य्यायः । शस्त्राजीवः २ काण्ड-
पृष्ठः ३ आयुधीयः ४ । इत्यमरः ॥ (यथा महा-
भारते १६।७।६६ ।
“न पारयन्तैः संयुक्ताः नाम्नरायुधिका ययुः” ।

आयुधीयः, पुं, (आयुध+छ ।) आयुधिकः । इत्य-
मरः ॥ (योद्धा । यथा मनुः ७।२२२ ।
“अलङ्कृतश्च सम्पश्येदायुधीयं पुनर्जनं” ।
उत्तरचरिते ६ । “तर्ज्जयन्ति विस्फुरितशस्त्राः
कुमारमायुधीयश्रेणयः” ।) [रत्नमाला ॥

आयुर्द्रव्यं, क्ली, (आयुषो द्रव्यम् ।) औषधं । इति

आयुर्व्वेदः, पुं, (आयुरनेन विन्दति वेत्ति वेत्यायुर्व्वेदः ।
आयुस्+विद्+करणे घञ् ।) अष्टादशविद्या-
न्तर्गतधन्वन्तरिप्रणीतविद्याविशेषः । वैद्यकशास्त्रं ।
चिकित्साशास्त्रं । तत्तु अथर्व्ववेदान्तर्गतं । यथा,
“विधाताथर्व्वसर्व्वस्वमायुर्व्वेदं प्रकाशयन् ।
स्वनाम्ना संहितां चक्रे लक्षश्लोकमयीमृजुम्” ॥
इति भावप्रकाशः ॥
चरणव्यूहमते ऋग्वेदस्योपवेद आयुर्व्वेदः । अथ-
र्व्ववेदस्य शस्त्रशास्त्राख्योपवेदः ॥ * ॥ अथायुर्व्वेदस्य
विवरणम् ।
“ऋग्यजुःसामाथर्व्वाख्यान् दृष्ट्वा वेदान् प्रजापतिः ।
विचिन्त्य तेषामर्थं चैवायुर्व्वेदं चकार सः ॥
कृत्वा तु पञ्चमं वेदं भास्कराय ददौ विभुः ।
स्वतन्त्रसंहितां तस्मात् भास्करश्च चकार सः ॥
भास्करश्च स्वशिष्येभ्य आयुर्व्वेदं स्वसंहितां ।
प्रददौ पाठयामास ते चक्रुः संहितास्ततः ॥
तेषां नामानि विदुषां तन्त्राणि तत्कृतानि च ।
व्याधिप्रणाशबीजानि साध्वि मत्तो निशामय ॥
धन्वन्तरिर्द्दिवोदासः काशीराजोऽश्विनीसुतौ ।
नकुलः सहदेवोऽर्किश्च्यवनो जनको बुधः ॥
जावालो जाजलिः पैलः करथोऽगस्त्य एव च ।
एते वेदाङ्गवेदज्ञाः षोडश व्याधिनाशकाः ॥
चिकित्सातत्त्वविज्ञानं नाम तन्त्रं मनोरमम् ।
धन्वन्तरिश्च भगवान् चकार प्रथमे सति ॥
चिकित्सादर्पणं नाम दिवोदासश्चकार सः ।
चिकित्साकौमुदीं दिव्यां काशीराजश्चकार सः ॥
चिकित्सासारतन्त्रञ्च भ्रमघ्नं चाश्विनीसुतौ ।
तन्त्रं वैद्यकसर्व्वस्वं नकुलश्च चकार सः ॥
चकार सहदेवश्च व्याधिसिन्धुविमर्द्दनं ।
ज्ञानार्णवं महातन्त्रं यमराजश्चकार सः ॥
च्यवनो जीवदानञ्च चकार भगवानृषिः ।
चकार जनको योगी वैद्यसन्देहभञ्जनं ॥
सर्व्वसारं चन्द्रसुतो जावालस्तन्त्रसारकं ।
वेदाङ्गसारं तन्त्रञ्च चकार जाजलिर्मुनिः ॥
पैलो निदानं करथस्तन्त्रं सर्व्वधरं परं ।
द्वैधनिर्णयतन्त्रञ्च चकार कुम्भसम्भवः ॥
चिकित्साशास्त्रबीजानि तन्त्राण्येतानि षोडश ।
व्याधिप्रणाशबीजानि बलाधानकराणि च ॥
मथित्वा ज्ञानमन्थानैरायुर्व्वेदपयोनिधिं ।
ततस्तस्मात्समुद्धृतनवनीतानि कोविदाः ॥
एतानि क्रमशो दृष्ट्वा दिव्यां भास्करसंहितां ।
आयुर्व्वेदं सर्व्वबीजं सर्व्वं जानामि सुन्दरि ॥
व्याधेस्तत्त्वपरिज्ञानं वेदनायाश्च निग्रहः ।
एतद्वैद्यस्य वैद्यत्वं न वैद्यः प्रभुरायुषः ॥
आयुर्व्वेदस्य विज्ञाता चिकित्सासु यथार्थवित् ।
धर्म्मिष्ठश्च दयालुश्च तेन वैद्यः प्रकीर्त्तितः” ॥
इति ब्रह्मवैवर्त्ते ब्रह्मखण्डे १६ अध्यायः ॥ * ॥
तस्य लक्षणम् यथा,—
“आयुर्हिताहितं व्याधिनिदानं शमनं तथा ।
विद्यन्ते यत्र विद्वद्भिः स आयुर्व्वेद उच्यते” ॥
तस्य निरुक्तिर्यथा,—
“अनेन पुरुषो यस्मात् आयुर्विन्दति वेत्ति च ।
तस्मान्मुनिवरैरेष आयुर्व्वेद इति स्मृतः” ॥
इति भावप्रकाशः ॥ * ॥ अन्यत् रोगशब्दे वैद-
शब्दे वैद्यशब्दे च द्रष्टव्यम् ॥
(“हिताहितं सुखं दुःखमायुस्तस्य हिताहितं ।
मानञ्च तच्च यत्रोक्तमायुर्व्वेदः स उच्यते” ॥
“तस्यायुषः पुण्यतमो वेदो वेदविदां मतः ।
वक्ष्यते यन्मनुष्याणां लोकयोरुभयोर्हितः” ॥
“किमायुः कस्मादायुर्व्वेदः किमायुर्व्वेदः शाश्वतो
ऽशाश्वत इति । कानि चास्याङ्गानि कैश्चायमध्ये-
तव्यः किमर्थञ्चेति” ।
“तत्र भिषजा पृष्टेनैवञ्चतुर्णामृक्सामयजुरथर्व्व-
वेदानामात्मनोऽथर्व्ववेदे भक्तिरादेश्या वेदो ह्या-
थर्व्वणः स्वस्त्ययनबलिमङ्गलहोमनियमप्रायश्चि-
त्तोपवासमन्त्रादिपरिग्रहाच्चिकित्सां प्राह चि-
कित्सा चायुषो हितायोपदिश्यते वेदञ्चोपदि-
श्यायुर्वाच्यं तत्रायुश्चेतनानुवृत्तिर्जीवितमनुबन्धो
धारि चेत्येकोऽर्थः, तदा आयुर्व्वेदयत्यायुर्व्वेदः कथ-
मुच्यते स्वलक्षणतः सुखासुखतो हिताहिततः
प्रमाणाप्रमाणतश्च यतश्चायुष्याण्यनायुष्याणि द्रव्य-
गुणकर्म्माणि वेदयत्यतोऽप्यायुर्व्वेदः तत्रायुष्याणि
अनायुष्याणि च द्रव्यगुणकर्म्माणि केवलेनोप-
देक्ष्यन्ते” ।
“तानिन्द्रः सहस्रदृगमरगुरुवरोऽब्रवीत् स्वागतं
ब्रह्मविदां ज्ञानतपोधनानां ब्रह्मर्षीणामस्ति ननु
ग्लानिरप्रभावत्वं वैस्वर्य्यं वैवर्ण्यञ्च ग्राम्यवासकृत-
मसुखमसुखानुबन्धं च । ग्राम्यो हि वासो मूल-
मशस्तानां तत्कृतं पुण्यकृद्भिरनुग्रहः प्रजानां
स्वशरीरमवेक्षितुं कालश्चायमायुर्व्वेदोपदेशस्य
ब्रह्मर्षीणामात्मनः प्रजानाञ्चानुग्रहार्थमायुर्व्वेद-
मश्विनौ मह्यं प्रयच्छतां प्रजापतिरश्विभ्यां ।
प्रजापतये ब्रह्मा प्रजानामल्पमायुर्जराव्याधि-
बहुलमसुखमसुखानुबन्धं अल्पत्वादल्पतपोदम-
नियमदानाध्ययनसञ्चयं मत्वा पुण्यतममायुः-
प्रकर्षकरं जराव्याधिप्रशमनं ऊर्ज्जस्करममृतं
शिवं शरण्यमुदारं भवन्तो मत्तः श्रोतुमर्हथोप-
धारयितुं प्रकाशयितुञ्च प्रजानुग्रहार्थमार्षं ब्रह्म
च मैत्रीं कारुण्यमात्मनश्चानुत्तमं पुण्यमुदारं
ब्राह्ममक्षयं कर्म्मेति” । इति चरकः ॥
“तानुवाच भगवान् स्वागतं वः । सर्व्व एव
अमीमांस्या अध्याप्याश्च भवन्तो वत्साः । इह
खल्वायुर्व्वेदो नाम यदुपाङ्गमथर्व्ववेदस्यानुत्पाद्यैव
प्रजाः श्लोकशतसहस्रमध्यायसहस्रञ्च कृतवान् स्व-
यम्भूः । ततोऽल्पायुष्ट्वमल्पमेधस्त्वञ्चावलोक्य नराणां
भूयोऽष्टधा प्रणीतवान् ॥ तद्यथा ॥ शल्यं शालाक्यं
कायचिकित्सा भूतविद्या कौमारभृत्यमगदतन्त्रं
रसायनतन्त्रं वाजीकरणतन्त्रमिति” ॥
“वत्स ! सुश्रुत ! इह खल्वायुर्व्वेदप्रयोजनं व्या-
ध्युपसृष्टानां व्याधिपरिमोक्षः स्वस्थस्य रक्षणञ्च ।
आयुरस्मिन् विद्यतेऽनेन वा आयुर्विन्दतीत्यायु-
र्व्वेदः ।तस्याङ्गवरमाद्यमागमप्रत्यक्षानुमानोपमानै-
रविरुद्धमुच्यमानमुपधारय । एतद्ध्यङ्गं प्रथमं
प्रागभिघातव्रणसंरोहाद्यज्ञशिरःसन्धानाच्च” ।
“तदिदं शाश्वतं पुण्यं स्वर्ग्यं यशस्यमायुष्यं वृत्ति-
करञ्चेति” ॥

"ब्रह्मा प्रोवाच ततः प्रजापतिरश्विनौ तस्मादश्विनावश्विभ्यामिन्द्र इन्द्रादहं मया त्विह प्रदेयमर्थिभ्यः प्रजाहितहेतोः"। इति सुश्रुतः॥)

आयुर्वेदी, [न्] त्रि, (आयुर्वेदो ज्ञातत्वेन विद्यते यस्य। आयुर्वेद + इनि।) आयुर्वेदज्ञः। चिकित्सकः। वैद्यः। इति हेमचन्द्रः राजनिर्घण्टश्च॥

आयुर्योगः, पुं, (आयुषो जीवितकालस्य योगो भवत्यस्मात्।) औषधं। इति राजनिर्घण्टः।

आयुष्मान्, [त्] त्रि, (आयुस् + मतुप्।) चिरजीवी। दीर्घायुः। तत्पर्य्यायः। जैवातृकः २। इत्यमरः॥ (यथा मनुः, २। १२५, ३। २६३।
"आयुष्मान् भव सौम्येति वाच्यो विप्रोऽभिवादने"।
"आयुष्मन्तं सुतं सूते यशोमेधासमन्वितं" इति च॥)

आयुष्मान्, पुं, विष्कुम्भादिसप्तविंशतियोगान्तर्गततृतीययोगः। तत्र जातफलं। "यस्यायुष्मान् जन्मकाले मनुष्यान् याने यानं तस्य देशेषु चार्थं। कुर्य्यादुग्रं क्रीडनं पुण्यवाक्यं दासैर्दासैरन्वितो गर्व्वितश्च"॥ इति दीपिका॥
("आयुष्मान् सत्त्ववान् साध्यो द्रव्यवानात्मवानपि" इति सुश्रुतः॥)

आयुष्यं, त्रि, (आयुस् + यत्।) पथ्यं। इति राजनिर्घण्टः॥ आयुर्हितकारकं॥ (मनुः। ४। १०६।
"धन्यं यशस्यमायुष्यं स्वर्ग्यं चातिथिपूजनं"।
तत्रैव २। ५२।
"आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्यं दक्षिणामुखम्"।
"आयुष्यं भोजनं जीर्णे वेगानाञ्चाविधारणं।
ब्रह्मचर्य्यमहिंसा च साहसानाञ्च वर्ज्जनं"॥
इति सुश्रुतः॥
"आयुष्या दीपनी चैव चक्षुष्या ब्रह्मबोधिनी"।
इति हारीतः।)

आयुष्यसूक्तं, क्ली, (आयुष्यञ्च तत्सूक्तञ्चेति। कर्म्मधारयः।) नान्दीश्राद्धादौ वसुधारासम्पातनानन्तरपाठ्यो वैदिकमन्त्रविशेषः।
सामगानां तन्मन्त्रो यथा,—
ॐ आयुर्विश्वायुर्विश्वं विश्वमायुरशीमहि। प्रजात्वष्टरधिनिधेह्यस्मे सतं जीवेम शरदो वयन्ते। आयुषे मे पवस्व वर्चसे मे पवस्व विदुः पृथिव्या दिवो जनित्राः शृण्वन्त्वापोऽधःक्षरन्ती सोमो होत्राय ममायुषे मम ब्रह्मवर्चसाय यजमानस्यार्ध्या अमुष्य राज्याय। अमुष्य स्थाने शरणं दक्षिणस्य नक्षत्रनाम प्रयोज्यं। इति रघुनन्दनभट्टाचार्य्यकृतश्राद्धप्रयोगतत्त्वं॥ * ॥
यजुर्व्विदां तन्मन्त्रो यथा,—
ॐ आयुष्यं वर्च्चस्यं रायस्पोषमौद्भिदं इदं हिरण्यं वर्च्चस्व जैत्रायाविशतादुमां। न तद्रक्षाꣳसि न पिशाचास्तरन्ति देवानामोजः प्रथमजꣳ ह्येतत्। यो बिभर्त्ति दाक्षायणꣳ हिरण्यꣳ स देवेषु कृणुते दीर्घमायुः स मनुष्येषु कृणुते दीर्घमायुः। यदा बध्नन्दाक्षायणा हिरण्यꣳ शतानीकाय सुमनस्यमानाः। तत्त आवध्नामि शतशारदायायुष्मान् जरदष्टिर्यथासं"। इति तत्कृतयजुर्व्वेदीयश्राद्धप्रयोगतत्त्वं॥

आयुष्करः, त्रि, (आयुस् + कृ + ट।) परमायुर्ज्जनकः॥ (आयुर्वृद्धिजनकः।
"मधुरामलकस्वरसैरधिकरैर्वा तैलेन वा
गुडेन पयसा घृतेन यवशक्तुभिर्वा सह।
सितेन सहमाक्षिकेण पवनेन सूपेन वा
वपुष्करमवक्षरं परममेध्यमायुष्करं"॥
इति वाग्भटः॥)

आयोगः, पुं, (आङ् + युज् + घञ्।) गन्धमाल्योपहारः। व्यापारः। रोधः। इति हेमचन्द्रः॥
(यथा रामायणे,—
"सरलैः कर्णिकारैश्च किंशुकैश्च सुपुष्पितैः।
स देशो भ्रमरायोगः प्रदीप्त इव लक्ष्यते"॥)

आयोगवः, पुं, (अयोगव एव स्वार्थे अण्।) शूद्राद्वैश्यायां जातो जातिविशेषः। इति हेमचन्द्रः॥ तस्य कर्म्म काष्ठतक्षणं। (यथा मनुः १०।१२, १०।२६।
"शूद्रादायोगवः क्षत्ता चण्डालश्चाधमो नृणां।
वैश्यराजन्यविप्रासु जायन्ते वर्णसङ्कराः"॥
"आयोगवोऽयं क्षत्ता च चाण्डालश्चाधमो नृणां।
प्रातिलोम्येन जायन्ते शूद्रादपसदास्त्रयः"॥)

आयोजनं, क्ली, (आङ् + युज् + ल्युट्।) उद्योगः। आहरणं। द्रव्यासादनं। यथा,—
"कुत्रचित् तण्डुलाः सन्ति क्व च स्थाली क्व चेन्धनं।
तेषामायोजनं कुर्व्वन् मुख्यः कर्त्ताभिधीयते"॥
इति गोयीचन्द्रधृतकारिका॥

आयोधनं, क्ली, (आङ् + युध + ल्युट्।) युद्धं। वधः। इति मेदिनी॥ (रघुवंशे, ६।४२।
"आयोधने कृष्णगतिं सहाय-
मवाप्य यः क्षत्रियकालरात्रिं"।
भट्टिः, "आयोधने व्यायुकमल्लजातम्"।
रघुः, ५।७१। "आयोधनाग्रसरतां त्वयि वीर! याते।)

आरं, क्ली, (आङ् + ऋ + भावे घञ्।) मुख्यायसं। मुख्यलोहं। इति राजनिर्घण्टः॥ पित्तलं। इत्यमरटीका॥ कोणः। प्रान्तभागः। इत्यानन्दलहरीटीका॥ (चक्राङ्गकाष्ठभेदः। यथा महाभारते,
"आरान्तरेणावपतत् संक्षिप्याङ्गं क्षणेन च"।
"यश्चिवक्रिश्रतारथं वेदार्थं स परः कविः"॥)

आरः, पुं, (आङ् + ऋ + कर्त्तरि संज्ञायां घञ्।) मङ्गलग्रहः। शनिः। पित्तलं। इति हेमचन्द्रः॥ वृक्षभेदः। तत्पर्य्यायः। मधुराम्लफलः २। इति रत्नमाला॥ रेवत इति ख्यातः॥

आरकूटः, पुं क्ली, (आरं कूटयति अपीकरोति यथायथम्।) पित्तलं। इत्यमरः॥ (यथा नैषधे।
"अकाञ्चने काञ्चननायिकाङ्गके किमारकूटाभरणेन न श्रियः"।)

आरक्षं, त्रि, (आरक्षतीति। आङ् + रक्ष + अच्।) रक्षायुक्तं। इति शब्दरत्नावली॥ रक्षणीयं। इति विश्वः॥

आरक्षः, पुं, (आङ् + रक्ष + अच्।) गजकुम्भसन्धिः। इति त्रिकाण्डशेषः॥

आरग्वधः, पुं, (आ + रगि शङ्कायां क्विप्। आरग् रोगमप्युग्रमपि हन्ति वध् वधादेशश्च।) वृक्षविशेषः। सोनालु सोंदालि इति ख्यातः। तत्पर्य्यायः। राजवृक्षः २ सम्पाकः ३ चतुरङ्गुलः ४ आरेवतः ५ व्याधिघातः ६ कृतमालः ७ सुवर्णकः ८। इत्यमरः॥ मन्थानः ९ रोचनः १० दीर्घफलः ११ रम्यद्रुमः १२ हेमपुष्पः १३ राजतरुः १४ कायकृत् १५ ज्वरान्तकः १६ अवघः १७ स्वर्णपुष्पः १८ स्वर्णद्रुः १९ कुष्ठसूदनः २० कर्णाभरणकः २१ महाराजद्रुमः २२ कर्णिकारः २३ स्वर्णाङ्गः २४। इति राजनिर्घण्टः॥ प्रग्रहः २५। इति रत्नमाला॥ अस्य गुणाः। अतिमधुरत्वं। शीतलत्वं। शूलज्वरकण्डुकुष्ठमेहकफविड्ग्रहनाशित्वञ्च। इति राजनिर्घण्टः॥ अपि च। ज्वरहृद्रोगवातरक्तोदावर्त्तरोगे अतिशयपथ्यत्वं। मृदुत्वञ्च। अस्य फलगुणाः। मधुरत्वं। रुचिकारित्वं। वातपित्तहारित्वञ्च। इति राजवल्लभः॥ आमलतास इति हिन्दीभाषा।
"आरग्वधो राजवृक्षः शम्पाकश्चतुरङ्गुलः।
आरेवतव्याधिघातकृतमालसुवर्णकाः॥
कर्णिकारो दीर्घफलः स्वर्णाङ्गः स्वर्णभूषणः।
आरग्वधो गुरुः स्वादुः शीतलः स्रंसनोत्तमः॥
ज्वरहृद्रोगपित्तास्रवातोदावर्त्तशूलनुत्।
तत्फलं स्रंसनं रुच्यं कुष्ठपित्तकफापहं॥
ज्वरे तु सततं पथ्यं कोष्ठशुद्धिकरं परं"।
इति भावप्रकाशः॥
(व्यवहारो यथा,—
"बाले वृद्धे क्षते क्षीणे सुकुमारे च मानवे।
योज्योऽमृतलघायित्वाद्विशेषाच्चतुरङ्गुलः"॥ * ॥
ग्रहणप्रकारो यथा॥ * ॥
"फलकाले फलन्तस्य ग्राह्यं परिणतञ्च यत्।
तेषां गुणवतां भारं सिकतासु निधापयेत्॥
सप्तरात्रात् समुद्धृत्य शोषयेदातपे भिषक्।
ततो मज्जानमुद्धृत्य शुचौ भाण्डे निधापयेत्"॥ * ॥
संयोगविशेषे गुणा यथा॥ * ॥
"द्राक्षारससयुक्तो देयो दाहोदावर्त्तपीडिते।
चतुर्व्वर्षसुखं बाले यावद्द्वादशवार्षिके॥ * ॥
चतुरङ्गुलमज्जानं प्रसृतं वाथवाञ्जलिं।
सुरामण्डेन संयुक्तमथवा कोलसीधुना॥
दधिमण्डेन वा युक्तं रसेनामलकस्य वा।
कृत्वा शीतकषायं तं पिबेत् सौवीरकेण वा"॥
इति चरकः॥)

आरट्टः, पुं, (आङ् + रट् + टक्।) देशविशेषः। त्रिकाण्डशेषे क्षत्रियवर्गे आरट्टजशब्ददर्शनात्॥ तत्र आरट्टोऽपि पाठः॥ (यथा भारते,—
"पञ्चनद्यो वहन्त्येता यत्र पीलुवनान्युत।
शतद्रुश्च विपाशा च तृतीयैरावती तथा॥
चन्द्रभागा वितस्ता च सिन्धुषष्ठा बहिर्गिरेः।
आरट्टा नाम ते देशा नष्टधर्म्मा न तान् व्रजेत्"॥
"पञ्च नद्यो वहन्त्येता यत्र निःसृत्य पर्व्वतात्।
आरट्टा नाम वाहीका न तेष्वार्य्यो द्व्यहं वसेत्"॥)

आरट्टजः, पुं, (आरट्टदेशे जायते आरट्ट + जन + डः।) आरट्टदेशोद्भवघोटकः। इति जटाधर,

शिवावादीयस्तुरिप्रयोगो च। (आरब्धेऽस्तीत्यस्मे, त्रि। यथा महाभारते,—

"शरीरैः यामं गुरुतल्पावमर्द्दी

भ्रूणहत्या परवित्तापहारः।

शैब्यां धर्म्मंत्वान् प्रति नाथधर्म्म-

मारब्धवान् मधवतान् त्रिमन्तु" ॥)

आरग्विः, पुं, (आङ् + ऋ + क्विप्।) आवर्त्तः। तत्पर्य्यायः। कुम्भवलना २। इति हारावली॥ पाककारा अत इत्यादि भाषा॥

आरण्यपशुः, पुं, (अरण्ये भवः। अरण्य + ष्णण् + स चासौ पशुश्चेति कर्म्मधारयः।) अरण्यजातपशुः। स च सप्तधा यथा। महिषः १ वानरः २ महाः ३ सरीसृपः ४ रुरुः ५ पृषतः ६ मृगः ७। इति तिथ्यादितत्त्वे पैठीनसिः॥

आरण्यमुद्गा, स्त्री, (अरण्यमुद्गस्येवाकारः यस्याः। ततः स्वार्थे अण्।) मुद्गपर्णी। मुगानी इति भाषा। इति राजनिर्घण्टः॥

आरण्यराशिः, पुं, (अरण्ये भवः आरण्यः अत सिंह एव स एव राशिः।) सिंहराशिः। मकरमध्यमाद्धः। कीटमेषवृषराशयः। इति दीपिका॥

आरतिः, स्त्री, (आङ् + रम् + क्तिन्।) विरतिः। निवृत्तिः। इत्यमरः॥ (उपरमः, नीराजनम्।)

आरनालं, क्ली, (आरमिति आङ् + ऋ + अण् आरः। नव जले अपनालीति वा नालः। आरः नालो गन्धो यस्य।) काञ्जिकं। इति हेमचन्द्रः॥

"आरनालन्तु गोधूमैरामैः स्यान्निस्तुषीकृतैः।

पक्वैर्वा सन्धितैस्तत् सौवीरसदृशं गुणैः"॥

इति राजनिर्घण्टः॥

("लाक्षा हरिद्रा मञ्जिष्ठा कल्कैस्तैलं विपाचयेत्।

षड्गुणेनारनालेन दाहशीतज्वरापहं" ॥ *॥

लाक्षादितैलं ॥ * ॥ इति वैद्यकचक्रपाणिसंग्रहः॥)

आरनालकं, क्ली, (आरनालम् एव स्वार्थे कः।) काञ्जिकं। इत्यमरः॥ कांजि इति भाषा।

आरब्धं, त्रि, (आङ् + रभ् + क्तः।) कृतारम्भं। आरम्भे क्ली। यथा,—

"आरब्धं मलमासात् प्राक् यत् कर्म्म न समापितं।

आगते मलमासेऽपि तत् समाप्यं न संशयः"॥

इति मलमासतत्त्वं ॥ * ॥ आरब्धकर्म्मणः पौर्णमासी यथा,—

"प्रतपक्षुविवाहेषु श्राद्धे होमेऽर्च्चने जपे।

आरब्धे सूतकं न स्यादनारब्धे तु सूतकं"॥

इति तिथ्यादितत्त्वं॥

आरभ्भः, पुं, (आङ् + रभि + घञ्।) प्रथमकृतिः। तत्पर्य्यायः। प्रक्रमः १ उपक्रमः २ अभ्यादानं ३ उद्घातः ४ आरम्भः ५। इत्यमरः॥ अभ्यादानादित्रयमारम्भमात्रे। प्रक्रमादिपञ्च आरम्भमात्रे इत्येके॥ केचित्तु प्रक्रमादिद्वयं प्रथमारम्भे॥ अभ्यादानादित्रयं आरम्भमात्रे। इति भरतमिश्रमतमपि न साधु यतः प्रथमकृतिरेव आरम्भः तत्पूर्व्वं आरम्भे प्रथमत्वं आरब्धे इत्याहुः। इति भरतः॥ त्वरा। उद्यमः। वधः। दर्पः। इति मेदिनी॥ प्रस्तावना। इति शिक्षाव्याख्येयः॥ आद्यकृतिः। यथा,—

"मीनादित्यो रविर्येषामारम्भप्रथमक्षणे।

भवेत्तेऽब्दे चान्द्रमासास्तेषां मासाश्च चान्द्राः"॥

आरम्भप्रथमक्षणे आद्यकृत्यावच्छेदे। इति मलमासतत्त्वम्॥ पारिभाषिकारम्भो यथा,—

"आरम्भो वरणं यज्ञे संकल्पो व्रतजापयोः।

नान्दीश्राद्धं विवाहादौ श्राद्धे पाकपरिक्रिया"॥

इति तिथ्यादितत्त्वम्॥ (यथा मेघदूते। ३०।—

"इत्यारम्भो हर वसुपतेरार्य्यमालाभिषेकात्"।

साहित्यदर्पणे। प्रथमपरिच्छेदे।

"प्रज्ञारम्भे विविक्तेन मारिरचितपरिपन्थि-

कामः"। रघुवंशे। ११५।

"आशैः सदृशारम्भ आरम्भसदृशोदयः"।)

आरवः, पुं, (आङ् + रु + अप्।) शब्दः। इत्यमरः॥ (यथा रामायणे। "वानरारावसंरावं"।)

आरवी, स्त्री, आरवनामकस्त्रोत्रदेशीयभाषा। यथा,

"ज्येष्ठाश्लेषा मघा मूलं रेवती भरणीद्वये।

विशाखार्द्रोत्तराषाढ़ाश्रवणे मापवासरे।

कवे स्थिरे लग्ने च पारसीमारवीं पठेत्"।

इति गणपतिमुहूर्त्तः॥

आरा, स्त्री, (आङ् + ऋ + अच् + टाप्।) चर्म्मभेदकास्त्रं। तत्पर्य्यायः। चर्म्मप्रभेदिका २। इत्यमरः॥

"उग्रव्याराभप्रकाशोत्थितस्य"। इति माघः।)

आराग्रं, स्त्री, (आरायाः अग्रं यदीव तत्।) अर्द्धचन्द्राग्रमुखं।

"अर्द्धचन्द्रक्षुरप्राग्र्यधाराग्रं सुखमुच्यते"।

"आराग्रन्तु मुखन्तेषां पुष्पपत्रादिभेदतः"॥ इति कृषायुधः॥

आरात्, अ, (आ राति। रा दाने बाहुलकादातिप्रत्ययः।) दूरं। निकटः। इत्यमरः॥ (यथा, उत्तरचरिते।

"मेघमानेव मध्यायमारादपि विभाव्यते"। इति

"तमर्थमारादभिवर्त्तमानम्"। इति रघौ २।१०।

आरातिः, पुं, (आङ् + रा + क्तिन्।) अरातिः। शत्रुः। इति भरतः द्विरूपकोषश्च॥

आरात्रिकं, क्ली, (आङ् + रात्रि + कन्।) नीराजनविधिप्रदीपः। नीराजना। नीराजनपात्रञ्च। आरति इति भाषा। तथाच हरिभक्तिविलासे।

"ततश्च मूलमन्त्रेण दत्त्वा पुष्पाञ्जलित्रयं।

महानीराजनं कुर्य्यात् महावाद्यजयस्वनैः॥

प्रज्वालयेत्तदर्थञ्च कर्पूरेण घृतेन वा।

आरात्रिकं शुभे पात्रे विषमानेकवर्त्तिकं"॥

अन्यच।

"आदौ चतुष्पादतले च विष्णो-

र्द्वौ नाभिदेशे मुखमण्डलैकं।

सर्व्वेषु चाङ्गेष्वपि सप्तवारा-

नारात्रिकं भक्तजनस्तु कुर्य्यात्"॥

आराधनं, क्ली, (आङ् + राध् + ल्युट्।) साधनं। प्राप्तिः। तोषणं। इत्यमरः॥ पचनं। इति मेदिनी॥ (यथा वैराग्यशतके श्लोकाङ्के ५।

"मन्त्राराधनतत्परेण मनसा नीताः श्मशाने निशाः"।

उत्तरचरिते। प्रथमाङ्के।

"स्नेहं दयाञ्च सौख्यञ्च यदि वा जानकीमपि।

आराधनाय लोकानां मुञ्चतो नास्ति मे व्यथा"॥

कुमारसम्भवे १। ५९।

"आराधनायास्य सखीसमेतां

समादिदेश प्रयतां तनूजाम्"।)

आराधना, स्त्री, (आङ् + राध् + णिच् + युच् + स्त्रीत्वात् टाप्।) साधना। तत्पर्य्यायः। सेवा २ भक्तिः ३ परिचर्य्या ४ उपासना ५ शुश्रूषा ६ उपास्तिः ७ वरिवस्या ८ परिष्टिः ९ उपचारः १०। इति हेमचन्द्रः॥

आरामः, पुं, (आरमन्त्यत्र, आङ् + रम् + आधारे घञ्।) उपवनं। इत्यमरः॥ बागान् इति भाषा। (यथा, मनुः,—८। २६२। ८। २६४।

"तडागकूपतडागानामारामस्य गृहस्य च"।

"गृहं तडागमारामं क्षेत्रं वा भीषया हरन्"।)

आरामशीतला, स्त्री, (आरामजातात् शीतला स्निग्धा।) सुगन्धिपत्रिविशेषः। वन्यद्यादिवर्गे स्थिता। तत्पर्य्यायः। आनन्दी २ शीतला ३ सुरभिणी ४ रामा ५ महानन्दा ६ गन्धाढ्या ७ रामशीतला ८। अस्या गुणाः। तिक्तत्वं। शीतलत्वं। पित्तहारित्वं। दाहशोषप्रशमनत्वं। विस्फोटव्रणदोषनाशनञ्च। इति राजनिर्घण्टः॥ (यथा वैद्यके।

"आरामशीतला तिक्ता शीतला पित्तहारिणी"।)

आरालिकः, त्रि, (अरालं कुटिलं चरति इति ठक्।) सूपकारः। पाचकः। इत्यमरः॥

आरावः, पुं, (आङ् + रु + घञ्।) शब्दः। इत्यमरः॥ (यथा महाभारते।

"आरावं मालवर्गेस्य भ्रमूनां सुमियैर्वदे"।

"आराव सुमहांश्चासीत्"।)

आरुः, पुं, (ऋ + उण्।) वृक्षभेदः। कर्कटः। शूकरः। इति मेदिनी॥

आरुः, पुं, (अरुति वर्त्तते वा। ऋ + ऊ + क्विप्।) पिङ्गलवर्णः। तद्युक्ते त्रि। इत्युणादिकोषः॥

आरुकं, क्ली, (आरु + कन्।) हिमालये प्रसिद्धौषधीविशेषः। आडु इति भाषा। तत्पर्य्यायः। वीरसेनं २ वीरं ३ वीराजकं ४। तत्तत्पुष्पादिभेदतः चतुर्जातिः। तेषां गुणाः। मधुरत्वं। स्निग्धत्वं। अर्शःप्रमेहगुल्मादिदोषनाशित्वञ्च। इति राजनिर्घण्टः॥ (यथा चरके।

"अर्कं मधुकं द्राक्षा बदर्य्यारुकफलानि च"।)

आरूढ़ः, त्रि, (आङ् + रुह् + कर्त्तरि क्तः।) कृतारोहणः। वृक्षादिर उपर चढ़ा व्यक्ति इति भाषा। यथा,—

"राम रामेति रामेति कूजन्तं मधुराक्षरं।

आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलं"॥

इति रामायणपाठस्य पूर्व्वपाठ्यश्लोकः॥

(यथा स्मृतिः।

"आरूढ़ो नैष्ठिकं धर्म्मं यस्तु प्रच्यवते पुनः।

प्रायश्चित्तं न पश्यामि येन शुध्येत् स आत्महा"॥

गीता।

"योगारूढ़स्य तस्यैव शमः कारणमुच्यते"।)

आरेवतं, क्ली, (आरेवयति विरेचयति मलं आरग्वधात् । रेव प्लवगतौ । णिच् + णिच् । कलति । कल + अच् । तत आरेव् चासौ कलश्चेति ।) पाटलावनफलम् । इति राजनिर्घण्टः ॥
("मूलत्वं मूलकल्कश्च यवागूः पञ्चमूलकं ।
आरेवतफलांशु यत्ता तेन हृतं पचेत्" ।
इति सुश्रुतः चैकपञ्चाशत्तमाध्यायः ॥)

आरेवतः, पुं, (आरेवयति रेचयति मलं आरग्वधात् आङ् + रेव् + णिच् + णिच् + अच् ।) आरग्वधवृक्षः । इत्यमरः ॥

आरोग्यं, क्ली, (अरोगस्य भावः । ष्यञ् ।) स्वास्थ्यभावः । तत्पर्य्यायः । अनामयं २ । इत्यमरः ॥ पाटवं ३ आयत्वं ४ वार्त्तं ५ । इति राजनिर्घण्टः ॥ ("आरोग्यं तत् सुखावहं" । इति शार्ङ्गधरः ॥
"धर्म्मार्थकाममोक्षाणामारोग्यं मूलमुत्तमम्" ।
"सुखसंज्ञकमारोग्यम्,"
"वेदाध्ययनशब्दश्च सुखो वायुः प्रदक्षिणः ।
यदि वैद्यमवेद्यं तु विद्यादारोग्यलक्षणम् ॥"
इति चरकः ॥
"तुल्यामां यमाख्येन कटुकस्येतदीरितं ।
आरोग्यमायुरर्थो वा नाल्पाद्भिः प्राप्यते नृभिः" ॥
इति सुश्रुतः ॥)

आरोग्यशाला, स्त्री, (आरोग्यार्थं शाला । मध्यपदलोपिकर्म्मधारयः ।) आरोग्यदानस्थानं । चिकित्सालयः । यथा,—
"धर्म्मार्थकाममोक्षाणामारोग्यं साधनं यतः ।
अतस्त्वारोग्यदाता च नरो भवति सर्व्वदः ॥
आरोग्यशालां कुर्व्वीत महौषधपरिच्छदां ।
विदग्धवैद्यसंयुक्तां भृत्यवर्गसंयुतां ॥
वैद्यस्तु शास्त्रवित् प्राज्ञो दृष्टौषधपराक्रमः ।
ओषधीमूलतत्त्वज्ञः समुद्धरणकालवित् ॥
मणवीर्य्यविपाकज्ञः ज्ञातिमानौषधीमये ।
ज्ञातिवद्रोगिषु सदानुकूलः प्रियंवदः" ॥
इति वैद्यकं ॥

आरोपः, पुं, (आङ् + रुह् + णिच् + घञ् ।) मिथ्याज्ञानं । यथा । "असर्पभूते रज्जौ सर्पारोपवत् वस्तुन्यवस्त्वारोपः अध्यारोपः" । इति वेदान्तसारः ॥ मिथ्याकिरणं । यथा । "अङ्गणा तु दोषारोपो मनोऽस्वपि" । इत्यमरः ॥
(यथा साहित्यदर्पणे । १०म परिच्छेदे ।
"आरोपाध्यवसायाभ्यां प्रत्येकं ता अपि द्विधा" ।
"रूपितं रोपितारोपो विषये निरपह्नवे" ॥
"यत्र तत्त्वनिरारोपः परारोपस्य कारणं" ।)

आरोपणं, क्ली, ( आङ् + रुह् + णिच् + ल्युट् ।) न्यासः । संस्थापनं । (अन्यारोपितं रोपणं । प्रराक्ष्मणौ आरोपितां कर्म्मणं, आश्रमणं, समुत्थापनं, यथा साहित्यदर्पणे । १०म परिच्छेदे ।
"यत्र वस्तुनिरारोपः परारोपणकारणम्" ।
रामायणे । आदिकाण्डे ।
"ज्यारोपण मनुष्ये राजा कुर्व्वीतारोपणं धनुः" ।)

आरोपितं, त्रि, (आङ् + रुह् + णिच् + क्तः ।) आरोपणं । निहितं । न्यस्तं । इति हलायुधः ॥ कल्पितं । (यथा कुमारसम्भवे ३ । ३५ ।
"तं देशमारोपितपुष्पचापे" । काव्यप्रकाशे ।
"आमलकवत्तु विषयं सीता आरोपिता यदा" ।)

आरोहः, पुं, (आङ् + रुह् + घञ् ।) दैर्घ्यं ॥ वरस्त्रियाः श्रोणिः । इत्यमरः ॥ (यथा माघे "आरोहैर्निविडबृहन्नितम्बबिम्बैः" ।) अवरोहः । आरोहणं । समारोहः । समुच्छ्रयः । इति मेदिनी ॥
("आरोहमिव रत्नानां प्रतिमानमिव श्रियः" ।
इति रामायणे ।) परिमाणविशेषः । विस्तारः । इति हेमचन्द्रः ॥ (आरोहति वा । आङ् + रुह् + अच् । निवासी । यथा, हरिवंशे,—
"अश्वाश्च पर्य्यधावन्त हतारोहा दिशो दश" ।)

आरोहकः, त्रि, (आङ् + रुह् + ण्वुल् ।) आरोहणकर्त्ता ।

आरोहणं, क्ली, (आरुह्यतेऽनेन । आङ् + रुह् + ल्युट् ।) सोपानं । सिँड़ि इति भाषा । (भावे ल्युट् ।) समारोहः । नीचादूर्द्ध्वगमनमिति यावत् ।
(यथा कुमारसम्भवे १ । ३९ ।
"आरोहणार्थं नवयौवनेन
कामस्य सोपानमिव प्रयुक्तम्" ।)
प्ररोहणं । अङ्कुरादिजननमिति यावत् । इति मेदिनी ॥

आर्किः, पुं, (अर्कस्यापत्यं । अर्क + इञ् ।) अर्कपुत्रः । शनैश्चरः । इति ज्योतिःशास्त्रं ॥ (वैवस्वतमनुः, सुग्रीवः, कर्णश्च ।)

आर्गलः, पुं स्त्री, (अर्गल एव स्वार्थे अण् ।) अर्गलः । इति त्रिकाण्डशेषः ॥ खिल इति भाषा ।

आर्ग्वधः, पुं, आरग्वधवृक्षः । इति शब्दचन्द्रिका ॥
("आरग्वधस्कन्धेऽस्य गुणादयो ज्ञातव्याः" ।)

आर्घा, स्त्री, (आङ् + अर्घ् + अच् ।) पीता दीर्घतुण्डा षट्पदसन्निभा मक्षिका । इति राजनिर्घण्टः ॥

आर्घ्यं, क्ली, (आर्घया मक्षिकया विहितम् । आर्घा + यत् ।) आर्घानाममक्षिकोत्पन्नमधु । तस्य गुणाः । अतिशयचक्षुर्हितकारित्वं । कफपित्तादिदोषनाशित्वञ्च । इति राजनिर्घण्टः ॥ (यदुक्तं,—
"मधूकवृक्षनिर्य्यासं क्षरत्यार्घ्यन्तमोद्भवाः ।
अक्षय्याश्चं तदाख्यातं श्वेतं माणवे पुनः ॥
तीक्ष्णतुण्डास्तु याः पीता मक्षिकाः षट्पदोपमाः ।
आर्घास्ताभ्यस्तु यत् तदार्घ्यमिति स्मृतं मधु" ॥
यथा सुश्रुते,—
"आर्घ्यं मध्वतिचक्षुष्यं कफपित्तहरं परं ।
कषायं कटु पाके च बल्यं तिक्तमवातलम्" ॥
इदं हि अष्टविधमधुनामिमध्ये परिगणितम् ।
"पौत्तिकं भ्रामरं क्षौद्रं माक्षिकं छात्रमेव च ।
आर्घ्यमौद्दालिकं दालमित्यष्टौ मधुजातयः" ।)

आर्त्तः, त्रि, (आङ् + ऋ + क्तः ।) पीड़ितः । असुस्थः ।
यथा,—
"आर्त्तानां कार्य्यकालानां प्रायश्चित्तानि ये द्विजाः ।
ज्ञानतो न प्रयच्छन्ति तेऽपि तद्दोषभागिनः" ॥
इति प्रायश्चित्ततत्त्वं ॥ (दुःखितः, कातरः, शोकाभिभूतः, उद्वेजितः, विह्वलः, व्यसनी, उत्पीड़ितः । यथा शाकुन्तले, प्रथमाङ्के ।
"आर्त्तत्राणाय वः शस्त्रं न प्रहर्त्तुमनागसि" ।
"हेयोऽपि सम्मतः शिष्टस्तस्यार्त्तस्य यथौषधम्" ।
इति रघौ । १ । २८ । (तथा च चरके ॥
"आन्त्रिनाड्यां भेषजेनोपपादयेत्" । इति ॥

आर्त्तगलः, पुं, (आर्त्तं इव गलति यस्मात् ।) नीलझिण्टी । तत्पर्य्यायः । बाणः २ बाणा ३ दासी ४ आर्त्तगलः ५ । इत्यमरटीका च ॥
("दासे आर्त्तगलश्च सः" । इति भावप्रकाशः ।)

आर्त्तवं, क्ली, (ऋतुरस्य प्राप्तः, अण् यद्वा ऋतुरेव । प्रज्ञादित्वात्स्वार्थे अण् ।) स्त्रीरजः । इत्यमरः ॥ पुष्पं । इति मेदिनी ॥ (यथा मनुः, ३ । ४८ ।
"तस्मात् युग्मासु पुत्रार्थी संविशेदार्त्तवे स्त्रियं" ।
"नोपगच्छेत् प्रमत्तोऽपि स्त्रियमार्त्तवदर्शने" ॥
अथार्त्तवस्य स्वरूपमाह ।
स्त्रीणां रज एव मासेनार्त्तवं भवतीत्युक्ता पुनराह सुश्रुत एव ।
"मासेनोपचितं काले धमनीभ्यां तदार्त्तवं ।
ईषत्कृष्णं विगन्धञ्च वायुर्योनिमुखं नयेत्" ॥
अथार्त्तवस्य शुद्धस्य लक्षणमाह ।
"शशासृक्प्रतिमं यच्च यद्वा लाक्षारसोपमं ।
तदार्त्तवं प्रशंसन्ति यच्चासो न विरञ्जयेत्" ॥
आर्त्तवस्य वर्णविशेषाभिधानं । वातादिप्रकृतिभेदेन वर्णभेदात् । यच्चासो न विरञ्जयेत् । वस्त्रगतो यत् प्रक्षालितं तदाक्षतमपि न तु विरञ्जनतां कुर्य्यात्" ।
इति भावप्रकाशः ॥
"मासान्निष्पिच्छदाहार्त्ति पञ्चरात्रानुबन्धि च ।
नैवातिबहुलात्यल्पमार्त्तवं शुद्धमादिशेत् ॥
शशासृक्प्रतिमं यच्च यद्वा लाक्षारसोपमं ।
इन्द्रगोपकसङ्काशमार्त्तवं शुद्धमेव तत्" ॥
इति चरकः,—
"शशासृक्प्रतिमं यत्तु यद्वा लाक्षारसोपमं ।
तदार्त्तवं प्रशंसन्ति यद्वासो न विरञ्जयेत् ॥
विविधसुतरवक्षन्तं कुर्य्यादार्त्तवशुद्धये ॥
स्त्रीणां स्नेहादियुक्तानां चतसृष्वार्त्तवादिषु ।
कुर्य्यात् कल्कान् पिचूंश्चापि पथ्यान्याचमनानि च ॥
ग्रन्थिभूते पिबेत् पाठां भूषणं वृक्षकाणि च ।
दुर्गन्धे पूयसङ्काशे मज्जतुल्ये तथार्त्तवे ॥
पिबेद्भद्रश्रियः क्वाथं चन्दनक्वाथमेव च" ।
"आर्त्तवं शोणितन्त्वाग्नेयमग्नीषोमीयत्वाद्गर्भस्य पाञ्चभौतिकत्वापरजीवरक्तमाक्रान्तानाम्" ॥
"तद्वर्षात् द्वादशात् काले वर्त्तमानमसृक् पुनः" ।
"एवं मासेन रसः शुक्रीभवति स्त्रीणाञ्चार्त्तवमिति" । इति सुश्रुतः ॥)

आर्त्तवः त्रि, (ऋतुः प्राप्तोऽस्य । अण् ।) ऋतुभवः । इति मेदिनीकरहेमचन्द्रौ ॥ यथा रामायणे,—
"आर्त्तवान्युपभुञ्जाना पुष्पाणि च फलानि च" ।
रघौ ८ । ३६ ।
"अभिभूय विभूतिमार्त्तवीं
मधुगन्धातिशयेन वीरुधाम्" ।)

आर्त्तवी, स्त्री, वाजिनी । घोटकी । इति राजनिर्घण्टः ॥

आर्त्तिः, स्त्री, (आङ् + ऋ + क्तिन् ।) पीड़ा । धनुष्कोटिः । इत्यमरटीकायां भरतः ॥ रोगः । इति

"आर्य्यावर्त्तः पुण्यभूमिर्मध्यं विन्ध्यहिमागयोः"।

आर्षिका, स्त्री, (आर्ष + स्वार्थे कन् + अत इत्वं ।) श्रेष्ठा स्त्री । इति वोपदेवः ॥

आर्षः, पुं, (ऋषेरिदं । ऋषि + अण् ।) विवाहविशेषः । यत्र वरात् गोद्वयं गृहीत्वा तेनैव सह कन्यादानं । यथा, याज्ञवल्क्यः,—

"यज्ञस्थायर्त्विजे दैव आर्ष आदाय गोद्वयं ।

चतुर्दश प्रथमजः पुनात्युत्तरजश्च षट्" ॥

(यथा मनुः, ३ । २९ ।

"एकं गोमिथुनं द्वे वा वरादादाय धर्म्मतः ।

कन्याप्रदानं विधिवदार्षो धर्म्मः स उच्यते" ।)

ऋषिप्रणीते त्रि । (यथा मनुः १२।१०६ ।

"आर्षं धर्म्मोपदेशञ्च वेदशास्त्राविरोधिना ।

यस्तर्केणानुसन्धत्ते स धर्म्मं वेद नेतरः" ॥

आर्षभिः, पुं, (ऋषभस्यापत्यम् । ऋषभ + इञ् ।) ऋषभपुत्त्रः । स तु भरतराजचक्रवर्त्ती । इति हेमचन्द्रः ॥

आर्षभी, स्त्री, (ऋषभस्य वृषस्य प्रिया । ऋषभ + अण् + ङीप् ।) कपिकच्छुवृक्षः । इति राजनिर्घण्टः ।

(मध्यममार्गे नक्षत्रविशेषाणां संज्ञाविशेषः । यथा, "तथा द्वे चापि फल्गुन्यौ मघा चैवार्षभी मता" । कपिकच्छुशब्देऽस्या गुणादयो ज्ञातव्याः ॥)

आर्षभ्यः, पुं, (ऋषभस्य प्रकृतिः । ऋषभ + ञ्य ।) षण्ढोपयुक्तवत्सः । तत्पर्य्यायः । षण्ढतायोग्यः २ । इत्यमरः ॥ षाँड़ेर उपयुक्त एँड़े इति भाषा ॥

आर्हतः, पुं, (अर्हन् जिन एव । अर्हत् + अण् ।) जिनविशेषः । तत्पर्य्यायः । वादवादी २ । इति हेमचन्द्रः ॥

आलं, क्ली, (आलयति भूषयतीति । आ + अल् + अच् ।) हरितालं । इत्यमरः ॥ अनर्थे त्रि । इति हेमचन्द्रः ॥ (यथा वैद्यकरसेन्द्रसारसंग्रहे ॥)

("हरितालं तालकमालमालं शैलूषभूषणम् ।

पिञ्जकं रोमहरणं तालकं पीतमित्यपि" ॥)

आलगर्द्दः, पुं, (अलगर्द्द एव । स्वार्थे अण् ।) अलगर्द्दः । जलसर्पः ।

आलम्बः, पुं, (आङ् + लबि + घञ् ।) अवलम्बः । आश्रयः ॥ (शरणं । गतिः । "इह हि पततां नास्त्यालम्बो न चापि निवर्त्तनम्" । इति शान्तिशतके ३ । २ ।) अधोलम्बनम् । यथा, रामायणे,—

"शोभते किङ्किणीजालैः शाखयः कनकप्रभाः" ॥)

आलम्बनं, क्ली, (आङ् + लम्ब + ल्युट् ।) अवलम्बनं । विभावविशेषः । यथा,—

"आलम्बनोद्दीपनाख्यौ तस्य भेदावुभौ स्मृतौ ।

आलम्बनं नायकादिस्तमालम्ब्य रसोद्गमात्" ॥

इति साहित्यदर्पणे ३य परिच्छेदः ।

आलम्भः, पुं, (आङ् + लभि + घञ् ।) मारणं । वधः । इत्यमरः ॥ (यथा स्मृतिः, "अश्वालम्भं गवालम्भं" । मेघदूते पूर्व्वमेघे । ४६ ।

"आलम्भोत्थाः सुरभितनयालम्भजां मानयिष्यन्" । छेदनम् । कर्त्तनम् । मनुः ११ । १४४ ।

"कृष्टजानामोषधीनां जातानां च स्वयं वने ।

वृथालम्भेऽनुगच्छेत् गां दिनमेकं पयोव्रतः" ॥

स्पर्शः । आलिङ्गनम् । यथा मनुः २ । १७९ ।

"द्यूतञ्च जनवादञ्च परिवादं तथाऽनृतं ।

स्त्रीणाञ्च प्रेक्षणालम्भमुपघातं परस्य च" ॥)

आलम्भा, स्त्री, (आङ् + लभि + ण्वुल् ।) वर्षाह्वी । कर्णिका । इति वोपदेवः ॥

आलयः, पुं, (आलीयतेऽस्मिन् । आ + ली + आधारे अच् ।) गृहं । इत्यमरः ॥ (यथा कुमारे १ । १ ।) "हिमालयो नाम नगाधिराजः" नैषधे, "तथामरालयमरालमरालकेशी" । रामायणे ३ काण्डे । "न हि दुष्टात्मनामार्य्या निवसन्त्यालये चिरं" । लयपर्य्यन्ते, क्ली । भागवते १ अध्याये ५ । "पिबत भागवतं रसमालयम्" ) ॥

आलवालं, क्ली, (आ समन्तात् जलस्य लवमालाति आ + लव + आ + ला + क ।) तरुमूलसेचनार्थजलाधारः । आरमादा इति भाषा । तत्पर्य्यायः । आवालं २ आवापः ३ । इत्यमरः ॥ ( रघुवंशे १ । ५१ ।

"विश्वासाय विहङ्गानामालवालाम्बुपायिनाम्" । माघे । "विपुलालवालभृतवारिदर्पणाः" ।)

आलसः, त्रि, (अलस + स्वार्थे अण् ।) अलसः । आलस्ययुक्तः । इति त्रिकाण्डशेषः ॥

आलस्यं, क्ली, (अलस + ष्यञ् ।) अलसस्य भावः । अलसता । तत्पर्य्यायः । तन्द्रा २ कौसीद्यं ३ । इति हेमचन्द्रः ॥ मन्दता ४ मान्द्यं ५ कार्य्यद्वेषः ६ । इति राजनिर्घण्टः ॥ (यदुक्तं । "आलस्यं श्रमगर्भाद्यैर्जाड्यं जृम्भासितादिकृत्" इत्युक्तलक्षणो व्यभिचारिभावभेदः । सुश्रुते ।

"सुखस्पर्शप्रसङ्गित्वं दुःखद्वेषणलोलता ।

शक्तस्य चाप्यनुत्साहः कर्म्मस्वालस्यमुच्यते" ॥)

आलस्यः, त्रि, (अलस एव । अलस + स्वार्थे ष्यञ् ।) अलसयुक्तः । तत्पर्य्यायः । मन्दः २ तुन्दपरिमृजः ३ शीतकः ४ अलसः ५ अनुष्णः ६ । इत्यमरः ॥

आलातं, क्ली, (अलातमेव । अलात + स्वार्थे अण् ।) अलातं । अङ्गारः ॥

आलानं, क्ली, ( आलीयतेऽत्र । आङ् + ली + ल्युट् । विभाषा लीयतेरित्यात्वम् ।) गजबन्धनस्तम्भः । इत्यमरः ॥ गजबन्धनरज्जुः । इति गौडपादः ॥ (रघुवंशे १ । ७१ ।

"अरुन्तुदमिवालानमनिर्वाणस्य दन्तिनः" । कादम्बरी । "दृढमदमलिनमालानस्तम्भयुगलमुपहसन्तमिवोरुद्वयेन" ।

रघुवंशे ४ । ६९, ४ । ८१ ।

"गजालानपरिक्लिष्टैरक्षोटैः सार्द्धमानताः" ।

"तद्गजालानतां प्राप्तैः सह कालागुरुद्रुमैः" ॥)

बन्धनं । इति रायमुकुटः ॥ रज्जुः । इति मेदिनी ॥

आलापः, पुं, (आङ् + लप् + घञ् ।) कथोपकथनं । सम्भाषणं । तत्पर्य्यायः । आभाषणं २ । इत्यमरः ॥ (साहित्यदर्पणे, प्रथमपरिच्छेदः ।

"कालालापाश्च ये केचित् गीतकाव्याखिलानि च" ।)

आलाप्यः, त्रि, ( आङ् + लप् + कर्म्मणि ण्यत् ।) आलापयोग्यः । आलापनीयः ॥

आलावर्त्तं, क्ली, (आलमत्यर्थमावर्त्तते इति आल + आ + वृत् + अच् ।) वस्त्रनिर्म्मितव्यजनं । इति हेमचन्द्रः ॥ कापड़ेर पाखा इति भाषा ।

आलाबुः, स्त्री, अलाबुः । इति शब्दरत्नावली ॥ लाउ इति भाषा । (अलाबुशब्देऽस्या विशेषो ज्ञेयः ॥

आलाबूः, स्त्री, अलाबुः । इति शब्दरत्नावली ॥

आलास्यः, पुं, (आलं पर्य्याप्तं आस्यं मुखं यस्य सः ।) कुम्भीरः । इति हेमचन्द्रः ॥

आलिः, स्त्री, (आलयति भूषयति । आ + अल भूषणे । अच इः ।) वयस्या । (यथा कुमारसम्भवे । ५।५३ ।

("निवार्य्यतामालि किमप्ययं वटुः,

पुनर्विवक्षुः स्फुरितोत्तराधरः" ।)

(आलाति निवारयति जलं । अल वारणे । सर्व्वधातुभ्य इन् ।) सेतुः । (अल्यतेऽनया । अल् + इण् ।) पंक्तिः । इति मेदिनी अमरश्च ॥ सन्ततिः । इति शब्दरत्नावली ॥

आलिः, पुं, (आलति दंशने समर्थो भवति । आ + अल् + बाहुलकात् इण् ।) वृश्चिकः । भ्रमरः । इति हारावली अमरटीका च ॥

आलिः, त्रि, ( आङ् + अल् + इण् । ) विशदाशयः । निर्म्मलान्तःकरणः । इति मेदिनी ॥ अनर्थः । इति हेमचन्द्रः ॥

आलिङ्गनं, क्ली, (आङ् + लिङ्ग + ल्युट् ।) प्रीतिपूर्व्वकपरस्पराश्लेषः । कोलाकोली इति भाषा । तत्पर्य्यायः । अङ्कपालिः २ क्रिया ३ । इति त्रिकाण्डशेषः ॥ परिरम्भः ४ परीरम्भः ५ परिष्वङ्गः ६ संश्लेषः ७ उपगूहनं ८ । इत्यमरः ॥ तस्य भेदा यथा । आमोदालिङ्गनं १ मुदितालिङ्गनं २ प्रेमालिङ्गनं ३ आनन्दालिङ्गनं ४ रत्यालिङ्गनं ५ मदनालिङ्गनं ६ विनोदालिङ्गनं ७ । इति कामशास्त्रम् ॥ ("आलिङ्गनान्यधिकृताः स्फुटमापुरेव" । इति माघः ॥ यथा मेघदूते उत्तरमेघे ९ ।

"यत्र स्त्रीणां प्रियतमभुजालिङ्गनोच्छ्वासितानां" ।)

आलिङ्गी, [न्] पुं, (आ + लिङ्ग + इनि ।) आलिङ्ग्यः । मृदङ्गविशेषः । इत्यमरटीकायां स्वामी शब्दरत्नावली च ॥

आलिङ्ग्यः, पुं, (आ + लिङ्ग + ण्यत् ।) यवाकृतिमृदङ्गः । इत्यमरः ॥ मादोल इति भाषा । यथा शब्दार्णवे ॥

"चतुरङ्गुलहीनोऽस्यान्मुखे चैकाङ्गुलेन यः ।

यवाकृतिः स आलिङ्ग्य आलिङ्ग्य स हि वाद्यते" ॥

आलिञ्जरः, पुं, ( अलिञ्जर + अण् ।) अलिञ्जरः । इति त्रिकाण्डशेषः ॥ जाला इति भाषा ।

आलिन्दः, पुं, ( अलिन्द + अण् ।) अलिन्दः । वहिर्द्वारप्रकोष्ठः । गृहान्तरशय्यार्थवेदिका । इति रायमुकुटः शब्दरत्नावली च ॥ गृहैकदेशः । इत्यमरमाला ॥

आलिन्दकः, पुं, (आलिन्द एव स्वार्थे कः ।) आलिन्दः । इति शब्दरत्नावली ॥

आलिम्पनं, क्ली, (आङ् + लिम्प + ल्युट् ।) मङ्गलालेपनं । आलिपना इति भाषा । तत्पर्य्यायः । आतर्पणं २ आदीपनं ३ मण्डोदकं ४ । इति त्रिकाण्डशेषः ॥

आवर्त्तनी, स्त्री, ( आङ्+वृत्+ल्युट्+ङीप् । ) धातुद्रव्यद्रावणार्थद्रव्यपात्रं । मुची इति भाषा । तत्पर्य्यायः । तैजसावर्त्तनी २ मूषा ३ मूषः ४ । इति शब्दरत्नावली ॥

आवर्त्तमणिः, पुं, (आवर्त्ताकारो मणिः ।) राजावर्त्तनामोपरत्नं । इति राजनिर्घण्टः ॥

आवर्त्तिनी, स्त्री, ( आवर्त्त+इनि+ङीप् । ) अजशृङ्गीवृक्षः । इति रत्नमाला ॥

आवर्हितः, त्रि, (आङ्+वृह्+क्तः ।) उन्मूलितः । उत्पाटितः । इति हेमचन्द्रः ।

आवलिः, स्त्री, (आङ्+वल+इन् ।) श्रेणी । पंक्तिः । इत्यमरः ॥

आवली, स्त्री, ( आङ्+वल्+इन्+ङीप् । ) आवलिः । इत्यमरः ॥ (यथा अमरुशतके ३ ॥ "आलोलामलकावलीं विलुलितां बिभ्रच्चलत्कुण्डलं" । "द्विजावलीव्याजनिशाकरांशुभिः" । इति माघे १ । २५ ।)

आवल्यं, क्ली, (अवल+ष्यञ् ।) अवलस्य भावः दौर्बल्यं ॥

आवश्यकं, त्रि, (अवश्य+मनोज्ञादित्वाद्वुञ् । अवश्यानां भमाच इति टिलोपः ।) अवश्यकर्त्तव्यं । नैश्चयिकं । उचितं । यथा । "अयोरावश्यके । उवर्णान्तादावश्यकेऽर्थे घ्यण् स्यात्" । इति मुग्धबोधव्याकरणं ॥ किञ्च । आवश्यकपर्व्वादिक्रियमाणस्य नित्यनैमित्तिकत्वं । इति तिथ्यादितत्त्वं ॥ (यथा साहित्यदर्पणे, । "आवश्यकानां कार्य्याणां अविरोधादिनिर्म्मितः" ।)

आवसथं, क्ली, (आवसन्ति आगत्य वसन्ति अस्मिन् । आङ्+वस+अथच् ।) गृहं । इति हेमचन्द्रः ॥ (वसतिस्थानं । विश्रामस्थानं । अभिगृहं । अग्निहोत्रस्थानं ।
रघुवंशे, ८ । १४ "निवसन्नावसथे पुराद्बहिः" । मनुः । ३ । १०७ ।
"आसनावसथौ शय्यामनुव्रज्यामुपासनाम्" ।)

आवसथः, पुं, (आवसन्त्यत्र । आ+वस+अधिकरणे अथच् ।) गृहं । (यथा, हितोपदेशे मित्रलाभे "अस्ति चम्पकाभिधानायां नगर्य्यां परिव्राजकावसथः" ।) आर्य्याकोषः । आर्य्याच्छन्दसो ग्रन्थभेदः । व्रतविशेषः । इत्युणादिकोषः ॥

आवसितं, त्रि, (आवस्यते आच्छाद्यते आङ्+वस् आच्छादने+क्तः । ) परिपक्वमर्द्दितधान्यं । इति भरतः ॥ बङ्कसितधान्यं । इति सुभूतिः ॥ सम्पन्नधान्यं । इत्यन्ये ॥ तत्पर्य्यायः ऋद्धं २ । इत्यमरः ॥

आवहः, पुं, (आभिमुख्येन वहतीति । आङ्+वह्+अच् ।) सप्तवायुस्कन्धान्तर्गतवायुविशेषः । स च भूवायुः । इति पुराणज्योतिषे ॥
(यथा, मनुः, ८ । ३४७ ।
"द्वौ शुक्लज्योतिरादित्यौ मन्दो हरित्पाक्षधा । चित्रज्योतिः सत्यज्योतिर्ज्योतिष्मान् यस्य चावहः" ॥ इति प्रापकः । जनकः । यथा मनुः,—
"समुत्पन्नैस्तारहिलकान् सर्व्वभूतभयावहान्" । रघुवंशे । १४ । ५, "शोकावहा भर्त्तुरनुप्रवासं" ।)

आवहमानं, त्रि, (आङ्+वह्+शानच् ।) क्रमागतं ॥ (परम्परागतं, धारावाहि ।)

आवाधा, स्त्री, (आ सम्यक् बाधा ।) दुःखं । पीडा । इति शब्दरत्नावली । भूखण्डं । त्रिकोणक्षेत्रमध्यरज्जुनिक्षेपेण यत् खण्डद्वयं जायते तत् । इति लीलावती ॥

आवापः, पुं, (आ वपन्ति सलिलमत्र । आङ्+वप्+घञ् ।) आलवालं । इत्यमरः ॥ वलयः । (यथा महाभारते १४ पर्व्वणि ।
"मोहात् पपात गाण्डीवमावापं च करादपि" ।) शत्रुचिन्तनं । (परराष्ट्रचिन्तनम् । यथा, माघे । २ । ८८ ।
"तन्त्रावापविदा योगैर्मण्डलान्यधितिष्ठता" ।) पानभेदः । इति हेमचन्द्रः ॥ भाण्डवपनं । परिक्षेपः । इति मेदिनी ॥ निम्नोन्नतभूमिः । इत्यजयः ॥ पात्रं । इति शब्दरत्नावली ॥ प्रधानहोमः । इति स्मृतिः ॥

आवापकः, पुं, ( आ उप्यते इति । आङ्+वप्+कर्म्मणि घञ्+संज्ञायां कन् वा ।) वलयः । इत्यमरः ॥

आवापनं, क्ली, (आवाप्यतेऽनेनेति आङ्+वप्+णिच्+करणे ल्युट् ।) सूत्रयन्त्रं । इति शब्दमाला ॥ तांत् इति भाषा ।

आवारि, स्त्री, (आङ्+वृ+इ ।) हट्टश्रेणी । इत्युणादिकोषः ॥ दोकान हाट्चालि इत्यादि भाषा ।

आवालं, क्ली, ( आङ्+वल्+घञ् ।) आलवालं । इत्यमरः ॥ (बालकमभिव्याप्य इत्यर्थे ।) बालकपर्य्यन्तम् ॥

आवाल्यं, क्ली, ( बाल्यात् आ आवाल्यं पर्य्यन्तार्थेऽव्ययीभावः ।) बाल्यावस्थापर्य्यन्तं ॥ (यथा धर्म्मविवेके,—"आवाल्यात्सती सती सुरपुरीं कुन्ती समारोहयत्" ।)

आवासः, पुं, (आ वसन्ति अत्र इति । आङ्+वस्+अधिकरणे घञ् ।) गृहं इति हेमचन्द्रः ॥ (यथा गीतगोविन्दे । ४ । १० ।
"आवासो विपिनायते प्रियसखीमालापि जालायते" ।)

आवाहनं, क्ली, (आङ्+वह्+णिच्+ल्युट् ।) आह्वानं । निमन्त्रणं । यथा,—
"प्रतिमास्थानेष्वप्सु नावाहनविसर्ज्जने" ।
इति । विनायकादीनां व्याहृतिभिरावाहनमाह मत्स्यपुराणं ।
"विनायकं तथा दुर्गां वायुमाकाशमेव च । आवाहयेद्व्याहृतिभिस्तथैवाश्विकुमारकौ" ॥
इति च तिथ्यादितत्त्वं ॥ आवाहनीमुद्रा मुद्राशब्दे द्रष्टव्या ॥

आवाहनी, स्त्री, (आवाह्यतेऽनया । आङ्+वह्+णिच्+करणे ल्युट् ङीप् ।) मुद्राविशेषः । यथा,
"हस्ताभ्यामञ्जलिं बद्ध्वानामिकामूलपर्व्वणोः । अङ्गुष्ठौ निःक्षिपेत् सेयं मुद्रा त्वावाहनी स्मृता" ॥ इति तन्त्रशास्त्रं ॥

आविः, [स्] अ, (अवते । उङ्शब्दे+इस् ।) प्राकाश्यम् । प्रकटत्वं । तत्पर्य्यायः । प्रादुः २ । इत्यमरः ॥

आविकः, पुं, (अविना मेषलोम्ना कृतम् इति अवि+ठक् ।) कम्बलं । इति हलायुधः ॥ (त्रि, मेषलोम्ना निर्म्मितं, । २ । ४१
"वसोरश्चानुपूर्व्वेण शाणक्षौमाविकानि च" । मेषीदुग्धं । यथा वैद्यके,—
"आविकं लवणं स्वादु स्निग्धोष्णं चाश्मरीप्रसुत् । अहृद्यं तर्पणं केश्यं शुक्रपित्तकफप्रदम् ॥ गुरु कासेऽनिलोद्भूते केवले वातिके वरम्" । इति ।)

आविग्नः, पुं, (आङ्+विज्+क्तः ।) अविग्नः । करमर्द्दकः । इति शब्दरत्नावली ॥ पानि आमला इति ख्यातः । इत्यमरटीकासारसुन्दरी ॥ (उद्विग्नः उत्कण्ठितः ।)

आविर्भावः, पुं, ( आविस्+भू+घञ् ।) प्रकाशः । देवावतरणं । प्रादुर्भावः । यथा,—
"तदा मे मनसा ध्यातो दयासिन्धुर्जनार्द्दनः । भक्तानामनुकम्पार्थं यश्चाविर्भावमिच्छति" ॥
इति जैमिनिभारते आश्वमेधिके पर्व्वणि २ अध्यायः ॥

आविर्भूतः, त्रि, (आविस्+भू+क्त ।) प्रकाशितः । अभिव्यक्तः । जन्मयुक्तः । अवतीर्णः । प्रादुर्भूतः । आविर्भावविशिष्टः । यथा,—
"उच्चस्थे ग्रहपञ्चके सुरगुरौ सेन्दौ नवम्यां तिथौ । लग्ने कर्कटके पुनर्व्वसुदिने मेषं गते पूषणि । निर्द्दग्धुं निखिलाः पलाशसमिधो मेध्यादयोध्यारणेराविर्भूतमभूदपूर्व्वविभवं यत्किञ्चिदेकं महः" ॥
"तथाष्टम्यां भद्रकाली दक्षयज्ञविनाशिनी । आविर्भूता महाघोरा योगिनीकोटिभिः सह" ॥
इति च तिथ्यादितत्त्वम् ॥

आविष्कारः, पुं, (आविस्+कृ+घञ् ।) प्रकाशः ॥ (यथा साहित्यदर्पणे, २ परिच्छेदे ।
"आविष्कारातिशयवाभिधेयवत् स्फुटं प्रतीयते" ।)

आविष्कृतः, त्रि, ( आविस्+कृ+क्तः । ) प्रकाशितः । तत्पर्य्यायः । प्रकटितः २ । इति हेमचन्द्रः । (यथा उत्तरचरिते, षष्ठाङ्के । "आविष्कृतं कथाप्रावीण्यं वत्सेन" ।)

आविष्टः, त्रि, ( आ+विश+क्तः ।) प्रेतवाहितः । भूतादिग्रस्तः । इति त्रिकाण्डशेषः ॥ आवेशयुक्तः । निविष्टः ॥ (उपद्रुतः । यथा कामन्दकः,
"आविष्टइव दुःखेन तद्गतेन गरीयसा" ।)

आवीरचूर्णं, क्ली, ( आवीरमेव चूर्णम् । ) फल्गु । फागु इति वङ्गभाषा । आवीर इति हिन्दीभाषा । यथा,—
"चन्दनागुरुकस्तूरीकुङ्कुमद्रवसंयुतं । आवीरचूर्णं रुचिरं गृह्यतां परमेश्वर" ॥
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ८ अध्यायः ॥

आवुकः, पुं, (अवति रक्षतीति । अव+बाहुलकादुक्+कन् ।) नाट्योक्तौ पिता । इत्यमरः ॥

आवृत्, स्त्री, ( आङ्+वृत्+क्विप् ।) अनुक्रमः । परिपाटी । इत्यमरः ॥ ( प्रकारः । जातकर्म्मादिक्रियाकलापः । यथा मनुः, २ । २४८ । २ । ६६ ।
"अमन्त्रिकाबाद्वता कार्य्या पिण्डनिर्वपणं सुतैः" ।

"अमन्निता तु कार्य्येयं स्त्रीयामात्यदर्शनतः" ।)

आवृतः, त्रि, (आङ् + वृ + क्तः ।) कृतावरणः । तत्पर्य्यायः । वेष्टितम् २ वलयितम् ३ संवीतम् ४ रुद्धम् ५ । इत्यमरः ॥ (आच्छादितं, प्रावृतं, आकीर्णं । वर्णभेदः, स च ब्राह्मणाद् उग्रकन्यायां जातः ।)

आवृत्तः, त्रि, (आङ् + वृत् + क्तः ।) कृतावरणः । आवृतः । इत्यमरटीका ॥ (अभ्यस्तः, क्रमवैपरीत्येन स्थापितः, प्रतिनिवृत्तः, पलायितः, उद्वर्त्तितः, परिवर्त्तितः । यथा उत्तरचरिते,

"स कुसुम एव मन्मथोऽन्यत्कमावृत्तः" ।)

आवेगः, पुं, (आङ् + विज् + घञ् ।) त्वरा । इति हेमचन्द्रः ॥ (यथा दशरूपके,—

"आवेगः सम्भ्रमोऽस्मिन्नभिसरजनिते शस्त्रनागादियोगो वातात् पांशूपदिग्धत्वरितपदगतिर्वर्षजे पिण्डिताङ्गः" । यथा अमरुशतके ८, ३ ।

"आवेगादवधीरिता प्रियतमस्तूष्णीं स्थितस्तत्क्षणात्" ।)

आवेगी, स्त्री, (आङ् + विज् + घञ् + ङीप् ।) वृद्धदारकवृक्षः । इत्यमरः राजनिर्घण्टश्च ।

(अस्या गुणादयो वृद्धदारकशब्दे ज्ञातव्याः ॥ )

आवेदनं, क्ली, (आङ् + विद् + ल्युट् ।) निवेदनं । (विज्ञापनम् ।)

आवेशः, पुं, (आङ् + विश् + घञ् ।) अहङ्कारविशेषः । तत्पर्य्यायः । संरम्भः २ आटोपः ३ । अपस्माररोगः । इति हेमचन्द्रः ॥ भूतादिना रोगः । तत्पर्य्यायः । भूतसञ्चारः २ भूतक्रान्तिः ३ ग्रहावेशः ४ । इति राजनिर्घण्टः ॥ आसक्तिः । अभिनिवेशः ॥ (यथा रघुवंशे, ५।१९ ।

"तस्मै सपर्य्यानुविधामवलितात्" ।)

आवेशनं, क्ली, (आविश्यतेऽस्मिन् । आङ् + विश् + ल्युट् ।) शिल्पशाला । इत्यमरः ॥ (मनुः, ९।२६५ ।

"शौण्डिकापानान्यरण्यानि काचकावेशनानि च" ।

(भावे ल्युट् ।) भूतावेशः । (यथा, साहित्यदर्पणे ३ परिच्छेदे ।

"मनःक्षेपस्त्वपस्मारो ग्रहाद्यावेशनादिजः" ।)

प्रवेशः । इति मेदिनी ॥ कोपः । इति भरतः ॥ परिवेशः । इति हेमचन्द्रः ॥

आवेशिकः, त्रि, (आवेशं संरम्भं प्राप्तः । आवेश + ठञ् ।) आगन्तुः । अतिथिः । इत्यमरः ॥ स्वीयं । असाधारणं । तत्पर्य्यायः । अन्यासाधारणं २ प्रातिस्विकं ३ । इति त्रिकाण्डशेषः ॥

आवेष्टकः, पुं, (आङ् + वेष्ट + ण्वुल् ।) प्राचीरादिः । इति हलायुधः ॥ गाँथिया वेड़ा इत्यादि भाषा ॥

आवोधनं, क्ली, (आङ् + बुध् + ल्युट् ।) ज्ञानम् । बुद्धिः ॥

आशंसा, स्त्री, (आङ् + शन्स + अङ् + टाप् ।) इच्छा । आकाङ्क्षा । इति हेमचन्द्रः ॥

(रघुवंशे, १२।४४ ।

"निदध्रे विजयाशंसां चापे सीताञ्च लक्ष्मणे" ।)

आशंसिता, [ऋ] त्रि, (आङ् + शन्स + तृच् ।) आशंसाकर्त्ता ॥ आकाङ्क्षाशीलः । इत्यमरः ॥

आशंसुः, त्रि, (आङ् + शन्स + उ ।) आशंसिता । इच्छुः ॥ इत्यमरः ॥

आशक्तः, त्रि, (आङ् + शक् + क्तः ।) अव्यक्तशक्तिविशिष्टः ॥

आशङ्का, स्त्री, (आङ् + शकि + अ + टाप् ।) भयं । त्रासः । इति हेमचन्द्रः ॥ (संशयः, वितर्कः ।) शाकुन्तले, प्रथमाङ्के ।

"सत्याशङ्का चरितमियवो मन्मथं भजन्ति" ।

कथासरित्सागरे, १४ तरङ्गे ।

"तद् मत्वा विमलाशङ्कामाकारयद्भूमिलाम्" ।)

आशनः, पुं, (अशन + स्वार्थे अण् ।) अश्मन्तकः । इति भरतः द्विरूपकोषश्च ॥

आशयः, पुं, (आङ् + शीङ् + अच् ।) अभिप्रायः । पनसवृक्षः । आधारः । इति विश्वमेदिन्यौ ॥ विभवः । किम्पचानः । चेतः । अजीर्णं । कोष्ठागारं । इत्यजयपालः । धर्म्माधर्म्मौ । अदृष्टं । इति कुसुमाञ्जलिः ॥ (अभिप्रायार्थे यथा, कथासरित्सागरे, १२ तरङ्गे ।

"तत्रालोक्याशयं बुद्धा तस्य सोऽपि वसन्तकः" ।

चित्तार्थे यथा, भगवद्गीतायां, १०।२० ।

"अहमात्मा गुडाकेश सर्व्वभूताशये स्थितः" ।

"आशयाः सप्त" । "आशयास्तु वाताशयः पित्ताशयः श्लेष्माशयो रक्ताशय आमाशयः पक्वाशयो मूत्राशयः स्त्रीणां गर्भाशयोऽष्टम" इति । सुश्रुत ॥)

आशयाशः, पुं, (आशेरतेऽस्मिन्नित्याशयः । एरच् । आधारः । तमश्नाति । कर्म्मण्यण् ।) आश्रयाशः । अग्निः । इत्यमरटीकायां स्वामी ॥

आशरः, पुं, (आ समन्तात् शृ हिंसायां + पचाद्यच् ।) अग्निः । राक्षसः । इति मेदिनी ॥

आशा, स्त्री, (आ समन्तात् अश्नुते व्याप्नोतीति । आङ् + अश् + पचाद्यच् + टाप् ।) दीर्घाकाङ्क्षा । आयता तृष्णा । (यथा, शान्तिशतके, ४।२६ ।

"आशा नाम नदी मनोरथजला तृष्णातरङ्गाकुला" ।

दिक् । इत्यमरः ।

वासवाशामुखे भाति इन्दुश्चन्दनबिन्दुवत्" ॥

इति साहित्यदर्पणे १० परिच्छेदे । स्वनामख्याता दक्षप्रजापतिकन्या । यथा, हरिवंशे,—

"श्रीर्ह्रीर्धृतिस्तथा कीर्त्तिराशा मेधा च सुव्रता" ।)

आषाढः, पुं, आषाढमासः । व्रतिनां पलाशदण्डः । इत्यमरटीका द्विरूपकोषश्च ॥

आषाढा, स्त्री, पूर्व्वाषाढानक्षत्रं । उत्तराषाढा च ॥

आषापुरसम्भवः, पुं, (आषापुरात् सम्भवो यस्य ।) भूमिजगुग्गुलुः । इति राजनिर्घण्टः ॥

आशाबन्धः, पुं, (आशाया बन्धः । षष्ठीतत् ।) समाश्वासः । (मेघदूते,—

"आशाबन्धः कुसुमसदृशं प्रायशो ह्यङ्गनानां ।

सद्यः पाति प्रणयि हृदयं विप्रयोगे रुणद्धि" ॥)

प्रत्याशा । मर्कटजालकं । माकड़सार जाल इति भाषा । इति मेदिनी ॥

आशितं, त्रि, (आङ् + अश् + क्तः ।) अशितं । भुक्तं इति जटाधरः ॥

आशितङ्गवीनं, त्रि, (आशिता भोजिता गावो यत्र अयमङ्गवीनमिति खः । निपातनात् पूर्व्वस्य मुम् ।) आशिताङ्गवीनं । गावो यत्राशिताः पुरा । इत्यमरः ॥ (यथा भट्टिकाव्ये ४र्थे सर्गे ।

"हित्वाशीतङ्गवीनानि फलैर्यत्राशितम्भवम्" ।)

पूर्व्वे ये स्थाने गरु चरियाछे इति भाषा ।

आशितम्भवं, क्ली, (आशित + भू + खच् + मुमागमः ।) अन्नादि । तृप्तौ पुं । इति मेदिनी ॥ (यावता अन्नेन अतिथ्यादिः भोजितः तृप्तो भवति तावत् अन्नादिकम् । यथा, भट्टिकाव्ये ४र्थे सर्गे,—

"हित्वाशिताङ्गवीनानि फलैर्यत्राशितम्भवम्" ।)

आशिता, [ऋ] त्रि, (आ अश्नातीति । आ + अश् + तृच् ।) बहुभोजनशीलः । अतिशयभोक्ता । इति हेमचन्द्रः ॥

आशिरः, पुं, (आ + अश + किरच् ।) राक्षसः । अग्निः । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥ (सूर्य्यः ।)

आशीः, [स्] स्त्री, (आङ् + शास् + क्विप् + उपधाया इत्वम्) आशीर्व्वादः । सर्पदन्तः । इत्यमरः ॥ वृद्धिनामौषधिः । इति राजनिर्घण्टः ॥ (हितप्रार्थनं, अभीष्टवृद्धिप्रार्थनं । यदुक्तं,—

"वात्सल्यात् यत्र मान्येन कनिष्ठस्याभिधीयते ।

इष्टावधारकं वाक्यमाशीः सा परिकीर्त्तिता" ॥

यथा, कुमारे ७।४७ ।

"तस्मै जयाशीः ससृजे पुरस्तात्" ।)

आशी, स्त्री, (आङ् + अश् + अच् + ङीप् ।) हितार्शसनं । अहिदन्तः । सर्पविषं । इति शब्दरत्नावली ॥ [इति विश्वविद्या ॥

"आशी तालुगता दंष्ट्रा तया दष्टो न जीवति" ।

आशीर्व्वादः, पुं, (आशिषो वादः षष्ठीतत् ।) आशीर्वचनं । मङ्गलप्रार्थना ॥ (यथा, मनुः । २।३३ ।

"मङ्गल्यं दीर्घवर्णान्तमाशीर्व्वादाभिधानवत्" ।)

आशीविषः, पुं, (आशिषि दंष्ट्रायां विषमस्य सः पृषोदरादित्वात् साधुः ।) सर्पः । इत्यमरः ॥

रघुवंशे,—४।५७ ।

"गरुत्मदाशीविषभीमदर्शनैः" ।

आशुः, पुं, स्त्री, (अश् + उण् ।) प्रावृट्कालसमुद्भवधान्यं । आउश इति भाषा । तत्पर्य्यायः । व्रीहिः २ पाटलः ३ । अस्य गुणाः । मधुरत्वम् । पाके अम्लत्वम् । पित्तकारित्वम् । गुरुत्वञ्च । इति राजवल्लभः ॥

आशु, क्ली, (अश्नुते इति । अशूङ् व्याप्तौ उण् ।) शीघ्रम् । द्रुतम् । (यथा शाकुन्तले १ अङ्के ।

("तदाशु कृतसन्धानं प्रतिसंहर सायकम्" ।)

तद्वागामि चेत् त्रि । इत्यमरः ॥

आशुगः, पुं, (आशु शीघ्रं गच्छतीति । आशु + गम् + ड ।) वायुः । बाणः । (रघुवंशे, १२।९१ ।

"रावणस्यापि रामास्तो भित्त्वा हृदयमाशुगः" ।)

शीघ्रगामिनि, त्रि । इत्यमरः ॥ मनुः ४।६८ ।

("विनीतैस्तु व्रजेन्नित्यमाशुगैर्लक्षणान्वितैः" ।)

आशुपत्री, स्त्री, शल्लकीलता । इति रत्नमाला ॥

आशुव्रीहिः, पुं, (आशुः व्रीहिः ।) आशुधान्यं । इत्यमरटीकायां भरतमुकुटौ ॥

आशुशुक्षणिः, पुं, ( आ समन्तात् शोक्तुमिच्छति । आङ् + शुच् + सन् + अनि ।) अग्निः । इत्यमरः ॥ (यथा कादम्बर्य्याम्,—“भस्मधूलानि सर्व्वाणि प्रतिग्रहाति एतस्मैवा आशुशुक्षणिः” ।) वायुः । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥

आश्मकुट्टी, [न्] पुं, पर्व्वतः । इति शब्दमाला ॥

आश्चर्य्यं, क्ली, (आङ् + चर् + ण्यत् + सुट् निपातनात् ।) अपूर्व्वं । तत्पर्य्यायः । विस्मयः २ अद्भुतं ३ चित्रं ४ । इत्यमरः ॥ (यथा, रघौ १६।८७ ।
“गन्धोदग्रं तदनु ववृषुः पुष्पमाश्चर्य्यमेघाः” ।)

आश्मनः, पुं, ( अश्मन् + अण् । ) अरुणः । सूर्य्यसारथिः । इति त्रिकाण्डशेषः । (अश्मनि प्रस्तरे भवमित्यर्थे अश्मन् + अण् । शिलाभववस्तुनि त्रि । यथा भट्टौ ४ । २६ ।
“अध्यायमाश्मनप्रख्यं येषु यत्तेऽन्यदुर्लभम्” ।)

आश्रमः, पुं,क्ली, (आङ् + श्रम + घञ् ।) शास्त्रोक्तधर्म्मविशेषः । आश्राम्यन्ति स्वं स्वं तपश्चरन्त्यत्र । स चतुर्विधः । ब्रह्मचर्य्यं १ गार्हस्थ्यं २ वानप्रस्थं ३ सन्न्यासः ४ । इति स्मृतिः ॥ ब्रह्मचारी । गृही । वानप्रस्थः । भिक्षुः । इत्यमरः ॥ मुनीनां वासस्थानं । वनं । मठः । इति मेदिनी ॥ ( कलियुगे तु ब्रह्मचर्य्यवानप्रस्थौ न स्तः केवलं गृहस्थभिक्षुकाश्रमावेव, यदुक्तं । महानिर्व्वाणतन्त्रे ।
“गार्हस्थ्यो भैक्षुकश्चैव आश्रमौ द्वौ कलौ युगे” ।
रघुवंशे, १।४८ ।
“स दुष्प्रापयशाः प्रापदाश्रमं श्रान्तवाहनः” ।)

आश्रमिकः, त्रि, ( आश्रम + ठक् ।) आश्रमयुक्तः । इति शब्दरत्नावली ॥

आश्रयः, पुं, ( आङ् + श्रि + अच् ।) राज्ञां सन्ध्यादिषड्गुणान्तर्गतगुणविशेषः । इत्यमरः ॥ अपदेशः । (यथा, मनु २।११ ।
“योऽवमन्येत ते मूले हेतुशास्त्राश्रयाद्द्विजः” ।
सामीप्यं । आधारः । इति जटाधरः ॥ (यथा, शान्तिशतके ४।६ । “वासो वल्कलमाश्रयो गिरिगुहा शय्या लतावल्लरी” ।)
गृहं । इति हेमचन्द्रः ॥ संश्रयः । अवलम्बनं । (यथा, मनुः ७।७२ ।
“श्रीस्त्वाश्रितास्त्वेता मृगगर्त्ताश्रयाप्सराः” ।)
राज्ञां तन्निर्णयो यथा,—
“अरिरुभौ यदि बलवान्न भवेत् संश्रयणं तथा ।
भवति श्रेयसे राज्ञां विपरीतं न कर्हिचित् ॥
उच्छिद्यमानो बलिना आश्रयेत् बलवत्तरं ।
विनीतवत्तस्य वाक्यं नयेदिति मतिर्भुवा ॥
दद्यात् बलं वा कोषं वा भूमिं वा भूतिकाम्यया ।
आश्रयेदभियोक्तारं समाश्रयगुणान्वितं ॥
वीतव्यसनमत्यन्तं महोत्साहं महामतिं ।
प्रविशन्ति महाराजमपांपतिमिवापगाः ॥
अव्यवसायिनमलसं दैवपरं साहसाच्च परिहीनं ।
प्रमदेव वृद्धपतिं नेच्छत्युपगूहितुं कमला ॥
उत्साहात् श्रियमाप्नोति उत्साहाच्च महद्यशः ।
तस्मात् सर्व्वप्रयत्नेनाप्युत्साहं नित्यमाचरेत् ॥
धर्म्मश्चैव शौर्य्यञ्च शीघ्रकारित्वमेव च ।
सत्यमेव प्रवीणत्वमित्युक्ताश्चगुणा मताः ॥
व्यसनस्यागमश्चाद्यमनुत्साहो महीपतेः ।
सामदानदण्डभेदा इत्युपायचतुष्टयं ।
सामचिह्नं प्रशंसन्ति सर्व्वतश्च विपश्चितः ॥
अवनिवाञ्छनं वाचा सामोपायं समाचरेत् ।
तुल्यं शौर्य्यं प्रदानेन सत्कृत्य वशमानयेत् ।
भेदं कुर्व्वीत यत्नेन महामात्यपुरोधसां ॥
यथाबलं प्रकुर्व्वीत दुष्टदण्डनिपातनं” ॥
इति युक्तिकल्पतरौ १ अध्यायः ॥

आश्रयाशः, पुं, ( आश्रयमाधारमपि अश्नाति यः आश्रय + अश + कर्म्मणि उपपदे अण् ।) अग्निः । (यथा, हितोपदेशे । २ ।
“दुर्ज्जनः क्रियते धूर्त्तैः श्रीमानात्मविवृद्धये ।
किं नाम खलसंसर्गः कुरुते नाश्रयाशवत्” ।)
चित्रकवृक्षः । इत्यमरः ॥

आश्रयाशः,त्रि, (आश्रयं स्थानमवलम्बनमपि अश्नाति यः । आश्रय + अश + अण् ।) आश्रयनाशकः । आश्रयध्वंसी । इति मेदिनी ॥

आश्रवं, त्रि, ( आ सम्यक् शृणोति वाक्यं यः । आङ् + श्रु + पचाद्यच् ।) वचनस्थितः । इति मेदिनी ॥ कथार बाध्य इति भाषा ।
( “दृष्टदोषमपि तन्न सोऽत्यजत्
सङ्गवस्तु भिषजामनाश्रवः” ।)
इति रघुवंशम् । १९।४९ ।)

आश्रवः, पुं, ( आङ् । श्रु + अप् । ) अङ्गीकारः । क्लेशः । इति मेदिनी ॥ दोषः । इति हेमचन्द्रः ॥

आश्रिः, स्त्री, (अश्रिरेव । अश्रि + इञ् ।) अश्रिः । कोणः ॥

आश्रितः, त्रि, (आङ् + श्रि + क्तः । ) आश्रयप्राप्तः । शरणागतः । न्यायमते परमाण्वाकाशादिनित्यद्रव्यभिन्नसर्व्वद्रव्याणां आश्रितत्वं साधर्म्म्यं ॥ (अवलम्बितः, अनुसृतः, आधेयः, अधीनः, वशवर्त्ती ।)

आश्रुतः, त्रि, (आङ् + श्रु + क्तः ।) अङ्गीकृतः । स्वीकृतः । इत्यमरः ॥ आकर्णितः । श्रुतश्रवणः ॥

आश्लेषः, पुं, (आङ् + श्लिष् + घञ् ।) आलिङ्गनं । इति हलायुधः । (मेघदूते, पूर्व्वमेघे ३ ।
“कण्ठाश्लेषप्रणयिनि जने किं पुनर्दूरसंस्थे” ।)
एकदेशसम्बन्धः । यथा । आसने शेते । इति व्याकरणं ॥ ( अश्लेषा एव । अश्लेषा + अण् । स्त्रियां टाप् ।) अश्लेषा । अश्लेषानक्षत्रसम्बन्धिनि, त्रि । (यथा, तैत्तिरीयसंहितायां ।४।४।१०।१ ।
“अश्लेषानक्षत्रं सर्पा देवताः” ।)

आश्वं, क्ली, (अश्वानां समूहः । अश्व + अण् ।) अश्वसमूहः । घोटकसमूहः । इत्यमरः ॥ (अश्वस्य भावः कर्म्म वा ।)

आश्वत्थं, क्ली, (अश्वत्थस्य इदम् । अश्वत्थ + अण् ।) अश्वत्थवृक्षफलं । इत्यमरः ॥

आश्वपालिकः, पुं, (अश्वपालस्यापत्यम् । अश्वपाल + ठक् ।) अश्वपालस्य सुतः । इति व्याकरणं ॥

आश्वयुजः,पुं, (आश्वयुजी पूर्णिमा विद्यतेऽस्य । आश्वयुजी + अण् ।) आश्विनमासः । इत्यमरः ॥ आश्विनसम्बन्धिनि त्रि ॥ (मनुः, ६।१५ ।
“त्यजेदाश्वयुजे मासि मुन्यन्नं पूर्व्वसञ्चितम् ।
जीर्णानि चैव वासांसि शाकमूलफलानि च” ॥)

आश्वयुजी, स्त्री, (अश्वयुजा युक्ता पौर्णमासी । अश्वयुज् + अण् + ङीप् ।) आश्विनी पूर्णिमा । इति शब्दरत्नावली ॥

आश्वासः, पुं, (आङ् + श्वस् + घञ् । ) निर्वृतिः । आख्यायिकापरिच्छेदः । इति मेदिनी ॥ आशाप्रदानं ॥ (आश्रयदानं, भीतस्य भयनिवारणार्थं सान्त्वनं । उत्तरचरिते, षष्ठाङ्के ।
“आश्वासस्नेहभक्तीनामेकमालम्बनं महत्” ।)

आश्विनः, पुं, (अश्विनीनक्षत्रयुक्ता पौर्णमासी यत्र मासे सः । अश्विनी + अण् ।) वैशाखादिद्वादशमासान्तर्गतषष्ठमासः । रवेः कन्याराशिस्थितिकालः । तत्पर्य्यायः । इषः २ आश्वयुजः ३ । इत्यमरः ॥ शारदः ४ । इति राजनिर्घण्टः ॥ तत्र जातफलं ।
“दाता प्रियः कान्तकलाविदग्धः
स्यात्सर्व्वधर्म्मप्रसृतोऽत्युद्धिः ।
सुखी वदान्यो बहुमानशाली
भक्तो भवेदाश्विनमासजन्मा” ॥
इति कोष्ठीप्रदीपः ॥

आश्विनेयौ,पुं, (अश्विन्या अपत्ये । अश्विनी + ढक् ।) अश्विनीकुमारौ । इत्यमरः ॥ (माद्रीसुतौ नकुलसहदेवनामानौ, अश्विनीकुमारजातत्वात् अनयोस्तथात्वम् ।)

आश्वीनं, त्रि, (अश्वेनैकाहेनातिक्रम्यते । अश्वस्यैकाहगम इति खञ् ।) अध्वं एकेनाश्वेन एकेन दिनेन गम्यते तत् । इत्यमरः ॥ एक घोड़ाय एक दिने यावार पथ इति भाषा ।

आषाढः, पुं, (आषाढ्या नक्षत्रेण युक्ता पूर्णिमा यस्मिन् । आषाढा + नक्षत्रेण युक्तः कालः इति अण् । पलाशदण्डमध्ये आषाढः प्रयोजनमस्य इति विशाखाषाढादण् मन्थदण्डयोरिति अण् ।) वैशाखादिद्वादशमासान्तर्गततृतीयमासः । रवेर्मिथुनराशिस्थितिकालः । पूर्व्वोत्तराषाढान्यतरनक्षत्रयुक्ता पौर्णमासी यत्र मासे सः । तत्पर्य्यायः । शुचिः २ । इत्यमरः ॥ तत्र जातफलं ।
“अनल्पजल्पी प्रमदाभिलाषी
प्रमादशीलो गुरुवत्सलश्च ।
बह्वव्ययो मन्दकृतादरः स्या-
दाषाढमासप्रभवो मनुष्यः” ॥
इति कोष्ठीप्रदीपः ॥ व्रतिनां पलाशदण्डः ।
(“अथाजिनाषाढधरः प्रगल्भवाक्
ज्वलन्निव ब्रह्ममयेन तेजसा” ।
इति कुमारे । ५।३० ।)
मलयपर्व्वतः । इति मेदिनी ॥

आषाढकः, पुं, (आषाढ एव + आषाढ + स्वार्थे क ।) आषाढमासः ॥

आषाढभवः, पुं, (आषाढ + भू + अच् ।) मङ्गलग्रहः । इति हारावली ॥ आषाढमासजाते त्रि ॥

आषाढा, स्त्री, पूर्व्वाषाढानक्षत्रं । उत्तराषाढनक्षत्रं । इति शब्दरत्नावली ॥

आषाढाभूः, पुं, (आषाढा + भू + क्विप् ।) मङ्गलग्रहः । इति हेमचन्द्रः ॥

आषाढी, स्त्री, (आषाढस्य इयं । आषाढ + अण् + ङीप् ।) आषाढमासस्य पूर्णिमा । इति मेदिनी ॥

आष्टं, क्ली, (अश्नुते व्याप्नोतीति अश् + क्तन् बाहुलकात् ।) आकाशं । इत्युणादिकोषः ॥

आस, ङ क न उपवेशने । (अदा०-आत्म०-अक०-सेट् ।) इति कविकल्पद्रुमः ॥ विद्यमानतायां । इति तट्टीका ॥
("आसने भवनमास्था सर्व्वैर्मुनिपुङ्गवैः" । इति रामायणे १ काण्डे) ङ आसितोऽस्ति । न ङ आस्ते सिंहासने नृपः । विद्यमानतायामप्ययं । आकाशमास्ते । इति दुर्गादासः ॥ (सम् + अधि) सम्यगुपवेशने । आप्तौ । यथा रघुवंशे, १३।५२ ।
"वीरासनैर्ध्यानजुषामृषीणा-
ममी समध्यासितवेदिमध्याः" ।
(अनु) पश्चादुपवेशने । यथा रघौ, २।२४ ।
"तामन्तिकन्यस्तबलिप्रदीपा-
मन्वास्य गोप्ता गृहिणीसहायः" । इति ।
उपासनायां । यथा रामायणे,—
"ततश्चीरोत्तरासङ्गः सन्ध्यामन्वास्य पश्चिमाम्" ।
इति ।
(अभि) अभ्यासे । (उत्) उपेक्षायां । यथा माघे । २।४२ ।
"विधाय वैरं सामर्षे नरोऽरौ य उदासते" ।
इति ।
(उप) समीपोपवेशने । यथा मनुः, ४।१५४ ।
"कृताञ्जलिरुपासीत गच्छतः पृष्ठतोऽन्वियात्" ।
इति ।
बद्धाञ्जलिश्च गुरुसमीपमासीत इति तट्टीका ॥
उपासनायां । यथा,—
"मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते" ।
इति गीतायां १२।२ । सेवने । यथा,—
"उपासते ये गृहस्थाः परपाकमबुद्धयः" ।
इति मनुः ३।१०४ । परपाकमुपासते सेवन्ते इति तट्टीका । (निर्) निरासे । अपसारणे । (प्रति + सम्) प्रतिद्वन्द्वितयावस्थाने । "कोऽन्यः प्रतिसमासीत कालान्तकयमाकृते" । इति भारतम् । इत्यादि ।)

आसः, पुं, (अस्यन्ते शरा अनेनेति । अस् + करणे घञ् ।) धनुः । इति हेमचन्द्रः ॥

आसक्तः, त्रि, (आङ् + सञ्ज + क्तः ।) आसक्तिविशिष्टः । तत्पर्य्यायः । तत्परः २ प्रसितः ३ । इत्यमरः ॥ (विषयान्तरपरिहारेण सर्व्वदा निविष्टः । यथा, किराते ।११।२४।
"आसक्तास्तास्वमी मूढा वामशीला हि जन्तवः" ।)

आसक्तं, क्ली, (आङ् + सञ्ज + क्त ।) नित्यं । सततं । अविरतं । इति जटाधरः ॥

आसक्तिः, स्त्री, (आङ् + सञ्ज + क्तिन् ।) आनुरक्तिः । आसङ्गः ॥

आसङ्गं, क्ली, (आङ् + सञ्ज + घञ् ।) अनवरतं । नित्यं । सततं । तद्युक्ते त्रि । इति जटाधरः ॥
(यथा, कुमारे ।५।९।
"न षट्पदश्रेणिभिरेव पङ्कजं
सशैवलासङ्गमपि प्रकाशते" ।) ।
तुवरी । सौराष्ट्रमृत्तिका इति ख्यातः । इति राजनिर्घण्टः ॥ आसक्तिः ॥ (यथा, गीतायां ४।२० ।
"त्यक्त्वा कर्म्मफलासङ्गं नित्यतृप्तो निराश्रयः" ।)

आसङ्गिनी, स्त्री, (आसङ्ग + इनि + ङीप् ।) चक्रवातः । वातगुल्मः । इति त्रिकाण्डशेषः ॥ घूर्णिया वाताम इति भाषा ।

आसत्तिः, स्त्री, (आङ् + सद् + क्तिन् ।) सङ्गमः । लाभः । इति मेदिनी ॥ (अविच्छेदः । निरन्तरं । यथा, साहित्यदर्पणे २ य परिच्छेदे ।
"वाक्यं स्याद् योग्यताकाङ्क्षासत्तियुक्तः पदोच्चयः" ।
आसत्तिर्बुद्ध्यविच्छेदः" इति तट्टीका ।)
न्यायमते पदजन्यभावकारणं । यत्पदार्थस्य यत्पदार्थेनान्वयोऽपेक्षितस्तयोरव्यवधानेनोपस्थितिकारणं । इति सिद्धान्तमुक्तावली ॥

आसनं, क्ली, (आस्यते उपविश्यतेऽस्मिन् । आस् + अधिकरणे + ल्युट् ।) पीठ । पिँड़ि चौकि इत्यादि भाषा । हस्तिस्कन्धदेशः । यत्र महामात्रो निवसति । विजिगीषोर्दुर्गादीनवष्टभ्य स्थितिः । इत्यमरः ॥ यात्रानिवर्त्तनं । इति मेदिनी ॥ अष्टाङ्गयोगस्य तृतीययोगाङ्गं । तत्तु पद्मप्रकारकरचरणादिसंस्थानविशेषः । यथा,—
"पद्मासनं स्वस्तिकाख्यं भद्रं वज्रासनं तथा ।
वीरासनमिति प्रोक्तं क्रमादासनपञ्चकम्" ॥
तेषां क्रमः ।
"ऊर्व्वोरुपरि विन्यस्य सम्यक् पादतले उभे ।
अङ्गुष्ठौ च निबध्नीयात् हस्ताभ्यां व्युत्क्रमात्तथा ॥
पद्मासनमिति प्रोक्तं योगिनां हृदयङ्गमम् ॥ १ ॥
जानूर्व्वोरन्तरे सम्यक् कृत्वा पादतले उभे ।
ऋजुकायो विशेद्योगी स्वस्तिकं तत् प्रचक्षते ॥२॥
सीमन्याः पार्श्वयोर्न्यस्येद्गुल्फयुग्मं सुनिश्चलम् ।
वृषणाधःपादपार्ष्णी पाणिभ्यां परिबन्धयेत् ॥
भद्रासनं समुद्दिष्टं योगिभिः सारकल्पितम् ॥ ३ ॥
ऊर्व्वोः पादौ क्रमान्न्यस्येत् कृत्वा प्रत्यङ्मुखाङ्गुली ।
करौ निदध्यादाख्यातं वज्रासनमनुत्तमम् ॥ ४ ॥
एकपादमधः कृत्वा विन्यस्योरौ तथेतरम् ।
ऋजुकायो विशेद्योगी वीरासनमितीरितम्" ॥५॥
इति तन्त्रसारः ॥ अन्यच्च ।
"आसनानि कुलेशानि यावन्तो जीवजन्तवः ।
चतुरशीतिलक्षाणि चैकैकं समुदाहृतम् ॥
आसनेभ्यः समस्तेभ्यः साध्यतं द्वयमुच्यते ।
एकं सिद्धासनं नाम द्वितीयं कमलासनम्" ॥
इति गोरक्षतन्त्रम् ॥
षट्कारासनानि बन्धशब्दे द्रष्टव्यानि ॥
उपवेशनाधारः । पीठादि । यथा ।
श्रीभगवानुवाच ।
"उपचारान् प्रवक्ष्यामि शृणु षोडश भैरव ।
यैः सम्यक् तुष्यते देवी देवोऽप्यन्यो हि भक्तितः ॥
आसनं प्रथमं दद्यात् पौष्पं दारवमेव वा ।
वास्त्रं वा चार्म्मणं कौशं मण्डलस्योत्तरे न्यसेत् ॥
पौष्पासनं यदुदितं यस्य तद्यदि गर्भकम् ॥
निवेशयेत्तदा मध्ये विपुलं द्वारि चोत्सृजेत् ।
पौष्पं पुष्पौघरचितं कुशसूत्रादिसंयुतं ॥
अतिप्रीतिकरं देव्या समाप्यमस्य भैरव ।
पञ्चदारुसमुद्भूतमासनं भद्रकं शुभम् ॥
नोच्छ्रायं नातिविस्तीर्णमासनं विनियोजयेत् ॥
अन्यदारुभवञ्चापि दद्यादासनमुत्तमम् ॥
सकण्टकं क्षीरयुक्तं दारुसारविवर्जितम् ।
चैत्यश्मशानसम्भूतं वर्जयित्वा विभीतकम् ॥
वाल्कलं कौषजं शाणं वस्त्रमेतत्त्रयं मतम् ।
रौमजं काम्बलञ्चैव तदनेन चतुष्टयम् ॥
अनेन रचितं दद्यादासनं चैत्यभूतये ।
सिंहव्याघ्रतरक्षूणां छागस्य महिषस्य च ॥
गजानां तुरगाणाञ्च कृष्णसारस्य चर्म्मणः ।
चमरस्याथ रामस्य मृगाणां नवभेदिनाम् ॥
चर्म्मभिः सर्व्वदेवानामासनं प्रीतिदं स्मृतम् ।
वास्त्रञ्च काम्बलं प्रोक्तमासनं देवतुष्टये ॥
राङ्कवं चार्म्मणं श्रेष्ठं दारवं चन्दनोद्भवम् ।
पद्मासनं कुशमयं तदासनमनुत्तमम् ॥
सर्व्वेषामपि देवानामृषीणाञ्च यतात्मनाम् ।
योगपीठस्य सदृशमासनं स्थानमुच्यते ॥
आसनस्य प्रदानेन सौभाग्यं मुक्तिमाप्नुयात् ।
रुमरो रोहितो न्यङ्कुः शम्बरो बभ्रुको रुरुः ॥
पृषतश्च हरिणश्चेति मृगा नवविधा मताः ।
हरिणश्चापि विज्ञेयः पञ्चभेदोऽत्र भैरव ॥
ऋष्यः खड्गो रुरुश्चैव पृषतश्च मृगस्तथा ।
एते बलिप्रदानेषु चर्म्मदाने च कीर्त्तिताः ॥
सर्व्वेषां तैजसानाञ्च आसनं श्रेष्ठमुच्यते ।
आयसं वर्ज्जयित्वा तु कांस्यं सीसकमेव वा ॥
शिलामयं मणिमयं तथा रत्नमयं मतम् ।
आसनं देवताभ्यस्तु भुक्त्यै मुक्त्यै समुत्सृजेत् ॥ * ॥
अत्रैव साधकानाञ्च आसनं शृणु भैरव ।
यत्रासीनः पूजकस्तु सर्व्वसिद्धिमवाप्नुयात् ॥
शैलञ्च चार्म्मणं वास्त्रं तैजसञ्च चतुष्टयम् ।
आसनं साधकानाञ्च सततं परिकीर्त्तितम् ॥
पूर्व्वोक्तं यच्च देवेभ्य आसनं परिकीर्त्तितम् ।
तत्सर्व्वमासनं शस्तं पूजाकर्म्मणि साधके ॥
न यथेष्टासनो भूयात् पूजाकर्म्मणि साधकः ।
काष्ठादिकासनं कुर्य्यात् मितमेव सदा बुधः ॥*॥
चतुर्व्विंशत्यङ्गुलेन दीर्घं काष्ठासनं मतम् ।
षोडशाङ्गुलविस्तीर्णमुत्सेधचतुरङ्गुलम् ॥
त्र्यङ्गुलं वा कुर्य्यात्तु नोच्छ्रितं चात्र कारयेत् ।
पूर्व्वोक्तं वर्ज्जयेदन्यमासनं पूजनेष्वपि ॥
वास्त्रं त्रिहस्तमानो दीर्घं सार्द्धहस्तञ्च विस्तृतम् ।
न त्र्यङ्गुलात्तथोच्छ्रायं पूजाकर्म्मणि संश्रयेत् ॥
यथेष्टं चार्म्मणं कुर्य्यात् पूर्व्वोक्तं सिद्धिदायकम् ॥
त्र्यङ्गुलाधिकं कुर्य्यान्नोच्छ्रितन्तु कदाचन ।
काम्बलं चार्म्मणं चैव महामायाप्रपूजने ॥
प्रशस्तमासनं प्रोक्तं कामाख्यायास्तथैव च ।
त्रिपुरायाश्च सततं विद्यायाश्चापि कुशासनम् ॥
षड्दीर्घं त्र्यङ्गुलोच्छ्रायं तथैव षड्विस्तृतम् ।
दारुभूमिसमं प्रोक्तमत्रापि सर्व्वकर्म्मणि ॥

पृथक् पृथक् कल्पयेच्च ग्रीष्मं तावृषासनम् ।
न पद्मासनं कुर्य्यात् कदाचिदपि पूजने ॥
न प्राग्यक्सकुम्भूतमस्थिरं द्विरदाहृते ।
मातङ्गदन्तसञ्जातमासनं कामिके चरेत् ॥
चर्म्मपूर्व्वोदितं ग्राह्यं तथा गन्धमृगस्य च ॥०॥
सलिले यदि कुर्व्वीत देवतानां प्रपूजनम् ।
तथाप्यासनमासीनो नोद्यितस्तु समाचरेत् ।
तोये शिलामयं कुर्य्यादासनं कौशमेव वा ॥
दारवं तैजसं वापि नान्यदासनमाचरेत् ।
आसनारोपसंस्थानं स्थानाभावे तु पूजकः ॥
आसनं कल्पयित्वा तु मनसा पूजयेज्जले ॥
यद्यासनस्य संस्थानं तोयमध्ये न विद्यते ॥
अन्यत्र वा तदा स्थित्वा देवपूजां समाचरेत् ।
इत्येतत् कथितं पुत्र पूज्यपूजकसत्कृतम् ॥
आसनं पाद्यमधुना शृणु वेतालभैरव" ॥
इति कालिकापुराणे ६७ अध्यायः ॥

आसनः, पुं, (असु क्षेपणे + ल्युः + प्रज्ञाद्यण् ।) जीवकवृक्षः। इति मेदिनी ॥ (जीवकशब्देऽस्य विशेषो ज्ञेयः ।)

आसना, स्त्री, (आस्यतेऽस्याम् । आस + ण्यासश्रन्थो युच् ।) स्थितिः । इत्यमरः ॥

आसनी, स्त्री, (आस्यतेऽस्मिन् । आस + अधिकरणे ल्युट् + स्त्रियां ङीप् ।) विपणिः । (आस + भावे + ल्युट् + ङीप् ) स्थितिः । इति मेदिनी ॥

आसन्दः, पुं, (आसं ददातीति । आस + द ।) वासुदेवः । इति मेदिनी ॥

आसन्दी, स्त्री, (आस्यतेऽस्यां । आस् । अन्दादयश्चेति साधुः ।) क्षुद्रखट्वा । इति मेदिनी ॥ (यथा, शतपथब्राह्मणे ५।४।४।१। "तस्मादेता आसन्दीमाहरन्ति सैषा खादिरी विटप्या भवति येयं वध्युता भरतानाम्" ।)

आसन्नः, त्रि, (आङ् + सद् + क्तः ।) निकटः । इत्यमरः ॥ (समीपवर्त्ती, कुमारसम्भवे, ३।४४॥ "आसीनमासन्नशरीरपातः" । अस्ताभिमुखः सूर्य्यः ।)

आसवः, पुं, (आङ् + सुञ् + अप् ।) मद्यविशेषः । तत्पर्य्यायः । मैरेयं २ शीधुः ३ । इत्यमरः ॥
"शीधुरिक्षुरसैः पक्वैरपक्वैरासवो भवेत् ।
मैरेयं धातकीपुष्पगुडधानाम्लसंहितम्" ॥
इति माधवेन भेदः कल्पयापि सूक्ष्ममनादृत्येदमुक्तम् । इति भरतः ॥ मद्यमात्रम् । इति राजनिर्घण्टः ॥ (यथा मनुः ११।९५।
"यक्षरक्षःपिशाचान्नं मद्यं मांसं सुरासवं ।
तद्ब्राह्मणेन नात्तव्यं देवानामश्नता हविः" ।)
("यदपक्वौषधाम्बुभ्यां सिद्धं मद्यं स आसवः" ।
इति शार्ङ्गधरः । यथा भावप्रकाशे ।
"आसवस्य गुणा ज्ञेया बीजद्रव्यगुणैः समाः" ।)
आसवभेदेन गुणभेदो यथा ॥
"छेदी मध्वासवस्तीक्ष्णो मेहपीनसकासजित्" ।
"शार्करः सुरभिः स्वादुर्हृद्यो नातिमदो लघुः" ।
इति च वाभटः ॥
"सुखप्रियः सुखमदः सुगन्धिर्वस्तिरोगनुत् ।
जरणीयः परिणतो हृद्यो वर्ण्यश्च शार्करः" ।
"रोचनो दीपनो हृद्यः शोषशोफार्शसंहितः ।
स्नेहश्लेष्मविकारघ्नो वर्ण्यः पक्वरसो मतः" ॥
"रूक्षो भिन्नशकृज्जातो गौडस्तर्पणदीपनः ।
छेदी मध्वासवस्तीक्ष्णो मैरेयो मधुरो गुरुः" ॥
इति चरकः ॥ तथा च सुश्रुते ॥
"तीक्ष्णः सुरासवो हृद्यो मूत्रलः कफवातनुत् ।
मुखप्रियः स्थिरमदो विज्ञेयोऽनिलनाशनः ।
लघुर्मध्वासवश्छेदी मेहकुष्ठविषापहः ॥
तिक्तः कषायः शोफघ्नस्तीक्ष्णः स्वादुरवातकृत् ।
तीक्ष्णः कषायो मदकृद्दुर्नामकफगुल्महृत् ॥
कृमिमेदोऽनिलहरो मैरेयो मधुरो गुरुः ।
बल्यः पित्तहरो वर्ण्यो मृद्वीकेक्षुरसासवः" ॥)

आसवद्रुः, पुं, (आसवस्य द्रुः ।) तालवृक्षः । इति राजनिर्घण्टः ॥

आसादितः, त्रि, ( आङ् + सद् + णिच् + क्तः ।) प्राप्तः । लब्धः । इत्यमरः ॥ (सन्निधापितः, आयोजितः, सम्पादितः ।)

आसारः, पुं, (आङ् + सृ + घञ् ।) धारासम्पातः । वेगवद्वृष्टिः । (मेघदूते, "त्वामासारप्रशमितवनोपप्लवं साधु मूर्ध्ना" । प्रसरणम् । सैन्यानां सर्व्वतो व्याप्तिः । इत्यमरः ॥ (यथा पञ्चतन्त्रे ।३।४६।
"तस्मात् दुर्गं दृढं कृत्वा सुभटासारसंयुतं" ।)
सुहृद्बलम् । इति मेदिनी ॥ (यथा पञ्चतन्त्रे ३।२६।
"अज्ञातवीवधासारतोयशस्यो व्रजेत्तु यः" ।)

आसीनः, त्रि, (आस् + शानच् ।) उपविष्टः । इति जटाधरः ॥ वसा लोक इत्यादि भाषा ।

आसीनप्रचलायितं, क्ली, (आसीनेन उपविष्टेन प्रचलवदाचरितम् ।) उपविश्य निद्रावशेन दोलनम् । इति राजवल्लभः ॥ ढोला इति भाषा ।

आसुतिः, पुं, (आसूयते + आङ् + सुञ् + क्तिन् ।) मद्यसन्धानम् । इति हेमचन्द्रः ॥ मद चोयान इति भाषा ।

आसुतीवलः, पुं, (आसुतिरस्यास्ति रजःकृष्यासुतिपरिषदो वलच् । वलेति दीर्घः ।) यज्वा । शौण्डिकः । इति हेमचन्द्रः ॥ (कल्यापालः, शूद्रजातिविशेषः ।)

आसुरः, पुं, (असुर + प्रज्ञाद्यण् ।) असुरः । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥
"ब्राह्मादयष्टधाविवाहान्तर्गतविवाहविशेषः ।
"आसुरो द्रविणादानात्" ॥ इति याज्ञवल्क्यः ।
"ज्ञातिभ्यो द्रविणं दत्त्वा कन्यायै चैव शक्तितः ।
कन्याप्रदानं स्वाच्छन्द्यादासुरो धर्म्म उच्यते" ॥
इति मनुः ३।३१।

आसुरं, क्ली, विड्लवणम् । इति राजनिर्घण्टः ॥ असुरस्य भावः । (यथा गीतायां ७।१५।
"न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः ।
माययापहृतज्ञाना आसुरं भावमाश्रिताः" ।)
असुरसम्बन्धिनि त्रि । इति व्याकरणम् ॥

आसुरं, त्रि, (असुरस्येदम् । असुर + अण् ।) असुरसम्बन्धि । यथा —
"यस्मिन् भवे पुराणे च विष्णो देवा न सेविरे ।
आसुरं तद्भवेत् श्राद्धं दत्तं मन्त्रवर्जितम्" ।
इति श्राद्धतत्त्वे ऋग्वेदीयच्छन्दपरिशिष्टम् ॥
अपि च ।
"स्नानं दानं तपः श्राद्धमनन्तं राहुदर्शने ।
आसुरी रात्रिरन्यत्र तस्मात्तां परिवर्ज्जयेत्" ॥
इति श्राद्धतत्त्वधृतयमवचनम् ॥*॥ आसुरसर्गो यथा ।
"द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च ।
दैवो विस्तरशः प्रोक्त आसुरं पार्थ मे शृणु ॥
प्रवृत्तिञ्च निवृत्तिञ्च जना न विदुरासुराः ।
न शौचं नापि चाचारो न सत्यं तेषु विद्यते ॥
असत्यमप्रतिष्ठन्ते जगदाहुरनीश्वरम् ।
अपरस्परसम्भूतं किमन्यत् कामहैतुकम् ॥
एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ।
प्रभवन्त्युग्रकर्म्माणः क्षयाय जगतोऽहिताः ॥
काममाश्रित्य दुष्पूरं दम्भमानमदान्विताः ।
मोहात् गृहीत्वा सद्ग्राहान् प्रवर्त्तन्तेऽशुचिव्रताः ॥
चिन्तामपरिमेयाञ्च प्रलयान्तामुपाश्रिताः ।
कामोपभोगपरमा एतावदिति निश्चिताः ॥
आशापाशशतैर्बद्धाः कामक्रोधपरायणाः ।
ईहन्ते कामभोगार्थमन्यायेनार्थसञ्चयान् ॥
इदमद्य मया लब्धमिदं प्राप्स्ये मनोरथम् ।
इदमस्तीदमपि मे भविष्यति पुनर्धनम् ॥
असौ मया हतः शत्रुर्हनिष्ये चापरानपि ।
ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखी ॥
आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया ।
यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः ॥
अनेकचित्तविभ्रान्ता मोहजालसमावृताः ।
प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ ॥
आत्मसम्भाविताः स्तब्धा धनमानमदान्विताः ।
यजन्ते नाम यज्ञैस्ते दम्भेनाविधिपूर्व्वकम् ॥
अहङ्कारं बलं दर्पं कामं क्रोधञ्च संश्रिताः ।
मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ॥
तानहं द्विषतः क्रूरान् संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥
आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ।
मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम्" ॥
इति श्रीभगवद्गीतायां १६ अध्यायः ॥

आसुरी, स्त्री, (असुरस्य इयं । असुर + तस्येदमित्यण् ततः ङीप् ।) राजिका । राइ सर्षा इति भाषा । इति राजनिर्घण्टः ॥ त्रिविधचिकित्सान्तर्गतचिकित्साविशेषः । सा च छेदभेदाद्यात्मिका । इति वैद्यकं शब्दचन्द्रिका च ॥

आसेचनः, त्रि, (न सिच्यते मनोऽत्र । नञ् + सिच् + अधिकरणे ल्युट् । ततः स्वार्थे अण् ।) यस्य दर्शने तृप्तेरन्तो न जायते सः । तत्पर्य्यायः । अतसिकृत् २ । इति हारावली ॥ (आ + सिच् + करणे + ल्युट् । आसेचनपात्रम् । यथा, ऋग्वेदे १।१६२।१३। "या पात्र पूष्ण आसेचनानि" ।)

आसेचनकः, त्रि, (आसेचन एव संज्ञायां कन् ।) असेचनकः । आसेचनः । इत्यमरटीकायां रायमुकुटः ॥ (यथा, साहित्यदर्पणे १०म परिच्छेदे । "नयनयुगासेचनकं मानसवृत्त्यापि दुष्प्रापम्" ।)

अस्य चिकित्सा यथा, वैद्यकचिकित्सासारे ॥
"दूर्व्वाचयं मत्तं माषकुलत्थौ वंशपत्रिका ।
भव्यमुच्चमनी कर्कमोरटाखरमञ्जरी ॥
दशक्षोत्पलस्य मूलानि क्वाथ्यादष्टगुणेऽम्भसि ।
तत्पादशेषिते तैलं तुल्यं कृत्वा विपाचयेत् ।
तत्तैलं प्रतिमर्द्देन आहवाख्यं ज्वरं जयेत्" ॥
॥०॥ दूर्व्वाद्यं तैलं ॥०॥)

आहतं, क्ली, (आ + हन् + क्त ।) पुरातनवस्त्रं । नूतनवस्त्रं । इति मेदिनी । मृषार्थकवाक्यं । इत्यमरः ॥

आहतः, त्रि, (आ + हन् + क्तः ।) गुणितः । ताडितः । इति मेदिनी ॥ ("प्रति दिवसं याति लयं वसन्तवाताहतेव शिशिरश्रीः"। इति पञ्चतन्त्रम्। ज्ञातः । मिथ्योक्तः । इत्यजयः ॥ निहतः । "धूमा विप्रतिराहतास्तौघ्रिणीनाम्"। इति महाभारतम् ।)

आहतः, पुं, (आहन्यते यः + आङ् + हन् + कर्म्मणि + क्त ।) आनकः । ढक्का । इति मेदिनी ॥

आहतलक्षणः, त्रि, (आहतं ख्यातं लक्षणं यस्य ।) गुणैः प्रतीतः । गुणेन ख्यातः । तत्पर्य्यायः । आत्तलक्षणः २ । इत्यमरः ॥

आहरः, पुं, (आङ् + हृ + अच् ।) उच्छ्वासः । अन्तर्मुखश्वासः । इति हेमचन्द्रः ॥ (आहरणकर्त्तरि वाच्यलिङ्ग एव । यथा, रघौ १।४९ ।
"वनान्तरादुपावृत्तैः समित्कुशफलाहरैः" ।)

आहरणं, क्ली, (आङ् + हृ + भावे ल्युट् ।) अन्यानयनं । आनयनम् । यथा । देवीपुराणे ।
"स्वदाहरणसंबद्धप्रतिष्ठाज्ञानमेव च ।
जपनं पूजनञ्चैव विसर्जनमतःपरं" ॥
इति तिथ्यादितत्त्वम् ॥

आहवः, पुं, (आहूयते अरिर्यस्मिन् । आङ् + ह्वे + अप् ।) युद्धं ।
("यदाश्रौषं भीष्ममत्यन्तशूरम्
हतं पार्थेनाहवेष्वप्रधृष्यम्" ॥
इति महाभारते आदिपर्व्वणि १।१८२ ।
आहूयते आज्यादिकं यत्र । आङ् + हु + अप ।) यज्ञः । इति शब्दरत्नावली ॥

आहवनीयः, पुं, (आहूयते आज्यादिरस्मिन् । आङ् + हु + अनीयर् ।) यज्ञाग्निविशेषः । इत्यमरः । गार्हपत्यादुद्धृत्य होमार्थं यः संस्क्रियते सः । इति भरतः ॥ (यथा, मनौ २।२३१ ।
"गुरुराहवनीयस्तु साग्निश्रेता गरीयसी" ।)

आहारः, पुं, (आङ् + हृ + घञ् ।) भक्ष्यगलाधःकरणं । तत्पर्य्यायः । जग्धिः २ भोजनं ३ जेमनं ४ लेपः ५ निघसः ६ न्यादः ७ । इत्यमरः ॥ अशनं ८ निघसः ९ इति तट्टीका ॥ प्रत्यवसानं १० भक्षणं ११ अदनं १२ ॥ इति रत्नमाला ॥ अभ्यवहारः १३ खदनं १४ निगारः १५ । इति राजनिर्घण्टः ॥ अस्य गुणाः । सद्यस्तृप्तिजनकत्वं । बलकारित्वं । देहधारकत्वञ्च । इति राजवल्लभः ॥
("तमुवाच भगवानात्रेयः। हिताहारोपयोग एक एव पुरुषस्याभिवृद्धिकरो भवति। अहिताहारोपयोगः पुनर्व्याधिनिमित्तमिति"।
"तमुवाच भगवानात्रेयः । यदाहारजातमग्निवेश ! समांश्चैव शरीरधातून् प्रकृतौ स्थापयति, विषमांश्च समीकरोतीत्येतद्धितं विद्धि तद्धितं विपरीतं त्वेतद्धिताहितलक्षणमनपवादम्भवति एवं वादिनञ्च भगवन्तमात्रेयमग्निवेश उवाच। भगवन्नत्वेतदेवमुपदिष्टं भूयिष्ठकल्पाः सर्व्वभिषजो विज्ञास्यन्ति । तमुवाच भगवानात्रेयः । येषां विदितमाहारतत्त्वमग्निवेश ! गुणतो द्रव्यतः कर्म्मतः सर्व्वावयवतो मात्रादयो भावास्तत्र तदेवमुपदिष्टं विज्ञातुमुत्सहेरन् यथा तु खल्वेतदुपदिष्टं भूयिष्ठकल्पाः सर्व्वभिषजो विज्ञास्यन्ति तथैतदुपदेक्ष्यामः । मात्रादीन् भावाननुदाहरन्तस्तेषां हि बहुविधविकल्पा भवन्ति । आहारविधिविशेषांस्तु खलु लक्षणतश्चावयवतश्चानुव्याख्यास्यामः । तद्यथा, आहारत्वमाहारस्यैकविधमर्थाभेदात् । स पुनर्द्वियोनिः स्थावरजङ्गमात्मकत्वात् । द्विविधः प्रभावो हिताहितोदर्कविशेषात् । चतुर्विधोपयोगः पानाशनभक्ष्यलेह्योपयोगात् । षडास्वादो रसभेदतः षड्विधत्वात्" । इति चरकः ॥
"यदाहारगुणैः पानं विपरीतं तदिष्यते ।
अन्नानुपानं धातूनां दृष्टं यन्न विरोधि च" ॥
इति च चरकः ॥
"प्राणिनां पुनर्मूलमाहारो बलवर्णौजसाञ्च स षट्सु रसेष्वायत्तो रसाः पुनर्द्रव्याश्रयाः" ।
"स च तत्रौदकैर्गुणैराहारः परिणतो मिश्रवद्वातः सुखकरश्च भवति" ।
"आहारः प्रीणनः सद्यो बलकृद्देहधारकः ।
आयुस्तेजःसमुत्साहस्मृत्योजोऽग्निविवर्द्धनः" ।
इति सुश्रुतः ।) स त्रिविधः । सात्त्विकः १ राजसिकः २ तामसिकः ३ । सात्त्विकाहारो यथा,—८ श्लोकः ।
"आयुः-सत्त्व-बलारोग्य-सुख-प्रीति-विवर्द्धनाः ।
रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्त्विकप्रियाः" । राजसिकाहारो यथा, ९ श्लोकः ।
"कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः ।
आहारा राजसस्येष्टा दुःखशोकामयप्रदाः" ॥
तामसिकाहारो यथा, १० श्लोकः ।
"यातयामं गतरसं पूतिपर्य्युषितञ्च यत् ।
उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम्" ॥
इति श्रीभगवद्गीता १७ अध्यायः ॥ आहरणं । इति मेदिनी ॥
("स पुनर्द्वैपायनोक्तः पुण्याहारो यदृच्छया"।
इति महाभारतम् । आदिपर्व्वणि ७६ । सम्भवपर्व्वणि ७६।२५ ।)

आहारसम्भवः, पुं, (आहारात् सम्भवो यस्य ।) शरीरस्थरसधातुः । इति हेमचन्द्रः ॥

आहार्य्यं, त्रि, (आङ् + हृ + ण्यत् ।) आगन्तुकं । इति त्रिकाण्डशेषः ॥
("आहार्य्यैर्नीयमानं हि शक्यं दुःखेन ह्रियताम्"
इति कामन्दकः ।) आहरणीयं ॥ (यथा, मनुः ८।२०२ । "अथ मूलमनाहार्य्यं प्रकाशक्रयशोधितः" ।) (शस्त्रकर्म्मभेदः । यथा सुश्रुते "तत्र शस्त्रकर्म्माष्टविधं, तद्यथा ;—छेद्यं भेद्यं, लेख्यं वेध्यं एष्यम्, आहार्य्यं, विस्राव्यं, सीव्यमिति" ।
"आहार्य्योऽङ्गकराश्रितो दक्षकर्णमलाञ्जनी" ।)

आहार्य्यः पुं, नाट्योक्तौ व्यञ्जकविशेषः । स तु भूषादिना रचितः । इति हेमचन्द्रः ॥ (यथा साहित्यदर्पणे । षष्ठे ।
"भवेदभिनयोऽवस्थानुकारः स चतुर्व्विधः ।
आङ्गिको वाचिकश्चैवमाहार्य्यः सात्त्विकस्तथा" ॥)

आहार्य्यशोभा, स्त्री, (आहार्य्यात् या शोभा ।) कृत्रिमशोभा । विभूषादिना जातद्युतिः । इति जटाधरः ॥ (यथा, भट्टिकाव्ये २य सर्गे,—
"आहार्य्यशोभारहितैरमायै-
रैक्षिष्ट पुंभिः प्रचितान् स गोष्ठान्" ।)

आहावः, पुं, (आङ् + ह्वे + अप् ॥ निपातनात् वृद्धिः ॥) कूपसमीपे पश्वादिजलपानार्थं जलधारणाशयः । इत्यमरः ॥ चौवाचा इति भाषा । (आहूयतेऽरिरत्र इति व्युत्पत्त्या ।) युद्धं । आह्वानं । इति धरणिः ॥ (आहूयतेऽत्र इति आ + हु + अधिकरणे अप् ।) अग्निः ।)

आहिकः, पुं, (अहिरिव आकृतिर्यस्य । अहि + ठक् ।) पाणिनिमुनिः । इति त्रिकाण्डशेषः ॥ केतुग्रहः । इति हेमचन्द्रः ॥

आहितः, त्रि, (आङ् + धा + क्त ।) न्यस्तः । अर्पितः । स्थापितः । इति हलायुधः ॥
(यथा, किराते ।
"आवर्त्तनैरहिमतेरसमाहिताङ्गः" ।)

आहितलक्षणः, त्रि, (आहितं लक्षणं यस्य ।) आहतलक्षणः । इत्यमरटीकायां रमानाथः ॥ गुणादिना ख्यातः ।

आहिताग्निः, पुं, (आहितः स्थापितोऽग्निर्येन ।) साग्निकः । अग्निहोत्री इति स्मृतिः ॥
("न दर्शेन विना श्राद्धमाहिताग्नेर्द्विजन्मनः"।
इति मनुः ३।२८२ । तथा च रघौ २।४४ ॥
"गुरोरपीदं धनमाहिताग्नेः" ।)

आहितुण्डिकः, पुं, (अहितुण्डेन दीव्यति । अहितुण्ड + ठञ् ।) व्यालग्राही । साँपुड़िया इति भाषा । इत्यमरः शब्दरत्नावली च ॥ (यथा पञ्चतन्त्रम् ।
"वैद्यसांवत्सराचार्य्याः स्वपक्षेऽधिकृताश्चराः ।
यथाहितुण्डिकोन्मत्ताः सर्व्वं जानन्ति प्रभुषु" ।)

आहुतं, क्ली, (आङ् + हु + क्त ।) मनुष्याणां पञ्चमहायज्ञान्तर्गतयज्ञविशेषः । स तु नृयज्ञः । इति जटाधरः ॥

आहुतिः, स्त्री, (आ + हु + क्तिन् ।) देवोद्देशे मन्त्रोच्चारणपूर्व्वकोऽग्नौ हविर्निक्षेपः । तत्पर्य्यायः । देवयज्ञः २ होमः ३ होत्रं ४ वषट्कारः ५ । इति हेमचन्द्रः ॥ (यथा, रघौ १।५३ ।
"पुनानं पवनोद्धूतैर्धूमैराहुतिगन्धिभिः" ।
धर्म्मात् मरुत्वत्यां जातः गणान्तर्गतो मरुद्भेदः ।
यथा हरिवंशे,—
"मरुत्वती मरुत्वन्तो देवानजनयत् सुतान् ।
अहुतं चाहुतिं चैव आदित्यं ब्रह्मणस्पतिम्" ।)

आहुल्यं, क्ली, (आङ् + हल् + ण्यत् ।) क्षुपविशेषः । तरवट इति काश्मीरादौ ख्यातं । तत्पर्य्यायः ।

श्रेष्ठो यथा । श्रद्धत्रिश्रितौ । नेष्टकार्य्यचिते पितॄन् समर्पयेत् । इति श्राद्धतत्त्वम् ॥*॥ देवोद्देश्यकेष्टकामयज्ञदानफलं यथा । मठादिप्रतिष्ठातत्त्वे ॥
"मृण्मयस्य कोटिगुणितं फलं स्यात् दारुभिः कृते ।
कोटिकोटिगुणं पुण्यफलं स्यादिष्टकामये ॥
शिलराजिगुणं पुण्यं शैलजे तु विदुर्बुधाः ।
स्फाटिकयोः समं श्रेयं ताम्रमाणिक्यरत्नयोः" ॥

इष्टकापथं, क्ली, (इष्टं कापथं यस्य अधोवायुकरत्वात् ।) वीरणमूलम् । इत्यमरः ॥ (इष्टकाभिर्निर्म्मितः पन्थाः ।) इष्टकानिर्म्मितपथे, पुं ॥

इष्टगन्धं, क्ली, (इष्टो गन्धो यस्येति ।) वालुका । इति मेदिनी ॥

इष्टगन्धः, त्रि, (इष्टो गन्धो यस्य ।) सुगन्धिद्रव्यम् । इत्यमरः ॥ (इष्टश्चासौ गन्धश्चेति वाक्ये । सौरभम् ।)

इष्टा, स्त्री, (इज्यतेऽनया । यज + क्त टाप् ।) शमीवृक्षः । इति राजनिर्घण्टः ॥

इष्टापूर्त्तं, क्ली, (इष्टञ्च पूर्त्तञ्च द्वयोः समाहारः ।) यज्ञखातादिकर्म्म । इति हेमचन्द्रः ॥ यथा ।
"अग्निहोत्रं तपः सत्यं वेदानाञ्चानुपालनम् ।
आतिथ्यं वैश्वदेवञ्च इष्टमित्यभिधीयते ॥
वापीकूपतड़ागादिदेवतायतनानि च ।
अन्नप्रदानमारामाः पूर्त्तमित्यभिधीयते" ॥
इति मलमासतत्त्वधृतस्मृतिवाक्यम् ॥ (यथा, मार्कण्डेयपुराणे १८ । ६ ।
"इष्टापूर्त्तविनाशाय तन्नाशश्चौरधर्म्मिणः" ॥
तथा च महाभारते । १ । ३२ । ३० ।
"इष्टापूर्त्तफलं न स्यात् न शिष्यो न गुरुर्भवेत्" ।)

इष्टार्थोद्युक्तः, त्रि, (इष्टोऽर्थस्तस्मिन् उद्युक्तः ।) उत्सुकः । उत्साहयुक्तः । इत्यमरः ॥

इष्टिः, स्त्री, (इष्, यज् वा + क्तिन् ।) अभिलाषः । (इति भाष्यकारेष्ट्या गतार्थत्वात् । इति पाणिनिः ।) यागः । इत्यमरः ॥ (यथा, रघुः । १० । ४ ।
"आरेभिरे जितात्मानः पुत्त्रीयामिष्टिमृत्विजः" ।
"प्राजापत्यं निरूप्येष्टिं सर्व्ववेदसदक्षिणां" ।
इति मनुः । ६ । ३८ ।) संग्रहः । इति मेदिनी ॥

इष्टिकापथिकं, क्ली, लामज्जकतृणम् । इति राजनिर्घण्टः ॥

इष्टिपचः, पुं, (इष्टिं यज्ञं पचतीति । यद्वा, इष्टये स्वेच्छार्थं पचति यः । इष्टि + पच + अच् ।) दनुजः । असुरः । इति शब्दरत्नावली ॥

इष्टिमुट्, [ ष् ] पुं, (इष्टिं यागं मुष्णाति । इष्टि + मुष् + क्विप् ।) दैत्यः । इति त्रिकाण्डशेषः ॥

इष्टुः, स्त्री, (इष + तु ।) इच्छा । इत्युणादिकोषः ॥

इष्मः, पुं, (इच्छतीति इषियुधीति मक् ।) कामदेवः । वसन्तकालः । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥

इष्यः, पुं, (इष्यतेऽनेन इति । इष् + क्यप् ।) वसन्तकालः । इति हेमचन्द्रः ॥

इष्वः, पुं, ( इष्यतेऽसौ । इष् + वन् । निपातनात् गुणाभावः ।) उपदेष्टा । इत्युणादिकोषः ॥

इष्वासं, त्रि, (इषून् वाणान् अस्यतीति । इषु + अस् + घञ् ।) इषुक्षेपकम् । इति मेदिनी ॥ तिरन्दाज इति ख्यातम् ।

इष्वासः, पुं, (इषवो वाणा अस्यन्ते क्षिप्यन्तेऽनेन । इषु + अस् + करणे घञ् ।) धनुः । इत्यमरः ॥
("महोरस्को महेष्वासो गूढ़जत्रुररिन्दमः" ।
इति रामायणे । १ । १ । १० । गीतायां १ । ४ ।
"अत्र शूरा महेष्वासा भीमार्ज्जुनसमा युधि" ।)

इह, व्य, (अस्मिन् काले, लोके, विषये, देशे, दिशि वा इत्याद्यर्थे निपातनात् सिद्धम् ।) अस्मिन् । यह देशे यह काले इत्यादि भाषा । इति व्याकरणम् ॥ (यथा, मनुः । ३ । १८१ ।
"यत्तु वाणिजके दत्तं नेह नामुत्र तद्भवेत्" ।
"सद् दोषाः पुरुषेणेह त्यक्तव्या भूतिमिच्छता" ।
इति हितोपदेशे ।)

इहामुत्रफलभोगविरागः, पुं, (इह अस्मिन् लोके स्रक्चन्दनादिजनितोऽमुत्रामुष्मिन् लोके अमृतादिविषयोत्पन्नो योऽनित्यः फलभोगस्तस्मात् विरागो नितरां विरतिः ।) ऐहिकपारत्रिकविषयभोगेभ्यो नितरां विरतिः इति वेदान्तसारे ॥

---

# ई

ई दीर्घ ईकारः । चतुर्थस्वरवर्णः । अस्योच्चारणस्थानं तालु । (स च दीर्घः द्विमात्रत्वात् त्रिमात्राश्रयत्वात् प्लुतश्च भवति ।) (विस्तृतिस्तु ह्रस्वइकारे द्रष्टव्या । )
"ईकारं परमेशानि स्वयं परमकुण्डली ।
ब्रह्मविष्णुमयं वर्णं तथा रुद्रमयं सदा ॥
पञ्चदेवमयं वर्णं पीतविद्युल्लताकृतिम् ।
चतुर्ज्ञानमयं वर्णं पञ्चप्राणमयं सदा" ॥
इति कामधेनुतन्त्रम् । ( वङ्गीयभाषायां । ) तस्य लेखनप्रकारो यथा ।
"ऊर्द्ध्वाधःकुञ्चिता मध्ये त्रिकोणाधोगता पुनः ।
अधोगता कोणशीर्षा कुञ्चिता दक्षतः शुभा ॥
शीर्षाद्दक्षे कोणयुता कुञ्चितोर्द्ध्वगता पुनः ।
चन्द्रसूर्य्याग्निरूपा सा मात्राशक्तिः प्रकीर्त्तिता" ॥
इति वर्णोद्धारतन्त्रम् ॥*॥ अस्य नामानि यथा,—
"ई त्रिमूर्त्तिर्महामाया लोलाक्षी वामलोचनम् ।
गोविन्दः शेखरः पुष्टिः सुभद्रा रतिसंज्ञकः ॥
विष्णुर्लक्ष्मीः प्रहासश्च वाग्विशुद्धः परापरः ।
कालोत्तरीयो भेरुण्डा रतिश्च पौण्ड्रवर्द्धनः ॥
शिवोत्तमः शिवा तुष्टिश्चतुर्थी बिन्दुमालिनी ।
वैष्णवी वैन्दवी जिह्वा कामकला सनादका ॥
पावकः कोटरः कीर्त्तिर्मोहिनी कालकारिका ।
कुचद्वन्द्वं तर्ज्जनी च शान्तिस्त्रिपुरसुन्दरी" ॥
इति तन्त्रोक्तवर्णाभिधानम् ॥ (मातृकान्यासेऽस्य वामचक्षुषि न्यासः । यथा, मातृकान्यासप्रकरणे । "इं नमो दक्षिणचक्षुषि ईं नमो वामचक्षुषि ।)

ई, ल, कान्तौ । गतौ । व्याप्तौ । क्षेपे । प्रजने । खादने । इति कविकल्पद्रुमः ॥ ( अदां-परं-सकं-अकं च-अनिट् । ) कान्तिरिच्छा । प्रजनो गर्भग्रहणं इत्यर्थः । न इति गौः गर्भं गृह्णाति इत्यर्थः ।
"न हि तदाविवदीते हिक् पराधीनवृत्तिः" ।
इति गयकृता नित्यत्वादात्मनेपदं । धातुद्वयं केचिन्न मन्यते । इति दुर्गादासः ॥

ई, ङ य, गतौ । इति कविकल्पद्रुमः ॥ (दिवां-आत्मं-सकं-अनिट् । ) ङ य ईयते । इति दुर्गादासः ॥

ई, व्य विषादः । अनुकम्पा । इति मेदिनी ॥ क्रोधः । दुःखभावनं । प्रत्यक्षं । सन्निधिः । इति हेमचन्द्रः ॥ (सम्बोधनम् ।)

ईः, पुं, कन्दर्पः । इति त्रिकाण्डशेषः ॥

ईः, स्त्री, ( अस्य विष्णोः पत्नी । ङीप् । ) लक्ष्मीः । इति विश्वमेदिन्यौ ॥

ईख, इ गतौ । इति कविकल्पद्रुमः ॥ (इदित्-भ्वादिं-परं-सकं-सेट् । ) दीर्घादिः । इ ईङ्खते । इति दुर्गादासः ॥ (ईख गतौ । ईखति इति केचित् ।)

ईक्ष उ दर्शने । इति कविकल्पद्रुमः ॥ (भ्वादिं-आत्मं-सकं-सेट् ।) दर्शनमिह चाक्षुषज्ञानं प्रणिधानञ्च । उ ईक्षते चन्द्रं लोकः । "न कामवृत्तिर्व्वचनीयमीक्षते" । इति कालिदासः ॥ "निरीक्षिष्यामि यावदेतान् इति गयकृतानित्यत्वात्" इति रमानाथः ॥ "वस्तुतस्तु निरीक्ष्यते निरीक्षः पचादित्वादच् ततो निरीक्ष इवाचरतीति क्वौ साध्यं" इति दुर्गादासः ॥

ईक्षणं, क्ली, (ईक्ष + भावे, ल्युट् ।) दर्शनम् । ("कृतान्धा धनलोभान्धाः नोपकारेक्षणक्षमाः" । इति कथासरित्सागरे ॥) (ईक्ष्यतेऽनेनेति करणे ल्युट् । ) चक्षुः । इत्यमरः ॥ ( "अभिमुखे मयि संहृतमीक्षणम्" । इति शाकुन्तले । २ अङ्के ।
"आसन्नामेक्षणा दीना सुनीतिर्वाक्यमब्रवीत्" ।
इति विष्णुपुराणे । १ । ११ । १५ । निरूपणम् । पर्य्यवेक्षणम् । यथा, मनुः ७ । १४१ ।
'स्थापयेदासने तस्मिन् खिन्नः कार्य्येक्षणे नृणाम्" ।)

ईक्षणिका, स्त्री, ( ईक्षणेन हस्तरेखाद्यवलोकनेन शुभाशुभं जानाति या । ईक्षण + ठन् + टाप् ।) दैवज्ञा । लक्षणादिना शुभाशुभनिरूपिणी । इत्यमरः ॥ (पुं, दैवज्ञः । यथा, मनुः । ६ । २५८ ।
"मङ्गलादेशवृत्ताश्च भद्राश्चेक्षणिकैः सह" । )

ईङ्ग, इ, कुत्से । गतौ । इति कविकल्पद्रुमः ॥ ( भ्वादिं-आत्मं-सकं-सेट्-इदित् । ) इ ईङ्गते । कुत्सः केचिन्न मन्यते । इति दुर्गादासः ॥

ईज, उ, कुत्से । गतौ । इति कविकल्पद्रुमः ॥ ( भ्वादिं-आत्मं-सकं-सेट् । ) दीर्घादिः । उ ईजते इजते । कुत्सः केचिन्न मन्यते । इति दुर्गादासः ॥

ईड़, क, स्तुतौ । इति कविकल्पद्रुमः ॥ ( चुरां-परं-सकं-सेट् । ) क ईड़यति । इति दुर्गादासः ॥

ईड़, ङ ल, स्तुतौ । इति कविकल्पद्रुमः ॥ (अदां-आत्मं-सकं-सेट् ।) ल ङ ईड्टे । इति दुर्गादासः ॥ (यथा, रामायणे । ४थ काण्डे ।
"गन्धर्व्वाः सुरसंघाश्च बहवश्च महर्षयः ।
अन्तरीक्षगतं देवं गीर्भिरग्र्याभिरीड़िरे" ॥)

ईड़ा, स्त्री, (ईड़ + अ + टाप् ।) स्तुतिः । इति हलायुधः ॥ (प्रशंसा ।)

ईड़ितः, त्रि, (ईड्यते स्म । ईड़् + क्त ।) स्तुतः । कृतस्तवः । इत्यमरः ॥ (प्रशंसितः ।)

ईक्ष, ङ बन्धे। ङ ईक्षयते। इति दुर्गादासः॥ (भ्वादिं-परं-सकं-सेट्। तेन ईक्षतीति केचित्।)

ईतिः, स्त्री, (ईयतेऽनया। ई+क्तिन्।) डिम्बः। प्रवासः। इत्यमरो मेदिनी च॥ शस्यः षट्प्रकारोपद्रवविशेषः। यथा,—

"अतिवृष्टिरनावृष्टिः शलभा मूषिकाः खगाः।
प्रत्यासन्नाश्च राजानः षडेता ईतयः स्मृताः"॥

इति स्मृतिः॥ (कलहभेदः। नृपतिरचितयुद्धम्।
"ईतयो व्याधयस्तन्द्रा दोषा क्रोधादयस्तथा।
उपद्रवाश्च वर्त्तन्ते आधयः क्षुद्भयं तथा"॥

इति महाभारते हनुमद्भीमसंवादे।३।१४९।३४।)

ईदृक्, [श्] त्रि, (इदम्+दृश्+क्विप्।) अयमिव दृश्यते। इति व्याकरणम्॥ इहार न्याय एह-प्रकार इत्यादि भाषा।

("एतास्तीदृंशि भूयांसि न भवन्त्येव भूतले"।
इति कथासरित्सागरे।२५।१७६॥ तथा च किराते।२।२८॥
"इदमीदृगनीदृगाशयः प्रसभं वक्तुमुपक्रमेत कः"।

ईदृक्षः, त्रि, (अयमिव दृश्यतेऽसावित्यार्थे। इदम्+दृश्+क्स दृशेश्चेति ईश्।) ईदृशः। इति व्याकरणम्॥

("ईदृक्षराजकन्याभि भवेयुस्तदिदं वयम्"।
इति कथासरित्सागरे।)

ईदृशः, त्रि, (अयमिव दृश्यतेऽसौ इदम्+दृश+कञ्।) ईदृक्। एतत्सदृशः। इति व्याकरणम्॥

("ईदृशानां विपाकोऽपि जायते परमाद्भुतः"।
इति उत्तररामचरिते।)

ईर, कि गतौ। प्रेरणे। इति कविकल्पद्रुमः। (चु, चुरां-परं-सकं-सेट्।) चुदि। कि ईरयति ईरति। चुदि प्रेरणे। इति दुर्गादासः॥

ईर, ङ न, कम्पे। गतौ। इति कविकल्पद्रुमः॥ (अदां-आत्मं-सकं कम्पार्थे, अकं-सेट्।) दीर्घादिः। ङ न ईर्त्ते लता वायुना। इति दुर्गादासः॥

ईरिका, स्त्री, वृक्षविशेषः। यथा। ईरिकावणम्। इति णत्वप्रकरणे दुर्गादासः॥

ईरिणं, त्रि, (ऋ+इरन्।) शून्यं। ऊषरभूमिः। इति मेदिनी॥ (यथा, मनुः।३।१४२॥
"यथेरिणे बीजमुप्त्वा न वप्ता लभते फलम्॥
तथाऽनृचे हविर्दत्त्वा न दाता लभते फलम्"॥
"सतताहीरिणं भातं सस्यश्यावसर्पितः"।
इति महाभारते अनुशासनपर्व्वणि। स्थलं।)

ईरितं, त्रि, (ईर+क्त।) क्षिप्तम्। इत्यमरः॥ प्रेरितम्। कम्पितम्। गतम्। कथितम्॥ ("इतीरिते वचसि वचस्विनामुना"। इति माघे।१७।१।
"तस्य मर्म्म विभिद्याशु स बाणो मत्सुतेरितः"।
इति, महाभारते।)

ईर्क्ष्य,ईर्ष्य। (भ्वादिं-परं-अकं-सेट्।) पराभ्युदयासहिष्णुतायामिति यावत्। इति कविकल्पद्रुमः॥ दीर्घादिः। रेफयुक्तः। ईर्क्षा परादोषासहिष्णुत्वमिति केचित्। ईर्क्ष्यति खलः साधवे। मध्यान्त इत्येके। इति दुर्गादासः॥

ईर्म्मं, क्ली, (ईर+बाहुलकात् मक्।) व्रणः। इत्यमरः॥ (यथा, भट्टिकाव्ये।४।४४।
"व्रणयमिव व्रणोऽथ दक्षिणेर्म्मा"।)

ईर्य्या, स्त्री, (ईर+ण्यत्।) भिक्षुव्रतम्। इति जटाधरः॥

ईर्व्वारुः, पुं, स्त्री, (ईरं वृणोतीति। ईर्+वृ-बाहुलकात् उक्।) कर्कटिः। इति शब्दरत्नावली॥ फुटी इति भाषा।

ईर्षा, स्त्री, (ईर्ष्यणं। ईर्ष्य+घञ्। यलोपश्च इति यकारलोपः।) अक्षमा। इति शब्दमाला॥
("कथमीर्षां न कुरुषे सुग्रीवस्य समीपतः"।)
इति रामायणे॥४।२४।३०।)

ईर्षालुः, त्रि, (ईर्षा+आलुच्।) ईर्षाविशिष्टः। इति हलायुधः॥

ईर्ष्य, ईर्ष। इति कविकल्पद्रुमः॥ (भ्वादिं-परं-अकं-सेट्।) दीर्घादिः। रेफयुक्तः। ईर्ष इति ईर्ष्यस्य घञि यलाल्लोप इति यलोपे सिद्धम्। ईर्षा पराभ्युदयासहिष्णुत्वम्। परदोषासहिष्णुत्वमिति केचित्। ईर्ष्यति खलः साधवे। यद्यपान्तः इत्येके। इति दुर्गादासः॥

ईर्ष्या, स्त्री, (ईर्ष्यणं। ईर्ष्य+अच्+टाप्।) परोत्कर्षासहिष्णुता। रीस इति भाषा। तत्पर्य्यायः॥ अक्षान्तिः २। इत्यमरः॥ (यथा,मनुः।७।४८॥
("पैशुन्यं साहसं द्रोह ईर्ष्यासूयार्थदूषणम्।
वाग्दण्डजञ्च पारुष्यं क्रोधजोऽपि गुणाष्टकः"।
स्त्रियः पत्युरन्यप्रियासङ्गदर्शनादिजनितो मानभेदः। यथा, शृङ्गारशतके॥
"वचोभिरीर्ष्याकलहेन लीलया
समस्तभावैः खलु बन्धनं स्त्रियः"।)

ईर्ष्यालुः, त्रि, (ईर्ष्यां लाति। ईर्ष्या+ला+डु।) ईर्षाविशिष्टः। अक्षान्तियुक्तः। तत्पर्य्यायः। कुहनः२ इति हेमचन्द्रः॥ (यथा, राजतरङ्गिणी।
"दिवसे सन्निधानेन पैशुनप्रेरणा यदि।
ईर्ष्यालुना वैरिणीव रक्षितुं यदि पार्य्यते"॥)

ईलिः, स्त्री, (ईर्य्यते इति। ईर+इन् रस्य लः।) क्षुद्रगदाकारहस्तदण्डः। इति भरतः॥ सोँटा इति ख्याता। करच्छुरीति ख्याते एकधारा इति ख्याते यवनास्त्रे वा। इति सारसुन्दरी॥

ईलिका, स्त्री, (ईलिरेव। ईलि+स्वार्थे कन् टाप्।) क्षुद्रगदाकारहस्तदण्डः। इति भरतः॥ सोँटा इति ख्याता। एकधारेतीति स्वामी। तत्पर्य्यायः। ईलिः २ ईली ३ करपाली ४ गुप्तिका ५ करपालिका ६। इति शब्दरत्नावली॥

ईलितः, त्रि, (ईड्+क्त। डस्य लः।) स्तुतः। इत्यमरः॥

ईली, स्त्री, (ईर+क। गौरादित्वादिति पाक्षिको ङीष्।) क्षुद्रगदाकारहस्तदण्डः। तत्पर्य्यायः। करपालिका २। इत्यमरः॥

ईश, ङ, न, ऐश्वर्य्ये। इति कविकल्पद्रुमः॥ (अदां-आत्मं अकं-सेट्।) दीर्घादिः। ऐश्वर्य्यमीश्वरीभावोऽधीनीकरणञ्च। ङ न ईष्टे धनी। मायानामीशितेशा च। अत्र कर्म्मणि षष्ठी। इति दुर्गादासः॥

ईशं, त्रि, (ईष्टे इति। ईश्+क।) ईश्वरं। (यथा कुमारे ३।९ "जगदीशो गिरीश्वरः"।) प्रभुः। इति मेदिनीकरहेमचन्द्रौ॥ (यथा, "कुमारे। ३।२४ "कथञ्चिदीशा मनसां बभूवुः"।)

ईशः, पुं, (ईष्टे इति। ईश+क।) महादेवः।
("शनैः कृतप्राणविमुक्तिरीशः
पर्य्यङ्कबन्धं निविडं बिभेद"।
इति कुमारे ३।५९।) ईशानकोणाधिपतिः। इत्यमरः॥

ईशसखः, पुं, (ईशस्य सखा बन्धुः राजाहःसखिभ्यः टच्।) कुबेरः। इति हेमचन्द्रः॥

ईशा, स्त्री, (ईश+अ+टाप्।) लाङ्गलदण्डः। इत्यमरटीका शब्दरत्नावली च॥ (यथा महाभारते वनपर्व्वणि घोषयात्रापर्व्वणि २४०।१०।
"ईशामन्ये युगानन्ये सूतमन्ये न्यपातयन्"।)
(ईशस्य महादेवस्य पत्नी। दुर्गा॥ ईशस्य प्रभोः पत्नी इति व्युत्पत्त्या स्वामिपत्नी। प्रभ्वी यथा, अथर्व्ववेदे ११।८।१७ "ईशा वशस्य या जाया"।)

ईशादण्डः, पुं, (ईशायाः लाङ्गलस्य दण्डः।) अक्षयुगयोः सन्धारणार्थो दण्डः। यथा,—
"योजनानां सहस्राणि भास्करस्य रथो नव।
ईशादण्डस्तथैवास्य द्विगुणो मुनिसत्तम"॥
इति विष्णुपुराणे २ अंशे ८।२॥

ईशादन्तः, पुं, (ईशेव दन्तो यस्य।) बृहद्दन्तहस्ती। तत्पर्य्यायः। महादन्तः २। इति त्रिकाण्डशेषः॥ हस्तिदन्तः। इति शब्दरत्नावली॥

ईशानं, क्ली, (ईश+आनश्।) ज्योतिः। इति मेदिनी॥ (तद्विशिष्टे, त्रि। यथा, ऋग्वेदे।१।१७५।४।
"मुषाय सूर्य्यं कवे चक्रमीशान ओजसा"।)

ईशानः, पुं, (ईष्टे। ईश्+ताच्छील्यवयोवचनशक्तिषु चानश्।) महादेवः। इत्यमरः॥
("तस्मिन् मुहूर्त्ते पुरसुन्दरीणा-
मीशानसंदर्शनलालसानाम्"॥
इति कुमारे ७।५६।
"तत्रेशानं समभ्यर्च्य त्रिरात्रोपोषितो नरः"।
इति भारते।) रुद्रादशरुद्रान्तर्गतरुद्रविशेषः। इति पुराणं॥ (यथा, आश्वलायनगृह्यसूत्रे।४।९।
"हराय मृडाय शर्व्वाय शिवाय भवाय महादेवाय उग्राय भीमाय पशुपतये रुद्राय शङ्करायेशानाय स्वाहा" इति। दूतमूर्त्तिधरः शिवः। स च धूम्रजटिलः। यथा, मार्कण्डेये। ८८।२३॥
"सा चाह धूम्रजटिलमीशानमपराजिता।
दूतत्वं गच्छ भगवन् पार्श्वं शुम्भनिशुम्भयोः"।)
शिवाष्टमूर्त्त्यन्तर्गतसूर्य्यमूर्त्तिः। इति स्मृतिरागमश्च॥ (परमेश्वरः। यथा, कृष्णयजुर्व्वेदे।
"सर्व्वेन्द्रियगुणाभासं सर्व्वेन्द्रियविवर्जितम्।
सर्व्वस्य प्रभुमीशानं सर्व्वस्य शरणं वृहत्"।
तथा च महाभारते १।१।२२।
"आद्यं पुरुषमीशानं पुरुहूतं पुरुष्टुतम्।
ऋतमेकाक्षरं ब्रह्म व्यक्ताव्यक्तं सनातनम्"॥
साध्यपुत्रो देवताभेदः। यथा,—
"धर्म्मात्स्यगुरुक्रुवः कामः साध्या साध्यान् व्यजायत।
प्रसवं च्यवनश्चैव ईशानं सुरभिं तथा"॥

इति भारते ।) शमीवृक्षः । इति राजनिर्घण्टः ॥

ईशानी, स्त्री, (ईशानस्य पत्नी ।) दुर्गा । इति शब्द ॥ शमीवृक्षः । इति राजनिर्घण्टः ॥

ईशिता, स्त्री, (ईशिनो भावः । ईशिन् + तल् ।) ईशित्वं । अणिमाद्यष्टैश्वर्य्यान्तर्गतैश्वर्य्यविशेषः । इति शब्दरत्नावली ॥

ईशिता, [ऋ] त्रि, (ईष्टे इति । ईश् + तृच् । ) ईश्वरः । प्रभुः । अधिपतिः । इत्यमरः ॥ (यथा माघे । २ । ६५ ।

"तदीशितारं चेदीनां भवांस्तमवमंस्त मा" ।)

ईशित्वं, क्ली, (ईशिनो भावः । ईशिन् + त्व ।) ईशिता । देवानामष्टैश्वर्य्यान्तर्गतैश्वर्य्यविशेषः । इति हेमचन्द्रः ॥ (यदुक्तं ।

"अणिमा लघिमा व्याप्तिः प्राकाम्यं महिमा तथा ।

ईशित्वञ्च वशित्वञ्च तथा कामावसायिता" ॥)

प्रभुत्वम् । येन स्थावरादिसर्व्वभूतानि आज्ञाकारीणि भवन्ति । इत्यमरटीकासारसुन्दरी ॥

ईश्वरं, त्रि, (ईश् + वरच् ।) आढ्यं ।

("दरिद्रान् भर कौन्तेय मा प्रयच्छेश्वरे धनम्" ।

इति हितोपदेशे । १ । ७६ ।) स्वामि । इति विश्वमेदिन्यौ ॥ (यथा महाभारते ।

"अहं चैव हि यथान्यन्ममास्ति वसु किञ्चन ।

तत्सर्व्वं तव विश्वब्धं कुरु प्रणयमीश्वर" ॥

नियन्ता । प्रभुः ।

"ईश्वरः सर्व्वभूतानां धर्म्मकोषस्य गुप्तये" ।

इति मनुः । १ । ९९ ॥)

ईश्वरः, पुं, (ईष्टे इति । ईश् + वरच् । यद्वा, अश्नुते व्याप्नोतीति अशधातोर्वरट् उपधाया ईत्वं च ।) शिवः । (यथा, कुमारे । ७ । ९१ ।

"तद्गौरवान्मङ्गलमण्डनश्रीः

सा पस्पृशे केवलमीश्वरेण" ।

"अथेश्वरं देवगणाः सह सप्तर्षिभिर्विभुम्" ॥

"वाग्भिः शिवः स्तुवन् यावच्छिवे भावे शिवः स्थितः ।

शिवं शिवाय भूतानां स्थितं ज्ञात्वा कृताञ्जलिः ॥

क्रोधाभिषक्तवान् देवमहं किं करवाणि ते" ।

"तमुवाचेश्वरः क्रोधं ज्वरो लोके भविष्यसि" ॥

इति चरके चिकित्सास्थाने तृतीयाध्यायः ॥

"ततः क्रुद्धा प्रजाः शेषं तदा तं क्रोधमीश्वरः ।

विन्यस्तवान् स भूतेषु स्थावरेषु चरेषु च" ॥

इति सुश्रुते कल्पस्थाने तृतीयाध्यायः ॥)

कन्दर्पः । इति मेदिनी ॥

"विशुद्धसत्त्वप्रधानाज्ञानोपहितचैतन्यम्" ।

इति वेदान्तः ॥ न्यायमते ईश्वरगुणाः । संख्यादिपञ्च बुद्धिः इच्छा यत्नश्च । ईश्वरस्वरूपं ब्रह्मशब्दे द्रष्टव्यम् ॥ ऐश्वर्य्यशाली । तत्पर्य्यायः । स्वामी १ अर्य्यः २ नियुत्वान् ३ इनइनः ४ । इति वेदनिघण्टौ २ अध्यायः ॥ श्रीहरिः । यथा ।

ब्रह्मोवाच ।

"हरे कथय देवेश देवदेव ईश्वर ।

को ध्येयः कश्च वै पूज्यः कैस्तैस्तुष्यते परः" ॥

इत्यादि । श्रीहरिरुवाच ।

"शृणु रुद्र प्रवक्ष्यामि ब्रह्मणा च सुरैः सह ।

अहं हि देवो देवानां सर्व्वलोकेश्वरेश्वरः ॥

अहं ध्येयश्च पूज्यश्च स्तुतोऽहं स्तुतिभिः सुरैः ।

अहं प्रपूजितो रुद्र ददामि परमां गतिम्" ॥

इत्यादि च गारुडे २ अध्यायः ॥

(स्वनामख्यातो नृपतिभेदः । यथा, महाभारते ।

"मतिमांश्च मनुष्येन्द्रः ईश्वरश्चेति विश्रुतः" । )

ईश्वरा, स्त्री, (ईश्वर + टाप् । पुंयोगविवक्षाभावात् न ङीष् ।) दुर्गा ।

("विन्ध्यस्तम्भक्षमशैलशिरीश्वरायाः

वक्षोरगपतिसरेव करेण पाणिः" ।

इति किराते । "ईश्वरायाः गौर्य्याः, क्षेमभालेत्यादिना वरच् । पुंयोगविवक्षाभावात् न ङीप्" इति तट्टीका ॥) लक्ष्मीः । सरस्वत्यादिशक्तिः । इति शब्दरत्नावली ॥

ईश्वरी, स्त्री, (ईष्टे इति + ईश् + वनिप् । वनोरचेति ङीपौ ।) ईश्वरा । इति शब्दरत्नावली ॥ ("त्वमीश्वरी देवि ! चराचराणाम्" । इति मार्कण्डेयपुराणं ॥ ९१ । २ ।) लिङ्गिनीवृक्षः । वन्ध्याकर्कोटकीवृक्षः । रुद्रजटालता । नाकुलीकन्दः । इति राजनिर्घण्टः ॥

ईष उ उञ्छे । इति कविकल्पद्रुमः ॥ (तुदां-परं-सकं-सेट् । ) उञ्छ उद्धृतशस्यशेषावहरणं । ईषति धान्यं दीनः । इति दुर्गादासः ॥

ईष ङ दाने । (भ्वादिं-आत्मं-सकं-सेट् ।) ईषते । हिंसने । समर्थे । इति कविकल्पद्रुमः ॥ दीर्घादिः । ङ ईषते । ईषणो दर्शनं । इति दुर्गादासः ॥

ईषः, पुं, (ईष् + क ।) इषः । आश्विनमासः । इत्यमरटीकायां मथुरानाथः ॥ (स्वनामख्यातः उत्तममनोर्दशपुत्रमध्ये एकः पुत्रः । यथा,—

'औत्तमेयान् महाराज ! दश पुत्रान् मनोरमान्' ॥१८

"ईष ऊर्ज्जस्तनूर्ज्जश्च मधुमाधव एव च ।

शुचिः शुक्रः सहश्चैव नभस्यो नभ एव च" ॥ १९

इति हरिवंशे ७ अध्यायः ॥)

ईषत् अ, (ईषणमिति । ईष् + अत् ।) अल्पम् । किञ्चित् । मनाक् । इत्यमरः ॥

("तं दृष्ट्वा कुपितं पुत्रमीषत्प्रस्फुरिताधरं" ।

इति विष्णुपुराणे ॥ १।११।१२ ।

"ईषत् सहासममलं परिपूर्णचन्द्र-

बिम्बानुकारि कनकोत्तमकान्तिकान्तं" ।

इति मार्कण्डेयपुराणे, शक्रादिमाहात्म्यम् ॥

"हृदि तिष्ठति यच्छुद्धं रक्तमीषत् सपीतकम्" ।

इति चरके सूत्रस्थाने सप्तदशाध्यायः ॥)

ईषत्करः, पुं, (ईषत् + कृ + खल् ।) अल्पव्ययः । तत्पर्य्यायः । लेशः २ उपपदं ३ गन्धः ४ अनुबन्धः ५ ।) इति त्रिकाण्डशेषः । ईषल्लभ्यमानं वस्तु । इति व्याकरणं ॥

ईषत्पाण्डुः, पुं, (ईषत् पाण्डुः ।) धूसरवर्णः । इत्यमरः ॥

ईषदुष्णं, त्रि, (ईषच्च तदुष्णञ्चेति ।) अल्पतप्तं । तत्पर्य्यायः । कोष्णं २ कवोष्णं ३ कदुष्णं ४ मन्दोष्णं ५ । इति हेमचन्द्रः ॥

ईषद्रक्तः, पुं, (ईषत् रक्तः ।) अल्पलोहितवर्णः । तत्पर्य्यायः । अव्यक्तरागः २ अरुणः ३ । इत्यमरः ॥

ईषा, स्त्री, (ईष + क + टाप् ।) लाङ्गलदण्डः । इत्यमरः ॥ लाङ्गलेर ईष् इति भाषा ॥ (ऋग्वेदे ।

"हिरण्ययी वां रभिरीषा अक्षो" ।

रथस्यावयवभेदः । यथा, ऋग्वेदे । १० । १३५ । ३ । "रथः एकेषः" ।

"ईषामन्ये हयानन्ये कूबरान्ये न्यपातयन्" ।

इति महाभारते । वनपर्व्वणि २४० ।३०। ईषेति क्वचित् पाठः ॥)

ईषादन्तः, पुं, (ईषेव दन्तो यस्य ।) दीर्घदन्तहस्ती । तत्पर्य्यायः । उद्दन्तः २ । इति हेमचन्द्रः ॥

("ईषादन्तान् हेमकक्षान् पद्मवर्णान् कुथावृतान्

ईषादन्ता महाकायाः सर्व्वे वास्तवरेणवः" ॥

इति च भारते ॥)

ईषिका, स्त्री, (ईष + क्विकन् ।) हस्तिचक्षुर्गोलकः । इत्यमरटीकायां रायमुकुटः ॥ तूलिका । इत्यमरः ॥ अस्त्रविशेषः । यथा,—

"सोऽभिमन्त्र्य शरेषीकामीषिकास्त्रेण वीर्य्यवान् ।

काकं तमभिसन्धाय ससर्ज पुरुषर्षभ" ! ॥

इति रामायणं ॥

ईषिरः, पुं, (ईष + किरच् ।) अग्निः । इति त्रिकाण्डशेषः ॥

ईषीका, स्त्री, (ईष + ईकन् । औणादिकप्रत्ययोऽयम् । पर्पटीकादित्वात् साधुः ।) तूलिका । वीरणादिशलाका इत्यन्ये । आवर्त्तितमनावर्त्तितं वा सवर्णं धातुं यस्मिन् क्षिप्यते तदेवान्ये । आवर्त्तितसवर्णं द्रवाकारं यत्र निःक्षिप्यते तदेवेति केचित् । इत्यमरटीकायां भरतः ॥

ईष्मः, पुं, (ईष + मक् ।) कामदेवः । वसन्तकालः । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥

ईह ङ चेष्टे । इति कविकल्पद्रुमः ॥ (भ्वादिं-आत्मं-सकं-सेट् ।) दीर्घादिरकर्म्मकः । ङ ।

"ऐहिष्ट तं कारयितुं कृतात्मा

क्रतुं नृपः पुत्रफलं मुनीन्द्रम्" ।

इति भट्टिः । १ । ११ ॥

सकर्म्मकोऽपि । "आत्मं भ्रमादपि नेहते" । इति जयदेवः ॥ "सर्व्वः स्वार्थं समीहते" इति माघः । २।६५ ॥ इति दुर्गादासः ॥

ईहा, स्त्री, (ईह + अ + टाप् ।) चेष्टा । उद्यमः ।

("इच्छया जायते काम ईहयार्थो विवर्द्धते ।

श्रद्धया वर्द्धते धर्म्मस्तेषां फलमिदं त्रिधा" ॥

इति रामायणे । २ काण्डे । तथा च मनुः ८।१७० ।

"राज्ञो धनार्थिनः यष्टे वैश्यस्येहार्थिनोऽक्षमे" ।

"वैश्यस्य वञ्चनाद्यादिचेष्टार्थिनः" इति तट्टीकायां कुल्लुकभट्टः ।) वाञ्छा । इच्छा । इति त्रिकाण्डशेषः ॥

("धर्म्मार्थं यस्य वित्तेहा वरं तस्य निरीहता ।

प्रक्षालनाद्धि पङ्कस्य श्रेयो न स्पर्शनं नृणाम्" ॥

इति महाभारते । ३ । २ । ४८ ॥)

ईहामृगः, पुं, (ईहाप्रधानो मृगो वृकः ।) कुक्कुरप्रमाणहरिणाकृतिपिङ्गलवर्णजन्तुविशेषः । इति भरतः ॥ धौंच इति ख्यातः । तत्पर्य्यायः । कोकः २ वृकः ३ । इत्यमरः ॥

("पुत्रकस्य सुता राजन् ध्रुवनामा प्रकीर्त्तिताः ।
सिंहाः किम्पुरुषा व्याघ्रा यक्षा ईहामृगास्तथा" ॥
इति महाभारते । आदिपर्व्वणि ॥) (नायको मृग-
वदलभ्यामपि नायिकामीहते वाञ्छत्यत्र इति ।)
नाटकरूपकभेदः । इति मेदिनीकरहेमचन्द्रौ ॥
(तल्लक्षणं यथा, साहित्यदर्पणे षष्ठपरिच्छेदे ।
"ईहामृगो मिश्रवृत्तश्चतुरङ्कः प्रकीर्त्तितः ।
मुखप्रतिमुखे सन्धी तत्र निर्व्वहणं तथा ॥
नरदिव्यावनियमौ नायकप्रतिनायकौ ।
ख्यातौ धीरोद्धतावन्त्यो गूढ़भावादयुक्तकृत् ॥
दिव्यस्त्रियमनिच्छन्तीमपहारादिनेच्छतः ।
शृङ्गाराभासमप्यस्य किञ्चित् किञ्चित् प्रदर्शयेत् ॥
पताका नायका दिव्या मर्त्त्या अपि दशोद्धताः ।
युद्धमानीय संरम्भं परं व्याजान्निवर्त्तयेत् ॥
महात्मानो वधप्राप्ता अपि वध्याः स्युरत्र नो ।
एकाङ्को देव एवात्र नेतेत्याहुः परे पुनः ॥
दिव्यस्त्रीहेतुकं युद्धं नायकाः षड़ितीतरे" ॥
"मिश्रं ख्याताख्यातम् । अन्यः प्रतिनायकः ।
पताकानायकास्तु नायकप्रतिनायकयोर्मिलिता
दश । नायको मृगवदलभ्यां नायिकामत्र ईहते
वाञ्छतीति ईहामृगः । यथा—कुसुमशेखर-
विजयादि" ॥)
ईहावृकः, पुं, (ईहाप्रधानो वृकः ।) ईहामृगः ।
इति शब्दरत्नावली ॥

---

## उ

उ, उकारः । पञ्चमस्वरवर्णः । अस्योच्चारणस्थानं ओष्ठः ।
(यथा, शिक्षायाम् ।
"कण्ठ्या वहाविचुयशास्तालव्या ओष्ठजावुपू" ।
तथा च मुग्धबोधे ।
"उभयं पवममवा ओ औष्ठाः" ।)
स च ह्रस्वो दीर्घः प्लुतश्च भवति । (एवं त्रिधापि
प्रत्येकं उदात्तानुदात्तस्वरितभेदेन नवप्रकारकः
पुनः प्रत्येकं अनुनासिकाननुनासिकभेदात् अष्टा-
दशविध एव भवति । अस्य ध्यानमाह ।)
"उकारं परमेशानि अधःकुण्डलिनी स्वयम् ।
पीतचम्पकसङ्काशं पञ्चदेवमयं सदा ॥
पञ्चप्राणमयं देवि चतुर्व्वर्गप्रदायकम्" ।
इति कामधेनुतन्त्रम् ॥ ( वङ्गीयभाषायां ) अस्य
लेखनप्रकारो यथा,—
"ऊर्द्धाधो मध्यतः कुञ्चा रेखा वामगता शुभा ।
तिष्ठन्ति वायुवह्नीन्द्राः शक्तिर्माया परा स्मृता" ॥
इति वर्णोद्धारतन्त्रम् ॥ अस्य नामान्तराणि यथा,—
"उः शङ्करो वर्त्तुलाक्षी भूतः कल्याणवाचकः ।
अमरेशो दक्षकर्णः षड्वक्त्रो मोहनः शिवः ॥
उग्रः प्रभुर्धृतिर्विष्णुर्विश्वकर्म्मा महेश्वरः ।
शत्रुघ्नश्चटिका पुष्टिः पञ्चमी वह्निवासिनी ॥
कामघ्नः कामना चेशो मोहिनी विघ्नहृन्मही ।
उड्डीशः कुटिला श्रोत्रं पारदीपो वृषो हरः" ॥
इति तन्त्रोक्तवर्णाभिधानम् ॥ (मातृकान्यासेऽस्य
दक्षिणकर्णे न्यासम् । यदुक्तं मातृकान्यासमन्त्रे
"उं नमो दक्षिणकर्णे ऊं नमो वामकर्णे" ।)
उ, ङ, शब्दे । इति कविकल्पद्रुमः ॥ (भ्वादिं-आत्मं
अकं-अनिट् ।) ङ अवते गौः । इति दुर्गादासः ॥
उ, व्य, (उ शब्दे + क्विप् + तुक् च ।) सम्बोधनम् ।
रोषोक्तिः । अनुकम्पा । नियोगः । पदपूरणं ।
पादपूरणं । इति मेदिनी ॥ प्रश्नः । अङ्गीकारः ।
इति हेमचन्द्रः ॥ इदमेव उञ् इति ख्यातं ॥
("उमेति मात्रा तपसो निषिद्धा,
पश्चादुमाख्यां सुमुखी जगाम" ॥
इति कुमारे । १ । २६ ।)
उः, पुं, (अतति विश्वमयत्वात् सर्व्वं व्याप्नोतीति ।
अत् + ड ।) शिवः । इति त्रिकाण्डशेषः ॥
("अकारो विष्णुरुद्दिष्ट उकारस्तु महेश्वरः ।
मकारेणोच्यते ब्रह्मा प्रणवेन त्रयो मताः" ॥
इति पुराणे ।) ब्रह्मा । इति अजयैकाक्षरकोषः ॥
उकनाहः, पुं, पीतरक्तवर्णाश्वः । स एव क्वचित्
कृष्णरक्तच्छविः । इति हेमचन्द्रः ॥
उक्तं, क्ली, (वच् + क्त ।) एकाक्षरच्छन्दः । इति
मेदिनी ॥ वाक्यम् ॥
उक्तः, त्रि, (उच्यते यः । वच् + कर्म्मणि क्त ।) कथितः ।
तत्पर्य्यायः । भाषितः २ उदितः ३ जल्पितः ४
आख्यातः ५ अभिहितः ६ लपितः ७ इत्यमरः ॥
गदितः ८ निगदितः ९ ईरितः १० उदीरितः ११
भणितः १२ लपितः १३ रपितः १४ रठितः १५
मटितः १६ रटितः १७ व्याहृतः १८ ॥
(यथा, मार्कण्डेयपुराणे देवीमाहात्म्ये ८६ । ९ ।
"इत्युक्तः सोऽभ्यधावत्तामसुरो धूम्रलोचनः" ॥
तथा, तत्रैव ८५ । ६६ ।
"इत्युक्ता सा तदा देवी गम्भीरान्तःस्मिता जगौ" ॥)
उक्तिः, स्त्री, (वच् + भावे क्तिन् ।) कथनं । तत्-
पर्य्यायः । व्याहारः २ लपितं ३ भाषितं ४ वचन
५ वचः ६ । इत्यमरः ॥ ("अतिसंश्लिष्टविरक्तयो-
रुक्तिभिः" । इति मुक्तावलीसूचना । तथा, चामरे ।
"एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ" ॥)
उक्थं, क्ली, (वच् + थक् ।) सामवेदः । इत्युणादि-
कोषः ॥ (यथा, ऋग्वेदे । ३ । ६४ । ७ ।
"विप्रा उक्थेभिः कवयो गृणन्ति" ॥
स्तोत्रम् । यथा,
"अथ योऽसावन्तरक्षिणि पुरुषो दृश्यते सैवर्क्
तत्साम तदुक्थम् तत् उक्थं तद्ब्रह्म" । इति
छान्दोग्ये उपनिषदि ॥)
उक्थशाः [स्] पुं, (उक्थैरुक्थानि वा शंसति ।
सप्ते श्वेतवहोक्थशस्पुरोडाशोण्विशिष्टश्च श्वेत-
वहादीनां डस् पदस्येति डस्थम् । यत्र पदत्वं
भावि तत्र डस् । अन्यत्र शिनः ।) यजमानः ।
इति व्याकरणं ॥ (यथा, ऋग्वेदे । ७ । १९ । ९ ।
"नरः शंसन्त्युक्थशास उक्था" ।)
उक्था, स्त्री, (वच् + थक् + टाप् ।) छन्दोविशेषः ।
एकाक्षरपादयुक्ता । सा द्विविधा । श्रीः १ सर्व्व-
गुरुः । यथा श्रीस्ते सास्तां । इति छन्दोमञ्जरी ।
उः २ सर्व्वलघुः । यथा । उरवतु । इति छन्दो-
ऽर्णवः ॥
उक्ष इति । (भ्वादिं-परं-सकं-सेट् ।) इति कवि-
कल्पद्रुमः ॥ उक्षति शस्यं मेघः । सट् सेकः ॥ इति
दुर्गादासः ॥ ("उक्षाम्बभूवाभगरस्य मार्गान्" ।
इति भट्टिकाव्ये । ३ । ५ ॥)
उक्षः त्रि, ( उक्ष + अच् । ) सिक्तः । धौतः ॥
उक्षतरः, पुं, (उक्षन् + तरप् ।) महावृषः । इति
हेमचन्द्रः ॥
उक्षा, [न्] पुं, (उक्ष + कनिन् ।) वृषः । इत्यमरः ।
(यथा, ऋग्वेदे ८।७२।९। "उक्षा मिमाति प्रति-
यन्ति धेनवः" । तथा च कुमारे ७।७० ।
"तमातपक्लान्तमनातपत्र-
मारूढ़वाहीधिकिमाणिवोष्णाः" ॥)
ऋषभौषधिः ॥ इति राजनिर्घण्टः ॥
उख, गतौ । इति कविकल्पद्रुमः ॥ (भ्वादि-परं-सकं-
सेट् ।) पञ्चमस्वरी ॥ ओखति । इति दुर्गादासः ॥
उख, इ, गतौ । इति कविकल्पद्रुमः ॥ (इदित्-भ्वादि
-परं-सकं-सेट् ।) पञ्चमस्वरी । इ उङ्खति । इति
दुर्गादासः ॥
उखर्व्वलः, पुं, तृणविशेषः । तत्पर्य्यायः । उखलः २
भूरिपत्रः ३ सुतृणः ४ तृणोत्तमः ५ । अस्य गुणाः ।
बलदातृत्वं । वणिकारित्वं । पशूनां सर्व्वदा हित-
कारित्वञ्च । इति राजनिर्घण्टः ॥
उखा, स्त्री, (उख + क + टाप् ।) स्थाली । इत्य-
मरः ॥ हाँड़ि इति भाषा । ( यथा, सुश्रुते ।
"इद्धः सतेजसा वह्निरुखागतमिवोदकम्" ॥)
उख्यं, त्रि, (उखायां संस्कृतं । उखा + यत् ।) स्थाली-
पक्वमांसादि । तत्पर्य्यायः । पैठरं २ । इत्यमरः ॥
( "सूल्यमुख्यञ्च होमवान्" । इति भट्टिः ४।९।
उखायां भवः । अग्निः । यथा, अथर्व्ववेदे ।४।१४।२।
"उख्यान् (अग्नीन्) हस्तेषु बिभ्रतः" ॥)
उग्रं, त्रि, (उच्यति क्रुधा समवैति । उच समवाये
+ ऋज्रेन्द्रेत्यादिना रक्, गश्चान्तादेशः ।) रौद्रं ।
उत्कटं । इत्यमरो मेदिनी च ॥
("लोकेषु प्रथितं घोरं तपस्तस्य भविष्यति" ।)
इति रामायणे ॥
"तामिस्रादिषु चोग्रेषु नरकेषु विवर्त्तनम्" ॥
इति मनुः ।१२।७५। वध्यादिघाती । दारुणकर्म्मा ।
यथा मनुः ४।२१२ ।
"उग्रान्नं सूतिकान्नञ्च पर्य्याचान्तमनिर्द्दशम्" ॥)
उग्रं, क्ली, वत्सनाभनामविषं । इति राजनिर्घण्टः ॥
उग्रः, पुं, (उच + रक् । गश्चान्तादेशः ।) महादेवः ।
वायुमूर्त्तिरयं । इति भविष्यपुराणम् । ( यथा,
महाभारते ।१३।शिवसहस्रनामकथने ।१७।९ ।
"उग्रो वंशकरो वंशो वंशनादो ह्यनिन्दितः" ॥
नृपविशेषः । इति मार्कण्डेये । ७६ । ४७ ।
क्षत्रियात् शूद्रायां जातः जातिविशेषः । इत्यमरः ॥
आगुरि इति भाषा । (तथा च मनुः । १०।९।
"क्षत्रियात् शूद्रकन्यायां क्रूराचारविहारवान् ।
क्षत्रशूद्रवपुर्जन्तुरुग्रो नाम प्रजायते" ॥)
अस्य कर्म्म बिलवासिगोधादिवधबन्धनम्" ।
तथाच मनुः । १०।४९ ।
"क्षत्त्रोग्रपुक्कसानान्तु बिलौकोवधबन्धनम्" ॥

नक्षत्रगणविशेषः । स च पूर्व्वफल्गुनीपूर्व्वाषाढ़ा-
पूर्व्वभाद्रपदमघाभरण्यात्मकः । इति ज्योतिषं ॥
क्रोधाक्रान्तश्च । इति शब्दचन्द्रिका ॥ केरल-
देशः । इति हेमचन्द्रः ॥ ( रुद्रः । उग्रोदेवः ।
स्वनामख्यातो दानवविशेषः । यथा हरिवंशे ।
"वेगवान् केतुमांश्चोग्रः सोग्रव्यग्रो महासुरः" ॥
धृतराष्ट्रस्य शतपुत्रेषु एकः । यथा, धृतराष्ट्रपुत्र-
नामकथने १ । ११७ । ११ । महाभारते ।
"उग्रभीमरथौ वीरौ वीरबाहुरलोलुपः" ॥
नरेन्द्रादित्याख्यस्य काश्मीरराजस्य स्वनामख्यातो
गुरुः । यथा, राजतरङ्गिण्याम् ।
"दिव्याद्युग्रहभाग्याभिधो यस्य गुरुर्व्वभात्" ॥
शिवः । इति महाभारते । १३ । १७ । ५९ ॥
स्त्री, योगिनीभेदः । यथा, कालिकायां । ६० अध्यायः ।
"महाकाल्यथ रुद्राणी उग्रा भीमा तथैव च" ।)

उग्रकाण्डः, पुं, (उग्रः काण्डो यस्य ।) कारवेल्लः ।
इति राजनिर्घण्टः ॥ करेला इति भाषा । कारवेल्ल-
शब्देऽस्य गुणादिकं ज्ञेयम् ।)

उग्रगन्धं, क्ली, (उग्रो गन्धो यस्मिन् ।) हिङ्गु । इति
राजनिर्घण्टः ॥

उग्रगन्धः, पुं, (उग्रस्तीव्रः गन्धो यस्मिन् ।) लशुनः ।
कट्फलः । अर्ज्जकवृक्षः । इति राजनिर्घण्टः ॥
चम्पकः । इति शब्दचन्द्रिका ॥ उत्कटगन्धयुक्ते
त्रि ॥ (यथा, हारीते प्रथमस्थानेऽष्टमाध्यायः ।
"उग्रगन्धं पुराणं स्याद्दशवर्षोषितं घृतम् ।
यथा यथा जरां याति गुणवत्स्यात्तथा तथा" ॥ )

उग्रगन्धा, स्त्री, (उग्रः गन्धो यस्याः ।) अजमोदा ।
वचा । छिक्किकौषधी । इति मेदिनी ॥ अज-
गन्धा । यवानी । इति राजनिर्घण्टः ॥ ("वचा,
यमानी च" । इति भावप्रकाशे पूर्व्वखण्डे अनेकार्थ-
नामवर्गः ॥)

उग्रचण्डा, स्त्री, (उग्रा चण्डा कोपना स्त्री ।) देवी-
भेदः । यथा महिषासुरं प्रति भगवतीवाक्यम् ।
"उग्रचण्डेति या मूर्त्तिर्भद्रकाली ह्यहं पुनः ।
यया मूर्त्त्या त्वां हनिष्ये सा दुर्गेति प्रकीर्त्तिता ॥
एतासु मूर्त्तिषु सदा पादलग्नो नृणां भवान् ।
पूज्यो भविष्यसि त्वं वै देवानामपि रक्षसाम् ॥
आदिसृष्टौ उग्रचण्डामूर्त्त्या त्वं निहतः पुरा ।
द्वितीयसृष्टौ तु भवान् भद्रकाल्या मया हतः ॥
दुर्गारूपेणाधुना त्वां हनिष्यामि सवाहनम्" ।
इत्यादि ॥ * ॥ तस्याः प्रादुर्भावो यथा ।
श्रीभगवानुवाच ।
"उग्रचण्डा तु या मूर्त्तिरष्टादशभुजाऽभवत् ।
सा नवम्यां पुरा कृष्णपक्षे कन्यां गते रवौ ॥
प्रादुर्भूता महाभागा योगिनीकोटिभिः सह" ॥*॥
अनया मूर्त्त्या दक्षयज्ञभङ्गः कृतः । यथा,—
"आषाढ़स्य तु पूर्णायां सत्रं द्वादशवार्षिकम् ।
दक्षः कर्त्तुं समारेभे तत्र सर्व्वे दिवौकसः ॥
ततोऽहं न वृतस्तेन दक्षेण सुमहात्मना ।
कपालीति सती चापि सज्जायेति च नो वृता ॥
ततो रोषसमायुक्ता प्राणांस्तत्याज सा सती ।
त्यक्तदेहा सती चापि उग्रमूर्त्तिस्तदाभवत् ॥
ततः प्रवृत्ते यज्ञे तु तस्मिन् द्वादशवार्षिके ।
नवम्यां कृष्णपक्षे तु कन्यायां चोग्रमूर्त्तिधृक् ॥
योगनिद्रा महामाया योगिनीकोटिभिः सह ।
सतीरूपं परित्यज्य यज्ञभङ्गमथाकरोत् ॥
शङ्करस्य गणैः सर्व्वैः सहिता शङ्करेण च ।
स्वयं बभञ्ज सा देवी महासत्रं महात्मनः ॥
ततो देव्या महाक्रोधे व्यतीते त्रिदिवौकसः ।
पूजयाञ्चक्रुरतुलां देवीं पूर्व्वोदितेन वै ॥
पूर्व्वोदितविधानेन पूजामस्या दिवौकसः ।
कृत्वैव परमामापुर्निर्वृतिं दुःखनाशने ॥
एवमन्यैरपि सदा कार्य्यं देव्याः प्रपूजनम् ।
विभूतिमतुलां प्राप्तुं चतुर्व्वर्गप्रदायकम् ॥
यो मोहादथवालस्याद्देवीं दुर्गां महोत्सवे ।
न पूजयति दम्भाद्वा द्वेषाद्वाप्यथ भैरव ॥
क्रुद्धा भगवती तस्य कामानिष्टान्निहन्ति वै ।
परत्र च महामायावशीभूत्वा स जायते ॥
अष्टम्यां रुधिरैर्मांसैर्म्महामांसैः सुगन्धिभिः ।
पूजयेद्बहुजातीयैर्ब्बलिभिर्भोजनैः शिवाम्" ॥
इत्यादि ॥ * ॥ तन्मन्त्रो यथा,—
"भद्रकालीमुग्रचण्डां महामायां महोत्सवे ।
नेत्रबीजन्तु सर्व्वासां पूजने परिकीर्त्तितम् ।
मन्त्रं यथोग्रचण्डायाः पृथक् त्वं शृणु भैरव ॥
आद्यद्वयं नेत्रबीजं मन्त्रस्योपान्त्यमक्षरे ।
वह्निकान्तस्वरेन्दुविन्दुभ्यां मन्त्रमौग्रकम्" ॥
इत्यादि च कालिकापुराणे ५९ । ६० अध्यायौ ॥

उग्रतारा, स्त्री, ( उग्रादपि भयात् भक्तान् त्राति
तारयति वा या ॥ उग्र+तृ+णिच्+अच्+
टाप् । यथा, निरुक्तौ ।
"उग्रादपि भयात् त्राति यस्मात् भक्तान् सदा-
म्बिका" ।) देवीविशेषः । अस्या उत्पत्त्यादि
यथा,—
"सर्व्वेषामेव देवानां यज्ञभागानपाहरत् ।
स्वयं शुम्भो निशुम्भश्च दिक्पालत्वं तथा गतौ ॥
सर्व्वे सुरगणाः सेन्द्रास्ततो गत्वा हिमाचलम् ।
गङ्गावतारनिकटे महामायां प्रतुष्टुवुः ॥
अनेकसंस्तुता देवी तदा सर्व्वामरोत्करैः ।
मातङ्गवनितामूर्त्तिर्भूत्वा देवानपृच्छत ॥
युष्माभिरमरैरत्र स्तूयते का च भाविनी ।
किमर्थमागता यूयं मातङ्गस्याश्रमं प्रति ॥
एवं ब्रुवन्त्या मातङ्ग्यास्तस्यास्तु कायकोषतः ।
समुद्भूताब्रवीद्देवी मां स्तुवन्ति सुरा इति ॥
शुम्भो निशुम्भो ह्यसुरौ बाधेते सकलान् सुरान् ।
तस्मात्तयोर्वधायाहं स्तूयेऽत्र सकलैः सुरैः ॥
विनिःसृतायां देव्यान्तु मातङ्ग्याः कायतस्तदा ।
भिन्नाञ्जननिभा कृष्णा साभूद्गौरी क्षणादपि ॥
कालिकाख्याभवत् सापि हिमाचलकृताश्रया ।
तामुग्रतारामृषयो वदन्तीह मनीषिणः ॥
उग्रादपि भयात्त्राति यस्माद् भक्तान् सदाम्बिका ।
एतस्याः प्रथमं बीजं कथितं तन्त्रमेव च" ॥ * ॥
"एषैवैकजटाख्यातिर्यस्मात्तस्या जटाधिका ।
शृणु त्वं चिन्तनं चास्याः सम्यक् वेतालभैरवौ ॥
यथा ध्यात्वा महादेवीं भक्तः प्राप्नोत्यभीप्सितम् ।
चतुर्भुजां कृष्णवर्णां मुण्डमालाविभूषिताम् ॥
खड्गं दक्षिणपाणिभ्यां बिभ्रतीन्दीवरं त्वधः ।
कर्त्रीञ्च खर्परञ्चैव क्रमाद्वामेन बिभ्रतीम् ॥
द्यां लिखन्तीं जटामेकां बिभ्रतीं शिरसा स्वयम् ।
मुण्डमालाधरां शीर्षे ग्रीवायामपि सर्व्वदा ॥
वक्षसा नागहारन्तु बिभ्रतीं रक्तलोचनाम् ।
कृष्णवस्त्रधरां कट्यां व्याघ्राजिनसमन्विताम् ॥
वामपादं शवहृदि संस्थाप्य दक्षिणं पदम् ।
विन्यस्य सिंहपृष्ठे तु लेलिहानां शवं स्वयम् ॥
साट्टहासमहाघोरा रावयुक्तातिभीषणा ।
चिन्त्योग्रतारा सततं भक्तिमद्भिः सुखेप्सुभिः" ॥*॥
"एतस्याः संप्रवक्ष्यामि या अष्टौ योगिनीस्तु ताः ।
महाकाल्यथ रुद्राणी उग्रा भीमा तथैव च ।
घोरा च भ्रामरी चैव महारात्रिश्च सप्तमी ॥
भैरवी चाष्टमी प्रोक्ता योगिनीस्ताः प्रपूजयेत्" ।
इति कालिकापुराणे ६० अध्यायः ॥ * ॥ अपिच
"महापीठस्य पूर्व्वस्यां भूमिपीठे व्यवस्थिता ।
"ललितं शुभावर्त्तं कामाख्यानाभिमण्डलम् ॥
यत्रोग्रतारारूपेण रमते परमेश्वरी ।
तत्र तेनैव रूपेण पूजितव्या शुभात्मिका ॥
तस्यास्तु बीजं पूर्व्वस्मिन् उत्तरे प्रतिपादितम् ।
रूपं शृणु नरश्रेष्ठ येन ध्येया सदाशिवा ॥
कृष्णा लम्बोदरी दीर्घा विरला रक्तदन्तिका ।
चतुर्भुजा कृष्णाङ्गी तु दक्षे कर्त्तृकखर्परौ ॥
खड्गं चेन्दीवरं वामे शीर्षे त्वेकजटा पुनः ।
वामपादं शवस्योर्व्वोर्निधायोत्थाय दक्षिणम् ॥
शवस्य हृदये न्यस्य साट्टहासं प्रकुर्व्वती ।
नागहारशिरोमालाभूषिता कामदा परा ॥
त्रिकोणं मण्डलं चास्या ॐकारमध्यबीजकम् ।
द्वारे नानायोगिनीनां नामान्यस्यास्तु तन्त्रके ॥
ज्ञेयानि नरशार्दूल तत्रोक्तं वाक्यगोचरे" ।
इति कालिकापुराणे कामाख्याकल्पनिर्णये ८१
अध्यायः ॥ * ॥ सा च वशिष्ठशापात् वामा
भूता । यथा,—

और्व्व उवाच ।

"एतद्विद्यौर्व्वचः श्रुत्वा विधिना वञ्चितः स तु ।
अङ्गीचकार हृदये तद्वचः साध्यसाधने ॥
विसृज्य तान् ब्रह्मविष्णुयमान् वृषभवाहनः ।
आदाय स्वगणान् सर्व्वान् कामरूपान्तरं ययौ ॥
उग्रतारां ततो देवीं गणांश्च प्राह शङ्करः ।
उत्सारयन्तु सकलान् इमान् लोकान् गणा द्रुतम् ॥
उग्रतारे महादेवि त्वञ्चाप्युत्सारय द्रुतम् ॥
ततो गणाः कामरूपाद्देवी चाप्यपराजिता ।
लोकानुत्सारयामासुः पीठं कर्त्तुं रहस्यकम् ॥
उत्सार्य्यमाणे लोके तु चतुर्व्वर्णैर्द्विजातिभिः ।
सन्ध्याचलो गतो विप्रो वशिष्ठः कुपितो मुनिः ॥
सोऽप्युग्रतारया देव्या उत्सारयितुमीप्सया ।
गणैः सह ततः प्राह शापं कुर्व्वन् सुदारुणम् ।
यस्मादहं द्रुतं वामे त्वयोत्सारयितुं मुनिः ॥
तस्मात्त्वं वामभावेन पूज्या भव समन्विता ।
भर्त्सयन्ति म्लेच्छवत् यस्माद्गणास्ते मन्दबुद्धयः ।
भवन्तु म्लेच्छास्तत्काला भवता कामरूपके ॥

महादेवोऽपि यत्नात्मा विस्मारयितुमुद्यतः ।
तपोवनं भुवि क्षान्तं वीक्ष्यवरदेशपारगम् ॥
तस्मात् बौद्धपिथौ भूमात् घरस्वाभिमनस्तक् ।
स्तनु वामरूपाख्यं बौद्धेः तुमं भवद्भवं ॥
अयं विप्लुवं यावात् यावत् कालमिदं पुनः ।
विरयाभासाः सन्तु यत्र तत्पथविपादकाः ॥
विरथं वस्तु जानाति कामरूपाममं बुधः ।
स एव प्रामयादोऽपि पथ्यं मनमवाप्यति ॥
एवमुक्ता वशिष्ठस्तु तत्रैवान्तरधीयत ।
ते गताः बौद्धतां याताः कामरूपे सुरालये ॥
वामाऽभूदुग्रतारापि शम्भुर्वैश्वरतोऽभवत्" ।
इति ये कालिकापुराणे ८२ अध्यायः ॥

**उग्रत्वं**, क्ली, (उग्रस्य भावः । उग्र + त्व ।) उग्रता । उत्कटता । तत्पर्य्यायः । चण्डता २ । इति हेमचन्द्रः ॥

**उग्रधन्वा**, [न्] पुं, (उग्रं धनुर्यस्य । धनुषश्चेत्यनङ्) इन्द्रः । इति हेमचन्द्रः ॥ ("स इषुहस्तैः स निषङ्गिभिर्वशी संस्रष्टा सयुध इन्द्रो गणेन । संसृष्टजित् सोमपा बाहुशर्ध्युग्रधन्वा प्रतिहिताभिरस्ता" । इति ऋग्वेदे । १०।१०३।३ ॥ शिवः । उग्रधनुर्विशिष्टे, त्रि ॥)

**उग्रनासिकः**, त्रि, (उग्रा दीर्घा नासिका यस्य ।) दीर्घनासिकाविशिष्टः । इति हेमचन्द्रः ॥

**उग्रशेखरा**, स्त्री, (उग्रस्य महादेवस्य शेखरं मस्तकं वासस्थानत्वेन यस्याः ।) गङ्गा । इति शब्दरत्नावली ॥

**उग्रसेनः**, पुं, (उग्रा सेना यस्य ।) मथुरादेशस्य राजविशेषः । स च आहुकपुत्रः । कंसराजपिता च । परीक्षित्पुत्रः । इति श्रीभागवतम् ॥ (तथा महाभारतेऽपि "जनमेजयः पारिक्षितः सह भ्रातृभिः कुरुक्षेत्रे दीर्घसत्रमुपास्ते । तस्य भ्रातरस्त्रयः श्रुतसेन उग्रसेनो भीमसेनश्च" इति । तथा च तत्रैव १।६५।४२ ।
"भीमसेनोग्रसेनौ च श्रुतसेनस्तथा" ॥)

**उग्रसेनजः**, पुं, (उग्रसेनात् जायते इति । उग्रसेन + जन + ड ।) कंसनामासुरराजः । इति त्रिकाण्डशेषः ॥

**उग्रा**, स्त्री, (उच्यति बुधा समवयते या । उच समवाये + ऋज्रेन्द्राग्रेत्यादिना रन् गत्वान्तादेशः । ततष्टाप् ।) वचानी । वचा । इति राजनिर्घण्टः ॥ ("दन्तधावे हितं श्रेष्ठं तिक्तोग्राचव्यं सदा" । इति वैद्यकचक्रपाणिसंग्रहे मुखरोगाधिकारे ।) छिक्किकौषधी । इति हेमचन्द्रः ॥ उग्रजातिस्त्री । (यथा मनुः १० । १९ ।
"क्षत्तुर्जातस्तथोग्रायां श्वपाक इति कीर्त्यते" ॥)
धन्याकम् । इति रत्नमाला ॥ प्रखरा नारी ॥

**उङ्कुणः**, पुं, मत्कुणः । इति शब्दमाला ॥ उकुन् इति भाषा ।

**उच**, इ र य समवायने । मिश्रणे । इति कविकल्पद्रुमः ॥ (दिवां-परं-सकं-सेट् ।) ऋकारादिः । इ र ऊचत् औचित् । अस्मात् पुषादित्वात् नित्यं ङ इत्यन्ये । य उच्यते केशः जानात् । इति दुर्गादासः ॥

**उचितं**, त्रि, (वच + "वचिस्वपियजादीनां किति" इति किलत्र प्रत्ययः ।) विदितम् । ख्यातम् । परिमितम् । युक्तम् । इति हेमचन्द्रः ॥ न्याय्यम् । इति शब्दरत्नावली ॥

**उच्चं**, त्रि, (उच्चिनोतीति । चिञ् चयने अन्येभ्योऽपि इति डः । उच्चैस्त्वमस्ति अत्र वा । अर्श आद्यच्, अव्ययानामिति टिलोपः ।) उपरि । उँचु इति भाषा । तत्पर्य्यायः । प्रांशु २ उन्नतम् ३ उदग्रम् ४ उच्छ्रितम् ५ तुङ्गम् ६ । इत्यमरः ॥ उत्तुङ्गं ७ । इति तट्टीका ॥ (यथा, रघुः ३।१३ ।
"ग्रहैस्ततः पञ्चभिरुच्चसंश्रयैः,
असूर्य्यगैः सूचितभाग्यसम्पदम्" ।)
(ज्योतिषोक्तं ग्रहाणामुच्चस्थानम् । यथा,
"अजवृषभमृगाङ्गनाकुलीरा
झषवणिजौ च दिवाकरादितुङ्गाः ।
दशशिखिमनुयुक्तिथीन्द्रियांशै-
स्त्रिनवकविंशतिभिश्च तेऽस्तनीचाः" ॥
सूर्य्यादीनां सप्तानां ग्रहाणां मेषवृषभादयो राशयः श्लोकोक्तक्रमविशिष्टा उच्चस्थानानि सप्ततुङ्गापेक्षया सप्तमस्थानानि च नीचानि, तत्रोच्चेष्वपि दशमादयो राशिविंशांशाः यथाक्रमं उच्चेषु परमोच्चा नीचेषु परमनीचा भवन्तीति ॥)

**उच्चैः**, [स्] अव्य, (उच्चैस् + अव्ययसर्व्वनाम्नां इति प्रागिवीयेषु अर्थेषु टेः प्रागकच् ।) उच्चैः । अतिशयोच्चम् । इति द्विरूपकोषः ॥ (यथा विष्णुपुराणम् ।
"वशिष्ठाद्यैर्दयासारैः स्तोत्रं कुर्व्वद्भिरुच्चकैः" ।
उन्नतम् । यथा माघे १।१२ ।
"गिरेस्तडित्वानिव तावदुच्चकै-
र्जवेन पीठादुदतिष्ठदच्युतः" ॥)

**उच्चटा**, स्त्री, (उत् + चट् + अच् + टाप् ।) गुञ्जा । भूम्यामलकी ।
("उच्चटाचूर्णमप्येवं क्षीरेणोत्तममिष्यते ।
शतावर्य्युच्चटामूलं पेयमेवं बलार्थिना" ॥
इति सुश्रुते चिकित्सितस्थाने २६ ।)
नागरमुस्ता । इति राजनिर्घण्टः ॥ दम्भः । चर्य्या । लशुनप्रभेदः । इति हेमचन्द्रः ॥ तृणविशेषः । निर्व्विषी इति ख्याता । चँचुया इति केचित् । इत्यमरटीकायां भरतः । तत्पर्य्यायः । चूडाला २ चक्रला ३ । इत्यमरः ॥ अम्बुपत्रा ४ जटिला ५ सुभला ६ उत्तालकः ७ । इति रत्नमाला ॥

**उच्चण्डः**, त्रि, (उत् चण्डतीति । चडि कोपे + अच् ।) त्वरान्वितः । अविलम्बितः । इत्यमरः ॥

**उच्चतरुः**, पुं, (उच्चः उन्नतस्तरुः ।) नारिकेलवृक्षः । इति राजनिर्घण्टः ॥ (नारिकेलशब्देऽस्य विवरणं ज्ञातव्यम् ॥)

**उच्चतालं**, क्ली, (उच्चः महतया प्रवृद्धस्तालो यत्र ।) पानगोष्ठ्यां नृत्यम् । इति हेमचन्द्रः ॥

**उच्चदेवः**, पुं, (उच्चः सर्व्वदेवमयत्वात् श्रेष्ठः देवः ।) श्रीकृष्णः । इति त्रिकाण्डशेषः ॥

**उच्चन्द्र**, पुं, (उत् सत्यं अवशिष्टश्चन्द्रो यस्मिन् ।) रात्रिशेषः । इति शब्दरत्नावली ॥

**उच्चयः**, पुं, (उत् + चि + अच् ।) परिधानवस्त्रग्रन्थिः । तत्पर्य्यायः । नीवी २ । इति हेमचन्द्रः ॥ (पुष्पादीनामुत्तोलनम् । यथा, रघुः १०।४४ ।
"करिष्यामि शरैस्तीक्ष्णैस्तच्छिरःकमलोच्चयम्" ।
"पुष्पोच्चयं नाटयति" इति शाकुन्तले १ माङ्के ॥
राशिः । समष्टिः । यथा,—
"शिलोच्चयोऽपि क्षितिपालमुच्चैः" । रघुः २।५१ ।
"वाक्यं स्याद्योग्यताकाङ्क्षासत्तियुक्तः पदोच्चयः" ।
इति साहित्यदर्पणे । २ । १ ॥)

**उच्चलं**, क्ली, (उच्चलतीति । उत् + चल् + अच् ।) मनः । इति हेमचन्द्रः ॥

**उच्चललाटा**, स्त्री, (उच्चमुन्नतं ललाटं यस्याः ।) उन्नतललाटवती । इति त्रिकाण्डशेषः ॥

**उच्चाटनं**, क्ली, (उत् + चट् + णिच् + ल्युट् ।) उत्खातम् । उचाटन इति भाषा । षट्कर्म्मान्तर्गताभिचारकर्म्मविशेषः । अस्य देवता दुर्गा । तिथिः कृष्णा चतुर्द्दशी अष्टमी च । वारः शनिः । जपमाला साध्यस्य केशग्रथिततुरङ्गदन्तोद्भवा । फलम् । उच्चाटनं स्वदेशादेर्भ्रंशनं परकीर्त्तितम् ॥ इति शारदातन्त्रम् ॥

**उच्चारः**, पुं, (उच्चार्य्यते परित्यज्यते इति । उत् + चर + णिच् + घञ् ।) विष्ठा । इत्यमरः ॥
("मूत्रोच्चारसमुत्सर्गं दिवा कुर्य्यादुदङ्मुखः" ।
इति मनुः ।४।५० ।)
"यस्योच्चारं विना मूत्रं सम्यग्वायुश्च गच्छति ।
दीप्ताग्नेर्लघुकोष्ठस्य स्थितस्तस्योदरामयः" ॥
इति सुश्रुते उत्तरतन्त्रे चत्वारिंशत्तमोऽध्यायः ।)
उच्चारणम् ॥

**उच्चारणं**, क्ली, (उत् + चर + णिच् + ल्युट् ।) कथनम् । वाङ्निष्पत्तिकारणम् ॥ यथा । "हसे अकार-उच्चारणार्थः" । इति मुग्धबोधव्याकरणे, सन्धिसंज्ञा २ । अपिच ।
"कर्म्मोच्चारणमात्रेण स्वष्टमात्रानुबन्धतः" ।
इति कविकल्पद्रुमः ॥

**उच्चावचः**, त्रि, (उदक् च अवाक् च । मयूरव्यंसकादित्वात् साधुः ।) अनेकप्रकारः । तत्पर्य्यायः । नैकभेदः २ । इत्यमरः ॥ (यथा, मनुः १।३८ ।
("उल्कानिर्घातकेतूंश्च ज्योतींष्युच्चावचानि च" ।
"उच्चावचेषु भूतेषु स्थितं तं व्याप्य तिष्ठत" ।
इति च मनुः ६ । ७३ ॥)

**उच्चिङ्कटः**, पुं, कर्कटमत्स्यः । कोपनपुरुषः । इति मेदिनी ॥

**उच्चूडः**, पुं, (उद्गता चूडा यस्य । कस्य वत्वम् ।) ध्वजोर्द्ध्वमुखकूर्चः । इति हेमचन्द्रः ॥ निशानेर पाग इति भाषा । अस्य पर्य्यायः अवचूलः ॥

**उच्चैः**, [स्] अव्य, (उच्चीयते इति । उत् + चि + डैस् ।) उच्चम् । महत् । इत्यमरः ॥ (यथा, कुमारे २।४७ ।
"उच्चैरुच्चैःश्रवास्तेन हयरत्नमहारि च" ।
"शिलोच्चयोऽपि क्षितिपालमुच्चैः" ।
इति रघुः २।५१ । यथा, माघः २ । ५१ ।
"अक्षत्वा हेलया पादमुच्चैर्मूर्द्धसु विद्विषाम्" ॥)

**उच्चैःश्रवाः** [स्] पुं, (उच्चैः श्रवो यशो यस्य । यद्वा उच्चैः श्रवसी यस्य । यद्वा उच्चैः शृणोतीति उच्चैः

इति मेदिनी ॥ (यथा, साहित्यदर्पणे । ३ परिच्छेदः । "अन्यासां सखि ! वाससी न सखिरे ग्रैवेयकं नोज्ज्वलं" ।

"विविधोज्ज्वलवेशा तु वनभूस्तरमिःश्रमा" ॥)

उज्ज्वला, स्त्री, (उत् + ज्वल + अच् ।) सर्पम् । इति राजनिर्घण्टः ।

उज्ज्वलः, पुं, (उत् + ज्वल + अच् ।) शृङ्गाररसः । इत्यमरः ॥ (यथा, नैषधे १ । १ ।

"स राशिरासीन्महसां महोज्ज्वलः" ॥)

उज्झ श त्यागे । इति कविकल्पद्रुमः ॥ (तुदां-परं-सकं-सेट् ।) ओष्ठ्य इत्येके । उज्झति । औज्झीत् । श उज्झती उज्झन्ती । इति दुर्गादासः ॥ अन्यत् उद्झधातौ द्रष्टव्यम् ॥

उज्झः, पुं, (उज्झतीति । उज्झ + अच् ।) त्यागः । विसर्जनम् ।(यथा, मनुः ११।५६ ।

"ब्रह्मोज्झता वेदनिन्दा कौटसाक्ष्यं सुहृद्वधः" ॥)

उज्झितं, त्रि,(उज्झ + क्त ।) उत्सृष्टम् । त्यक्तम् । वर्जितं । इति हलायुधः ॥ (यथा किराते । ५ । ६ ।

"अविरतोज्झितवारिविपाण्डुभिः" ।

"उज्झितायास्त्वया नाथ ! तदैव मरणं वरम्" ॥ इति रामायणे २ । ३० । २० ॥)

उञ्छ, क्ली, (उञ्छि + घञ् ।) पतितकणादानवत् शस्यग्रहणं । यथा । उपात्तशस्यात् क्षेत्रात् शेषावचयने । उञ्छेन पतितकणादानवद्ग्रहणेन शिल्यते समीयते उञ्छशिलं उञ्छिउञ्छे शिल उञ्छे यथोरितुक्तः शब्दोति इत्युक्तात् कः उञ्छशिलम् । संघातं विग्रहीतं विपर्यस्तश्च नाम । "ग्रन्था न चेदुञ्छशिलेन वृत्तिः । फलेन मूलेन च वारिणा च" इति । समाहारद्वन्द्वे उञ्छं शिलश्च । उञ्छं भैक्ष्यं यथान्यत्र परिग्रहयान्तु क्षतम् । इति त्रिकाण्डाभिधाने क्लीबम् । पुमानुञ्छऋतशिलं इति बोपालिते पुंस्युञ्छः । सवभूतिक्षतशिलोञ्छे इति गोवर्द्धनः । केचिदुञ्छशिलयोर्भेदमाहुः । "प्रतियत्नात् शिलं श्रेयस्ततोऽप्युञ्छः प्रशस्यते" । इति तत्र शास्त्रादिभिर्निपातितपरित्यक्तमञ्जरीणां आदानं शिलं । शिलं धान्यमञ्जरीसंग्रहः । इति स्वामी च । एकैकशः कपोतवद्धान्यकणोद्धरणमुञ्छः । तदुक्तं उञ्छो धान्यकणोच्चय इति । शिलं तावत्यादि इत्यादि च । धर्मत्वात् सत्यमिति ऋतम् । इति उञ्छशिलशब्दटीकायां भरतः ॥

उञ्छः, पुं, (उञ्छि उञ्छे + घञ् ।) उञ्छशिलम् । इति जटाधरः ॥ (यथा,रामायणे । २।२४।२।

"मयि जाते दशरथात् कथमुञ्छेन वर्त्तयेत्" ॥)

उञ्छनं, क्ली, (उञ्छि + ल्युट् ।) आपणादिपतितकणोपादानम् । इति श्रीभागवतम् ॥ उञ्छन खुँटिया लयोन खुनिया लयोन कुड़ाइया लयोन इत्यादि भाषा ॥

उञ्छशिलं, क्ली, ( उञ्छश्च शिलश्चेत्येकवद्भावः ।) उञ्छवृत्तिः । सा तु सर्वेभिन्नत्वेनात् शेषावचयनम् । तत्पर्य्यायः । ऋतं २ । इत्यमरः ॥ उञ्छशिलं ३ उञ्छः ४ उञ्छं ५ शिलं ६ । इति तट्टीका ॥ (यथा, मनुः । ४।५ ।

"ऋतमुञ्छशिलं ज्ञेयममृतं स्यादयाचितम्" ॥)

उञ्छशीलः, त्रि, (उञ्छः शीलं व्रतं यस्य ।) उञ्छजीवी । उञ्छवृत्तस्य शेषावचयकर्त्ता । इति पुराणम् ॥ छिलेच इति भाषा ॥

उटः, पुं, तृणपर्णादिः । इत्यमरटीकायां भरतः॥

उटजः, पुं, क्ली, (उटात्तृणपर्णादयस्तेभ्योजायते इति । उट + जन + ड ।) मुनीनां पत्रचितगृहम् । तत्पर्य्यायः । पर्णशाला २ । इत्यमरः । पर्णोटजः ३ । इति शब्दरत्नावली ॥ यथा रघुः ।

("आकीर्णमृषिपत्नीनामुटजद्वाररोधिभिः" । १।५० ।

"स्रवन्त्यजिरोन्मतमुटजाङ्गनभूमिषु" । १ । ५२ ।)

मठमात्रम् । इत्यमरमाला ॥

उठ उपघाते । (भ्वादि-परं-सकं-सेट् ।) इति कविकल्पद्रुमः ॥ रुखादिः । ओठति खलः साधुम् । इति दुर्गादासः ॥

उड संहतौ । (परं-सकं-सेट् ।) चौरधातुरयम् । इति कविकल्पद्रुमः ॥ उडुपः । इति दुर्गादासः ॥

उडु, स्त्री क्ली, (उ रोषोक्तिपूर्व्वकं डयते इति । उ + डी + डु मितद्वादित्वात् डुः ।) नक्षत्रम् । इत्यमरः ॥ ("सरोडुराजः कुमुदः करैर्मुखम्" । इति भागवतं।१०।२९।२। तथा रघुवंशे । १६।६५।

"इन्दुप्रकाशान्तरितोडुतुल्याः" ।)

जले स्त्री । इत्यमरटीकायां भरतः ॥

उडुपः, पुं क्ली, (उडुनोजलात् पाति रक्षतीति । उडु + पा + क ।) भेलकम् । भेला माड् इत्यादि भाषा । तत्पर्य्यायः । प्लवः २ कोलः ३ । इत्यमरः ॥ भेलकः ४ उडुपः ५ तरः ६ तारकः ७ तारकः ८ । इति शब्दरत्नावली ॥

("तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम्" । इति रघुवंशे । १।२ ।) चन्द्रे पुं । इति मेदिनी ॥ ("अपश्यत् वदनं तस्य रश्मिवन्तमिवोडुपम्" । इति महाभारते । वनपर्व्वणि ॥ चर्म्मावनद्धपानपात्रं । यथा,—

"चर्म्मावनद्धमुडुपं प्लवः काष्ठं करण्डवत्" ॥ इति सज्जनः ॥ )

उडुपतिः, पुं, (उडूनां पतिः ।) चन्द्रः । इति पुराणज्योतिषे ॥ ("अथाविलोपशुचितमम्बु केवलं रसात्मकस्योडुपतेश्च रश्मयः" । इति कुमारे । ५।२२।

"परिमुग्धता वविशिवोडुपतेः" । इति माघे ।)

उडुपथः, पुं, (उडूनां पन्थाः ।) आकाशम् । इति हेमचन्द्रः ॥

उडुम्बरं,क्ली,(उडुं डम्बातीति । उडु + डम्ब + अच् ।) ताम्रम् । इति मेदिनी ॥ ("ताम्रं शुल्बमुडुम्बरम्" । इति वैद्यकरत्नमाला । कर्षार्द्धे यथा,—

"उडुम्बरस्य पर्यायैः कर्षमेव निगद्यते" ॥ इति शार्ङ्गधरे पूर्व्वखण्डे प्रथमाध्यायः ।)

कर्षपरिमाणम् । इति वैद्यकपरिभाषा ॥

उडुम्बरः, पुं, (उडु + डम्ब + अच् ।) उदुम्बरवृक्षः । यज्ञडुमुर इति भाषा । तत्पर्य्यायः । जन्तुफलः २ यज्ञाङ्गः ३ हेमदुग्धकः ४ । इत्यमरः ॥ ब्रह्मवृक्षः ५ । इति रत्नमाला । हेमदुग्धी ६ यज्ञफलः ७ यज्ञोडुम्बरः ८ । इति शब्दरत्नावली ॥ सदाफलः ९ क्षीरवृक्षः १० सुपत्रः ११ श्वेतवल्कलः १२ । इति जटाधरः ॥ अस्य गुणाः । उडुम्बरो हिमो रूक्षो गुरुः पित्तकफास्रजित् । मधुरस्तुवरो वर्ण्यो व्रणशोधनरोपणः ॥ इति भावप्रकाशः ॥

("उडुम्बरफलं पक्वं चूर्णितं कर्णमात्रकम् । संमिश्रमधुना सर्व्वमनुपानं सुखावहम्" ॥ इति वैद्यकरसेन्द्रसारसंग्रहे मूत्राघाताधिकारे ।)

अन्यत् उदुम्बरशब्दे द्रष्टव्यम् ॥ देहली । गोवराटेर निचेर काठ इति भाषा । पक्कम् । नपुंसकमिति यावत् । कुष्ठरोगभेदः । इति मेदिनी ॥

उडुम्बरपर्णी, स्त्री, (उडुम्बरस्य पर्णमिव पर्णं यस्याः ।) दन्तीवृक्षः । इति शब्दचन्द्रिका । (उदुम्बरपर्णीशब्दे ऽस्या विशेषो ज्ञेयः ॥)

उडूपः, पुं क्ली, (उडुपशब्दोऽस्य दीर्घत्वनिर्देशः ।) उडुपः । भेला इति भाषा । चन्द्रे पुं । इति त्रिकाण्डशेषः ॥

उड्डयनं, क्ली, (उत् + डी + ल्युट् ।) नभोगतिः । ओड़ा इति भाषा । यथा नैषधे १ । १२५ ॥

"गतो विरत्नोड्डयने निराशताम्" ॥

("सोऽपि तमादाय सम्पातोड्डयनेन प्रस्थितः" । इति पञ्चतन्त्रे ॥)

उड्डामरं, त्रि, (उत्कृष्टः डामरः ।) श्रेष्ठम् । तत्पर्य्यायः । उद्भटं २ उत्तालम् ३ । इति त्रिकाण्डशेषः ॥ (पुं तन्त्रविशेषः ॥)

उड्डीनं, क्ली, (उत् + डी + क्त ।) खगगतिक्रिया । पक्षिणां ऊर्द्धगमनम् । इत्यमरः ॥

("अहं सम्पातादिकानष्टावुड्डीनगतिविशेषान् वेद्मि" । इति पञ्चतन्त्रे ॥)

उड्डीयमानः, त्रि, (उत् + डी + शानच् ।) उड्डयनविशिष्टपक्ष्यादिः । उड्न ओड़ता इत्यादि भाषा ॥

उड्डीशः, पुं, (उत् + डी + श । यद्वा उड्डानां उत्पतनशीलानां योगिनामित्यर्थः ईशः महादेवस्य योगीश्वरत्वात् ।) आगमशास्त्रविशेषः । शिवः । इति मेदिनी ॥

उत, व्य, प्रश्नः । वितर्कः । इति मेदिनी ॥ अत्यर्थे । सन्देहः । इति शब्दरत्नावली ॥ (ऊर्द्धम् । अपार्थे ॥)

उत वा, (उ शब्दे + क्त ।) अत्यर्थम् । विकल्पः । समुच्चयः । वितर्कः । प्रश्नः । पादपूरणम् । इति मेदिनी ॥ (अप्यर्थे । एवार्थे । "किमेतदाश्चर्य्यं उत ग्राम्यम्" । इति पञ्चतन्त्रे । "तत्किमयमातपदोषः स्यात् उत यथा मे मनसि वर्त्तते" । इति शाकुन्तले । "वीरो रसः किमयमित्युत दर्प एव" । इति उत्तरचरिते ॥)

उतं, त्रि, (वे + क्त । यजादित्वात् सम्प्रसारणम् ।) तन्तुसन्तानः । वोना इति भाषा । तत्पर्य्यायः । ऊतं २ स्यूतम् ३ । इत्यमरः ॥

उतथ्य, पुं, मुनिविशेषः । स च अङ्गिरःपुत्रः । इति पुराणम् ॥

("उतथ्यस्त्वङ्गिरसः पुत्रा लोके सर्व्वत्र विश्रुताः । बृहस्पतिरुतथ्यश्च संवर्त्तश्च धृतव्रताः" ॥ इति महाभारते आदिपर्व्वणि ॥)

"किञ्चिदुन्नमूलमूर्द्धेः शरदामयुतं ययौ"।
"ऊनद्विवार्षिकं प्रेतं निदध्युर्बान्धवा बहिः"।
इति मनुः। ५। ६८।)

ऊनविंशः, त्रि, ऊनविंशतेः पूरणः। यथा,—

"तिथ्यङ्कवेदैकदशोनविंश-
मैकादशाष्टादशविंशसंख्याः।
हस्तोऽश्विनी सूर्य्ययुतोऽनुराधा च
योगावमूलेष्वशयोगभङ्गः" ॥

इति ज्योतिस्तत्त्वम् ॥

ऊनविंशतिः, स्त्री, (एकेन ऊना विंशतिः।) एकोन-विंशतिः। ऊनिश इति भाषा। यथा। "ऊनविं-शतिदास्यमानपिण्डस्थानानि"। इति तिथ्यादि-तत्त्वे आमावस्याप्रकरणे ॥

ऊम्, व्य (ऊयते। ऊय्+मुक्।) रोषोक्तिः। प्रश्नः। इति मेदिनी ॥ निन्दा। स्पर्द्धा। इति शब्दरत्नावली ॥

ऊमं, क्ली, (अवतीति। अव+"अविसिविसिशुषि-भ्यः कित्"। १।१४३। इति उनादिसूत्रेण मन्। कित् ऊठ् च।) देशविशेषः। इति सिद्धान्तकौमुदी ॥

ऊय, ई ङ सेवने। तन्तुसन्ताने इति यावत्। इति कविकल्पद्रुमः (भ्वादिं-आत्मं-सकं-सेट्।) दीर्घादिः। सेवनमिह सिव्युतन्तुततावित्यस्य रूपं ई ऊतः। ङ ऊयते पटं सौचिकः। इति दुर्गादासः ॥

ऊररी, व्य (ऊय्+बाहुलकात् ररीक्।) विस्तारः। अङ्गीकारः। इति भरतो द्विरूपकोषश्च ॥

ऊरव्यः, पुं, (ऊरोर्जातः। ऊरु+शरीरावयवात् यदिति यत्। वैश्यस्य ब्रह्मणः ऊरोर्जातत्वात् तथात्वम्।) वैश्यः। इत्यमरः ॥ (यदुक्तं यजुषि। ३१। ११ ॥

"ब्राह्मणोऽस्य मुखमासीत् बाहूराजन्यः कृतः।
ऊरू तदस्य यद् वैश्यः पद्भ्यां शूद्रोऽजायत"॥ इति॥)

ऊरी, व्य (ऊर+बाहुलकात् रीक्।) विस्तारः। अङ्गीकारः। इत्यमरः ॥ (यथा हितोपदेशे वि-ग्रहे। "ऊरीकृत्य प्रस्थितः" ॥)

ऊरीकृतः, त्रि, (ऊरी+कृ+क्त।) अङ्गीकृतः। विस्तृतः। इत्यमरः ॥

ऊरुः, पुं, (ऊर्णूयते आच्छाद्यते इति। ऊर्णु+ "ऊर्णोतेर्नुलोपः"। १। ३१। इति उणादिसूत्रेण कर्म्मणि कुः नुलोपश्च।) जानूपरिभागः। उरत् इति भाषा। तत्पर्य्यायः। सक्थि २। इत्यमरः ॥ (यथा, साहित्यदर्पणे।

"भुवनत्रितये न बिभर्त्ति तुलामिदमूरुयुगं न चमूदृशः"।
"भुजमूर्द्धोरुबाहुल्यादेकोऽपि धनदानुजः"।
इति रघुः। १२। ८८। तथा मनुः। १। ३१।
"लोकानान्तु विवृद्ध्यर्थं मुखबाहूरुपादतः" ॥)

ऊरुजः पुं, (ऊरोर्जायते इति। ऊरु+जन्+ड।) वैश्यः। स तु ब्रह्मण ऊरुभ्यां जातः। इत्यमरः ॥ (यथा, विष्णुपुराणे। १। ६। ४।

"रजसा तमसा चैव समुद्रिक्तास्तथोरुजाः"।
भृगुवंशीय ऋषिभेदः। स च और्व्व इति नाम्ना ख्यातः। तस्य जन्मकथा और्व्वशब्दे द्रष्टव्या ॥)

ऊरुपर्व्वा, [न्] पुं, क्ली, (ऊरोः पर्व्वेव।) जानु। इत्यमरः ॥ हाँटु इति भाषा।

ऊररी, व्य, (ऊर+ररीक्।) विस्तारः। अङ्गी-कारः। इति भरतो द्विरूपकोषश्च ॥

ऊरुस्तम्भः,पुं, (ऊरू स्तभ्नाति इति ऊरु+स्तन्भ+ अण्।) ऊरुरोगविशेषः। यथा। अथोरुस्तम्भा-धिकारः। तत्रोरुस्तम्भस्य विप्रकृष्टसन्निकृष्टनिदान-सम्प्राप्तिपूर्ब्बकं लक्षणमाह।

"शीतोष्णद्रवसंशुष्कगुरुस्निग्धैर्निषेवितैः।
जीर्णाजीर्णे तथायाससंक्षोभस्वप्नजागरैः ॥
सश्लेष्ममेदः पवनः साममत्यर्थसञ्चितम्।
अभिभूयेतरं दोषमूरू चेत् प्रतिपद्यते ॥
सक्थ्यस्थिनी प्रपूर्य्यान्तःश्लेष्मणा स्तिमितेन सः।
तदा स्तभ्नाति तेनोरू स्तब्धौ शीतावचेतनौ ॥
परकीयाविव गुरू स्यातामतिशयव्यथौ।
ध्यानाङ्गमर्द्दस्तैमित्यतन्द्राच्छर्द्यरुचिज्वरैः ॥
संयुतौ पादसदनकृच्छ्रोद्धरणसुप्तिभिः।
तमूरुस्तम्भमित्याहुराढ्यवातमथापरे" ॥

जीर्णाजीर्णे किञ्चिज्जीर्णे किञ्चिदजीर्णे तस्मिन् भोजनमित्यर्थः। अतएव दृढ़बलेन जीर्णाजीर्णे समश्नत इति पठितम्। तत्र शीतादिभिर्निषे-वितैर्भुक्तैः। संक्षोभेण सञ्चलनेन। स्वप्नेन दिवा। जागरणेन रात्रौ। अभिभूय दूषयित्वा। इतरं दोषं पित्तम्। स्तिमितेन आर्द्रेण द्रुतेनेति यावत्। न तु घनेन। एवंविधेन श्लेष्मणा। सः पवनः। तदा ऊरू स्तभ्नाति तेन स्तम्भेन। अचेतनौ शून्यौ। परकीयाविव अक्रियावित्यर्थः। ध्यानं संमूढ़ता। पादसम्बन्धिनीभिः सदनकृच्छ्रोद्धरणसुप्तिभिश्च संयुक्तौ। अयं सुश्रुतेन महावातव्याधिषु पठितः ॥*

प्राग्रूपमाह।

"प्राग्रूपं तस्य निद्रातिध्यानं स्तिमितता ज्वरः।
रोमहर्षोऽरुचिश्छर्द्दिर्जङ्घोर्व्वोः सदनं तथा" ॥*॥

तस्योपशयमाह।

"वातशङ्किभिरज्ञानात्तत्र स्यात् स्नेहनात् पुनः।
पादयोः सदनं सुप्तिः कृच्छ्रादुद्धरणं तथा ॥
जङ्घोरुग्लानिरत्यर्थं शश्वदादाहवेदना।
पदञ्च व्यथते न्यस्तं शीतस्पर्शं न वेत्ति च ॥
संस्थाने पीड़ने गत्यां चालने चाप्यनीश्वरः।
अन्यनेयौ हि संभग्नावूरू पादौ च मन्यते" ॥

अन्यनेयौ अन्यपुरुषचाल्यौ भवत इत्यर्थः। अज्ञा-नात् अनिश्चयात् स्तम्भ-सुप्ति-कम्पादि-दर्शनेन। वातशङ्किभिः वातव्याधिशङ्किभिः। तत्र ऊरुस्तम्भे। स्नेहनात् स्नेहादिना स्नेहन्या चिकित्सया। पाद-सदनादय ऊरुमध्योपमत्वात् ते विकाराः स्युः। जङ्घोरुग्लानिः जङ्घोर्व्वोर्गमनादावशक्तिः। आदा-हवेदना ईषद्दाहेन सह वेदना ॥ * ॥

ऊरुस्तम्भस्यारिष्टं लक्षणमाह।

"यदा दाहार्त्तितोदार्त्तो वेपनः पुरुषो भवेत्।
ऊरुस्तम्भस्तदा हन्यात् साधयेदन्यथा नवम्" ॥

अन्यथा दाहाद्युक्तोपद्रवरहितं तमपि नवमुत्पन्न-मात्रं साधयेत् ॥ * ॥ * ॥

अथोरुस्तम्भस्य चिकित्सा।

"स्नेहासृक्स्रावणवमनं वस्तिकर्म्मविरेचनम्।
वर्जयेदाढ्यवाते तु यतस्तैरस्य कोपनम् ॥
तस्मादत्र सदा कार्य्यं क्षेदनं घनरूक्षणम्।
आममेदःकफाधिक्यान्मारुतं नयता समम् ॥
यत् स्यात् कफप्रशमनं न तु मारुतकोपनम्।
तत्सर्व्वं सर्व्वदा कार्य्यमूरुस्तम्भस्य भेषजम् ॥
सर्व्वो रूक्षक्रमः कार्य्यस्तत्रादौ कफनाशनः।
पश्चाद्वातविनाशाय विधातव्याखिला क्रिया ॥
भोज्याः पुराणाः श्यामाककोद्रवोद्दालशालयः।
जाङ्गलैरघृतैर्म्मांसैः शाकैश्चालवणैर्हितैः" ॥

उद्दालो वनकोद्रवः।

"दद्याद्वास्तूकशाकेन वह्निनेन लवणेन तु।
जीर्णशाल्योदनं रूक्षमूरुस्तम्भवते भिषक् ॥
रूक्षणाद्वातकोपश्चेन्निद्रानाशादिसम्भवः।
स्नेहस्वेदक्रमस्तत्र कार्य्यो वातामयापहः ॥
प्रतारयेत् प्रतिस्रोतः सरितं शीतलोदकाम्।
सरश्च विमलं शीतं स्थिरतोयं पुनः पुनः ॥
मूत्रैर्व्वा वाजिगन्धायाः अथवार्कस्य कारयेत्।
गाढ़मुत्सादनं वैद्य ऊरुस्तम्भे सवेदने ॥
त्रिफलाग्रन्थिकव्योषचूर्णं लिह्यात् समाक्षिकम्।
ऊरुस्तम्भविनाशाय पुरं मूत्रेण वा पिबेत् ॥
नागरं पिप्पलीञ्चापि गुग्गुलुं वा शिलाजतु।
ऊरुस्तम्भी पिबेन्मूत्रैर्दशमूलीरसेन वा" ॥

इत्यूरुस्तम्भाधिकारः। इति भावप्रकाशः ॥

अपि च।

"त्रिफला चित्रकं तिक्तं तथा कटुकरोहिणी।
ऊरुस्तम्भहरो ह्येष उत्तमन्तु विरेचनम् ॥
हरीतकीं शृङ्गवेरं देवदारु च चन्दनम्।
क्वाथयेच्छागदुग्धेन अपामार्गस्य मूलकम् ॥
जङ्घास्थूरुस्तम्भं सप्तरात्रे तु नाशयेत्" ॥ * ॥

इति गारुडे १८७ अध्यायः ॥

("एक ऊरुस्तम्भ इति आमत्रिदोषसमुत्थानः"। इति चरके सूत्रे ऊनविंशोऽध्यायः॥

अस्य सकारणलक्षणसम्प्राप्तिचिकित्सितानि यथा,

"श्रिया परमया ब्राह्म्या परया च तपःश्रिया।
अहीनं चन्द्रसूर्य्याभ्यां सुमेरुमिव पर्व्वतम् ॥
धीधृतिस्मृतिविज्ञानज्ञानकीर्त्तिक्षमालयम्।
अग्निवेशो गुरुं काले संशयं परिपृष्टवान् ॥
भगवन्! पञ्च कर्म्माणि समस्तानि पृथक्तया।
निर्द्दिष्टान्यामयानान्तु सर्व्वेषामेव भेषजम् ॥
दोषजोऽस्त्यामयः कश्चिद्यस्यैतानि भिषग्वर! ।
न स्युः शक्ता निशमने साध्यस्य क्रियया ततः ॥
अस्त्यूरुस्तम्भ इत्युक्ते गुरुणा तस्य कारणम्।
सलिङ्गं भेषजं भूयः पृष्टस्तेनाब्रवीद्गुरुः" ॥ * ॥

निदानं सम्प्राप्तिलक्षणे च यथा ॥

"स्निग्धोष्णलघुशीतानि जीर्णाजीर्णे समश्नतः।
द्रवशुष्कदधिक्षीरग्राम्यानूपौदकामिषैः ॥
पिष्टव्यापन्नमद्यातिदिवास्वप्नप्रजागरैः।
लङ्घनाध्यशनायासभयवेगविधारणैः ॥
स्नेहाच्चामञ्चितश्लोष्ठे वातादीन् मेदसा सह।

इति हेमचन्द्रः ॥ षण्मभङ्गः । इति मेदिनी ॥ (मन्त्रभेदविशेषः । यथा, हरिवंशे ।
"ऊर्द्धांगुष्ठिमषेतस्य क्रतुः ऊर्द्धस्य भारत ! ॥)

ऊर्द्धु, ञ श आच्छादने । इति कविकल्पद्रुमः ॥ (अदां-उभं-सकं-सेट् ।) दीर्घादिर्द्धोपधः । रेफयोगान्मूर्द्धन्यः । तेन ऊर्णुनाव इत्यादौ निमित्ताभावान्मूर्द्धन्यातोर्णत्वाभावः । अत्र ऊर्णोति ऊर्णौति ऊर्णुते दिवं मेघः । इति दुर्गादासः ॥ (यथा, भट्टिः । १४ । १०२ ।
"ऊर्णुनाव च शस्त्रौघैर्वानरासामनीकिनीम्" ॥)

ऊर्द्दरः, पुं, ( ऊर्णेन बलेन दृणाति विदारयति । ऊर्ण + दृ + "ऊर्णिदृणातेरलचौ पूर्व्वपदान्त्यलोपश्च" । ५ । ४० । उणादिसूत्रेण अल् अत् वा । अरलेशार्थं प्रत्ययद्वयम् ।) शूरः । राक्षसः । इत्युणादिकोषः ॥ (कुसूलम् । धान्याद्याधारः ।
यथा, ऋग्वेदे । २ । १४ । ११ ॥ "ऊर्दरं एतता यवेनेद्रम्" । "ऊर्दरं कुसूलम्" इति भाष्यम् ॥ )

ऊर्द्धः, त्रि, उपरि । उच्छ्रितः । तुङ्गः । इति अन्त्यस्थवकारान्तोर्द्धशब्दार्थे मेदिनी ॥
अत्र ऊर्द्धशब्दो निर्ब्बकारः । तदुक्तं वर्णदेशनायां । उज्जिहीते उद्गच्छति उदो हाङो डप्रत्ययः आदिवर्णस्य ऊरादेशः । इति मधुमाधवादयः ॥ इति मृदङ्गभेदोर्द्धकशब्दस्य टीकायां भरतः ॥ ( यथा, महाभारते । सुद्गलध्यानप्राप्तौ । ३ । २६० । २ ।
"ऊर्द्धगः सत्पथः शश्वद्देवयानचरो मुने" ॥ )

ऊर्द्धकः, पुं, (ऊर्द्धः सन् कायतीति । ऊर्द्ध + कै शब्दे + क ।) ऊर्द्धकः । मृदङ्गविशेषः । इत्यमरटीकायां भरतमुकुटौ । (यथा शब्दार्णवे ।
"ऊर्द्धको गोपुच्छवत् सचितालोऽष्टाङ्गुलो मुखे ।
ध्वनोर्द्धं वाद्यते तेषां वादनं दुर्जनं न वा" ॥
तथाच चिन्तामणौ ।
"हरीतक्याकृतिस्त्वङ्कस्तथालिङ्ग्यो यवाकृतिः ।
ऊर्द्धको दण्डतुल्यः स्यात् मुरजा भेदतो मताः" ॥)

ऊर्द्धः, पुं, दण्डवत्स्थितः । यथा,—
"आसीन ऊर्द्धः प्रह्वो वा नियमो यत्र नेदृशः ।
तदासीनेन कर्त्तव्यं न प्रह्वेन न तिष्ठता" ॥
इत्यादि छन्दोगपरिशिष्टात् ॥ आसीनः उपविष्टः ।
"ऊर्द्धो दण्डवत् स्थितः प्रह्वोऽवनतपूर्ब्बकायः" ।
इति आह्निकतत्त्वम् ॥

ऊर्द्धः, त्रि, (उत् + हा + ड । आदिवर्णस्य ऊरादेशः ।) उच्छ्रितः । तुङ्गः । उपरिस्थात् । इति मेदिनी ॥ ऊर्द्धशब्दो दीर्घादिः अवकारो निर्व्वकारश्च । तथाच उपरि ध्मायते इति कलनिवसिऊर्द्धशब्दो वकारवानिति सुभूत्यादयः ॥
"कुर्व्वतीवमवैकल्पैर्भुवनं नीचमूर्द्धगैः ।
तस्मा चलाचीवाम्बेति चिमाचागममूर्द्धगैः" ॥
इति कीचकवधयमकम् ॥ (यथा, कुमारे १ । १६ ।)
"मह्यानि यस्यामकरोत्कराणि
प्रभोधयत्यूर्द्धमुखैर्मयूखैः" ।
ऊर्द्ध शब्दो मकारान्तोऽव्ययो दीर्घादिर्बकारवान् तथा अदन्तोऽनव्ययोऽपीति मधादिरादयः ॥



ऊर्द्धकः, पुं, (ऊर्द्धः सन् कायति शब्दायते इति । ऊर्द्ध + कै + क ।) मृदङ्गविशेषः । यथा,—
"ऊर्द्धको गोपुच्छवत् स चितालोऽष्टाङ्गुलो मुखे ।
ध्वनोर्द्धं वाद्यते तेषां वादनं दुर्जनं मता" ॥
इति भरतधृतशब्दार्णवः ॥ अपिच । "हरीतक्याकृतिस्त्वङ्कस्तथालिङ्ग्यो यवाकृतिः । ऊर्द्धको दण्डतुल्यः स्यान्मुरजा भेदतो मताः" ॥ अन्यटीकायान्तु । "यवमध्यतयोर्द्धकः" । इत्यमरटीकासारसुन्दरी ॥

ऊर्द्धकण्टी, स्त्री, (ऊर्द्धे कण्टः कण्टको यस्याः ।) महाशतावरी । इति राजनिर्घण्टः ॥
("महाशतावरी चान्या शतमूल्यूर्द्धकण्टिका" ।
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)

ऊर्द्धजानुः, त्रि, (ऊर्द्धे स्थूले जानुनी यस्य ।) उपरिभागे स्थूलजानुकः । तत्पर्य्यायः । ऊर्द्धज्ञुः २ । इत्यमरः ॥ (यथा, सांख्यायनश्रौतसूत्रम् १ । ५ । ८ ।
"उपविश्योर्द्धजानुः" । इति ॥)

ऊर्द्धज्ञः, त्रि, (ऊर्द्धे जानुनी यस्य । पृषोदरादित्वात् साधुः ।) ऊर्द्धजानुः । इति भरतो द्विरूपकोषश्च ॥

ऊर्द्धज्ञुः, त्रि, (ऊर्द्धे जानुनी यस्य । "ऊर्द्धात् विभाषा" । ५ । ४ । १३० । इति पक्षे ज्ञुः ।) ऊर्द्धजानुः । इत्यमरः ॥ (यथा, सांख्यायनश्रौतसूत्रम् । "ऊर्द्धज्ञुरनवानं यजति" ॥
तथाच माघे ११ । २१ ।
"त्वामयमनुभूय स्वप्नमूर्द्धज्ञुरेव" ॥)

ऊर्द्धदेवः, पुं, (ऊर्द्धः तुङ्गः श्रेष्ठो देवः ।) विष्णुः । इति शब्दरत्नावली ॥

ऊर्द्धन्दमः, त्रि, (ऊर्द्धम् + दम् + अच ।) ऊर्द्धस्थः ॥ इति त्रिकाण्डशेषः ॥ ऊर्द्धन्दम इति युक्तिसिद्धपाठः ॥

ऊर्द्धपादः, पुं, (ऊर्द्धाः पादा यस्य ।) शरभः । इति शब्दरत्नावली ॥ (ऊर्द्धपदे, त्रि ॥)

ऊर्द्धपुण्ड्रः, पुं, (ऊर्द्धः पुण्ड्रः इव ।) तिलकविशेषः । स तु ब्राह्मणललाटे पुण्ड्रेक्षुवत् चन्दनादिना कृतोर्द्धरेखाश्रयः । यथा । "ऊर्द्धपुण्ड्रे त्रिपुण्ड्रं स्यात् त्रिपुण्ड्रे नोर्द्धपुण्ड्रकमिति" ।
"ऊर्द्धपुण्ड्रं द्विजः कुर्य्याद्धरिमृत्स्नचन्दनैः" ।
इत्यादि च बहवः ॥
"ऊर्द्धपुण्ड्रं मृदा कुर्य्यात् त्रिपुण्ड्रं भस्मना सदा ।
तिलकं वै द्विजः कुर्य्याच्चन्दनेन यदृच्छया ॥
ऊर्द्धपुण्ड्रं द्विजः कुर्य्यात् क्षत्रियस्तु त्रिपुण्ड्रकम् ।
अर्द्धचन्द्रन्तु वैश्यस्य वर्त्तुलं शूद्रयोनिजः" ॥
इति आह्निकतत्त्वधृतब्रह्माण्डपुराणम् ॥ (ऊर्द्धपुण्ड्रधारिप्रशंसा यथा, ब्रह्मपुराणे ।
"अशुचिर्वाप्यनाचारो मनसा पापमाचरेत् ।
शुचिरेव भवेन्नित्यमूर्द्धपुण्ड्राङ्कितो नरः ॥
ऊर्द्धपुण्ड्रधरो मर्त्त्यो म्रियते यत्र कुत्रचित् ।
श्वपाकोऽपि विमानस्थो मम लोके महीयते" ॥
अस्य धारणे वैदिकद्विजभिन्न एवाधिकारी यदुक्तं देवीभागवते नारायणेन ॥
"ऊर्द्धपुण्ड्रं त्रिशूलं च वर्त्तुलं चतुरस्रकम् ।
अर्द्धचन्द्रादिकं लिङ्गं वेदनिष्ठो न धारयेत् ॥
अन्यथा चण्डालत्वं वेदधर्म्मानमाश्रितः ।
पुण्ड्रान्तरं भ्रमादापि ललाटेनैव धारयेत् ॥
ख्यातिकान्त्यादिसिद्ध्यर्थं चापि विष्णवागमादिषु ।
स्थितं पुण्ड्रान्तरं नैव धारयेत् वैदिको नरः" ॥
श्राद्धे ऊर्द्धपुण्ड्रादिविधिनिषेधव्यवस्था ।
यथा, निर्णयसिन्धौ हेमाद्रिः ।
"जपे होमे तथा दाने स्वाध्याये पितृकर्म्मणि ।
तत्सर्व्वं नश्यति क्षिप्रमूर्द्धपुण्ड्रं विना कृतम्" ॥
तथा च नारदः ।
"यज्ञो दानं जपो होमः स्वाध्यायः पितृकर्म्म च ।
वृथा भवति विप्रेन्द्राः ! ऊर्द्धपुण्ड्रं विना कृतम्" ॥
इत्यादिवचनात् पैत्रे कर्म्मणि ऊर्द्धपुण्ड्रधारणं विहितम् । केचित्तु ।
'ऊर्द्धपुण्ड्रो द्विजातीनामग्निहोत्रसमो विधिः ।
श्राद्धकाले तु संप्राप्ते कर्त्ता भोक्ता च वर्जयेत्" ॥
तथा,—
"वामहस्ते च ये दर्भा शूद्रे रक्तबलिस्तथा ।
ललाटे तिलकं दृष्ट्वा निराशाः पितरो गताः" ॥
इति संग्रहोक्तवचनात् तथा,—
"ऊर्द्धपुण्ड्रं त्रिपुण्ड्रं वा चन्द्राकारमथापि वा ।
श्राद्धकर्त्ता न कुर्व्वीत यावत् पिण्डान्न निर्वपेत्" ।
इति विष्णुप्रकाशवचनाच्च श्राद्धकाले ऊर्द्धपुण्ड्रादिकं न धार्य्यमित्याहुः । तन्न, यतः कुलाचारादेव व्यवस्था । यत्तु,—
"ललाटे पुण्ड्रकं दृष्ट्वा स्कन्धे माल्यं तथैव च ।
निराशाः पितरो यान्ति दृष्ट्वा च वृषलीपतिम्" ॥
इति हेमाद्रिधृतवचनम् तत् गन्धत्रिपुण्ड्रकविषयम् । अतः श्राद्धकाले गन्धत्रिपुण्ड्रकमेव न धार्य्यः । अन्यरूपन्तु धार्य्य एव । तथा च व्यासः ।
"वर्जयेत्तिलकं भाले श्राद्धकाले च सर्व्वदा ।
ऊर्द्धपुण्ड्रं त्रिपुण्ड्रं वा धारयेत्तु प्रयत्नतः" ॥)

ऊर्द्धरेताः, [स्] पुं, (ऊर्द्धं रेतो यस्य न पतति वीर्य्यं यस्येत्यर्थः ॥) महादेवः । इति त्रिकाण्डशेषः । (अष्टोत्तरसहस्रनामान्तर्गतो महादेवस्य नामभेदः । यथा महाभारते १३ । १७ । ४५ ।
"ऊर्द्धरेता ऊर्द्धलिङ्ग ऊर्द्धशायी नभस्थलः" ॥)
भीष्मः । (कृतसमावर्त्तनोऽपि भीष्मदेवः पितुः काम्यविवाहार्थं वैवाहिकधर्म्मं त्यक्तवान् अतस्तस्य ऊर्द्धरेतस्त्वं जातम् । एतद्विवरणन्तु महाभारते १ । सत्यवतीलाभोपाख्याने १०० अध्याये द्रष्टव्यम् ॥) मुनिविशेषः । तद्यथा । सनक-सनन्द-सनातन-सनत्कुमारादयः । (यथा, महाभारते २ । ब्रह्मसभावर्णने । ११ । ४९ ॥
"अष्टाशीतिसहस्राणि मुनीनामूर्द्धरेतसाम्" ॥
त्रि, विषयासङ्गरहितः । सन्न्यासी । यथा भारते शकुन्तलोपाख्याने,—
"ऊर्द्धरेता महाभागो भगवान् लोकपूजितः ।
चलेद्धि वृत्ताधर्म्मोऽपि न चलेत् संशितव्रतः" ॥)

ऊर्द्धलिङ्गः, पुं, (ऊर्द्धं लिङ्गं यस्य ।) महादेवः । इति हेमचन्द्रः ॥ (यथा, महाभारते १३ । १७ । ४५ ।
"ऊर्द्धरेता ऊर्द्धलिङ्ग ऊर्द्धशायी नभःस्थलः" ॥)

ऊर्द्धलोकः, पुं, (ऊर्द्धः उपरिस्थो लोकः ।) स्वर्गः । इति

हेमचन्द्रः ॥ ( यथा, मुग्धबोधे कारकप्रकरणे । ५ सूत्रम् ।

"रक्षांस्यखादयद्गाययदूर्द्ध्वंलोक-
मागमयल्लकपिभिरारायदाशु रामः" ॥)

ऊर्द्ध्वस्थः, त्रि, (ऊर्द्ध्वं तिष्ठति यः । ऊर्द्ध्व + स्था + क ।) उपरिस्थितः । तत्पर्य्यायः । ऊर्द्ध्वन्दमः २ । इति त्रिकाण्डशेषः ॥

ऊर्द्ध्वस्थितिः, स्त्री, (ऊर्द्ध्वा स्थितिर्यत्र ।) ऊर्द्ध्वाविष्ट । स तु अश्वस्य पृष्ठस्थानम् । तत्पर्य्यायः । पृष्ठकम् २ । इति त्रिकाण्डशेषः ॥ उपरिस्थितिः । उपरिस्थानम् ॥

ऊर्द्ध्वासितः, पुं, ( ऊर्द्ध्वं आसितः ।) कारवेल्लः । इति त्रिकाण्डशेषः ॥ करला इति भाषा ॥

ऊर्म्मिः, स्त्री, पुं, ( ऋच्छतीति । ऋ गतौ । "अर्त्ते-रूच" । ४ । ४४ । इति उणादिसूत्रेण मिः । अर्त्ते-रूरादेशश्च ॥) तरङ्गः । (यथा, रघुः । १२ । ८५ ।
"तमाधूतध्वजपटं व्योमगङ्गोर्म्मिवायुभिः" ॥)
प्रकाशः । वेगः । भङ्गः । वस्त्रसङ्कोचरेखा । वेदना । पीडा । इति मेदिनी ॥ उत्कण्ठा । इति हेमचन्द्रः ॥ "शोकमोहौ जरामृत्यू क्षुत्पिपासे षडूर्म्मयः" । इति श्रीभागवतटीका ॥
(क्षुधादयः षट्, यथा ;—
"बुभुक्षा च पिपासा च प्राणस्य मनसः स्मृतौ ।
शोकमोहौ शरीरस्य जरामृत्यू षडूर्म्मयः" ॥
(अश्वगतिभेदः । तल्लक्षणं यथा वैजयन्त्याम् ।
"मङ्गीकृतानामश्वानां गमनोन्नमनाकृतिः ।
अतिवेगसमायुक्ता गतिरूर्म्मिरुदाहृता" ॥
तथा च माघे ५ । ४ ।
"तूर्णं पयोधर इवोर्म्मिभिरापतन्तः" ॥)

ऊर्म्मिका, स्त्री, (ऊर्म्मिरिव । इवे प्रतिकृताविति कन् । ऊर्म्मिं प्रकाशं कायतीति वा । आतोऽनुपेति कः ।) उत्कण्ठा । भङ्गनादः । वस्त्रभङ्गः । अङ्गुलीयकम् । वीचिः । इति हेमचन्द्रः ॥

ऊर्म्मिमान्, [त्] त्रि, (ऊर्म्मिरस्यास्तीति । ऊर्म्मि + मतुप् ।) वक्रः । इत्यमरः ॥ ढेउखेलानिया इति भाषा । तरङ्गयुक्तः ॥ (यथा, महाभारते २ । द्रौपदीप्रश्ने ६३ । २८ ।
"दीर्घेषु नीलेष्वथ चोर्म्मिमत्सु
जग्राह केशेषु नरेन्द्रपत्नीम्" ॥)

ऊर्म्मिमाली, [न्] पुं, (ऊर्म्मीणां माला विद्यतेऽस्य । इनिः ।) समुद्रः । इति त्रिकाण्डशेषः ॥ ("चन्द्रं प्रवृद्धोर्म्मिरिवोर्म्मिमाली" । इति रघुः ५ । ६१ ।)

ऊर्व्वरा, स्त्री, उर्व्वरा । सर्व्वशस्याढ्या भूमी । इति शब्दरत्नावली । (व्युत्पत्तिस्तु ऋकारादौ उर्व्वराशब्दे द्रष्टव्या ॥)

ऊर्व्वशी, स्त्री, ( ऊरुमश्नुते स्वकारणत्वेन व्याप्नोति या । ऊरु + अश् + अच् + ङीष् । नारायणोरु-सम्भवत्वात् तथात्वम् ।) उर्व्वशी । स्वर्गवेश्याविशेषः । इत्यमरटीकायां रायमुकुटः ॥ (विवृतिस्तु ऋकारादौ उर्व्वशीशब्दे द्रष्टव्या ॥)

ऊर्व्वसी, स्त्री, (ऊरौ उषिता इति । पृषोदरादित्वात् साधुः ।) उर्व्वशी । इत्यमरटीकासारसुन्दरी ॥

ऊर्ष्याङ्गं, क्ली, (ऊर्ष्याः पृथिव्या अङ्गमिव ।) गोमयच्छत्रिका । तत्पर्य्यायः । दिलीरम् २ शिलीन्ध्रकम् ३ भूमिस्फोटम् ४ गोलासम् ५ । इति शब्दरत्नावली ॥

ऊर्षा, स्त्री, देवताडवृक्षम् । इति शब्दचन्द्रिका ॥

ऊलुपी, [न्] पुं, उलूपी । शिशुमारः । इत्यमरटीकासारसुन्दरी ॥ (जलजन्तुविशेषः ॥)

ऊलूकः, पुं, (उलूकशब्दोऽस्य व्युत्पत्तिर्द्रष्टव्या ।) उलूकः पेचकः । इत्यमरटीकायां रायमुकुटः ॥
(यथा, पञ्चतन्त्र ३ । ७७ ।
"ऊलूकं नृपतिं कृत्वा का नः सिद्धिर्भविष्यति" ॥)

ऊष रोगे । इति कविकल्पद्रुमः ॥ (भ्वादिं-परं सकं-सेट् ।) दीर्घादिः । "ऊषति सन्तं खलः" । इति दुर्गादासः ॥

ऊषं, क्ली, (ऊष् + क ।) प्रभातम् । इति शब्दरत्ना-[वली ॥

ऊषः, पुं, क्षारमृत्तिका । इत्यमरः ॥
(यथा मनुः ५ । १२० ।
"कौषेयाविकयोरूषैः कुतपानामरिष्टकैः" ।
"ऊषैः क्षारमृत्तिकाभिः" इति कुल्लूकभट्टः ।
कर्णविलम् । चन्द्रगाद्रिः ॥)

ऊषकं, क्ली, (ऊष + स्वार्थे कन् ।) प्रत्यूषम् । इति शब्दरत्नावली ।

ऊषणं, क्ली, (ऊष् + ल्युट् ।) मरिचम् । इति हेमचन्द्रः ॥ (मरिचार्थे पर्य्यायो यथा,—
"मरिचं वेल्लजं कृष्णमूषणं धर्म्मपत्तनम्" ॥
गुणाश्चास्य मरिचशब्दे ज्ञेयाः ॥ शुण्ठी च । एतदर्थे पर्य्यायो यथा,—
"शुण्ठी विश्वा च विश्वञ्च नागरं विश्वभेषजम् ।
ऊषणं कटुभद्रञ्च शृङ्गवेरं महौषधम्" ॥
गुणाश्च शुण्ठीशब्दे ज्ञातव्याः ॥ पिप्पलीमूलञ्च । एतदर्थे पर्य्यायो यथा,—
"ग्रन्थिकं पिप्पलीमूलमूषणं चटकाशिरः" ।
अस्य गुणाश्च पिप्पलीमूलशब्दे बोद्धव्याः । इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)

ऊषणा, स्त्री, उषणा । पिप्पली । इति शब्दरत्नावली ॥ (चविका । अस्याः पर्य्यायो यथा,—
"भवेच्चव्यन्तु चविका कथिता सा तथोषणा" ।
गुणाश्चास्याश्चविकाशब्दे बोध्याः । इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)

ऊषरः, त्रि, (ऊष् + र ।) क्षारभूमी । नोणा जायगा इति भाषा । तत्पर्य्यायः । ऊषवान् २ । इत्यमरः ॥
("तत्र विद्या न वप्तव्या शुभं बीजमिवोषरे" ।
इति मनुः । २ । ११२ । ऊषरा स्नुतिपत्तं कोपयेत् ।
प्रमाणं यथा ॥ "पित्तमूषरा" इति वैद्यकमाधवकृतरोगनिश्चये पाण्डुधिकारे ।)

ऊषरजं, क्ली, (ऊषर + जन् + ड ।) पांशवलवणम् । रोमकनामायस्कान्तभेदः । इति राजनिर्घण्टः ॥

ऊषवान्, [त्] त्रि, (ऊषो विद्यतेऽस्य । ऊष् + मतुप् । मस्य वः ।) ऊषरभूमी । इत्यमरः ॥

ऊषा, स्त्री, (उष + क + टाप् ।) उषा । अनिरुद्धभार्य्या । इति शब्दरत्नावली ॥ (तत्कथा च भागवते १० स्कन्धे ६२ अध्याये तथा हरिवंशे १७४ अध्याये बाणयुद्धे द्रष्टव्या ॥)

ऊह उ वितर्के । सन्देहादिविचारे । इति कविकल्पद्रुमः ॥ (भ्वादिं-आत्मं-सकं-सेट् ।) दीर्घादिः । सन्देहाद्विचारस्तर्कः । उ ऊहते धर्म्मं धीरः । यशः समूहमिव दिग्विकीर्णमिति गेर्व्वाक्योर्व्वाटे चेति परस्मैपदविधानाच्छन्दतम् । "अनुक्तमप्यूहति पण्डितो जनः" । इति गणकृतानित्यत्वादिति रमानाथः । वस्तुतस्तु पचादित्वाद्दनि ऊह इवाचरतीति क्वौ साध्यम् । इति दुर्गादासः ॥

ऊहः, त्रि, (ऊह् + घञ् ।) पूर्व्वाप्राप्तस्य उत्क्षेपणम् । तत्पर्य्यायः । अध्याहारः २ तर्कः ३ । इत्यमरः ॥ वितर्कः ४ । वूहः ५ व्यूहः ६ वितर्कणम् ७ अध्याहरणम् ८ ऊहनम् ९ प्रतर्कणम् १० । इति शब्दरत्नावली ॥ अपूर्व्वोत्प्रेक्षणम् । इति जैमिनिः ॥ असमवेतार्थकपदत्यागपूर्व्वकसमवेतार्थकपदसमभिव्याहारकरणम् । इति आह्निकतत्त्वटीका ॥ साकाङ्क्षवाक्यस्य पदान्तरेण आकाङ्क्षापूरणम् ॥ (ऊहनम् । आरोपः । यथा, महाभारते १३ । उमामहेश्वरसंवादे १४५ । ४३ ॥
"इमे मनुष्या दृश्यन्ते ऊहापोहविशारदाः ।
ज्ञानविज्ञानसम्पन्नाः प्रज्ञावन्तोऽथ कोविदाः" ॥
परीक्षणम् । सिद्धिभेदः ॥)

ऊहनी, स्त्री, (ऊह् + ल्युट् + ङीप् ।) सम्मार्जनी । इति शब्दरत्नावली ॥ झाँटा इति भाषा ॥

---

## ऋ

ऋ, ऋकारः । सप्तमस्वरवर्णः । अस्योच्चारणस्थानं मूर्द्धा । ("ऋटुरषाणां मूर्द्धा" । इत्युक्तेः । तथाच शिक्षायां "स्युर्मूर्द्धन्या ऋटुरषाः" । तथा च मुग्धबोधे । "ऋत्रयं टठडढणरषा मूर्द्धन्याः" । इति ।) न तु ऋस्वो दीर्घः प्लुतश्च भवति ॥ (एवं त्रिधापि उदात्तानुदात्तस्वरितभेदात् नवविधस्ततः प्रत्येकं अनुनासिकानुनासिकभेदादष्टादशविधश्च ।)

"ऋकारं परमेशानि कुण्डली मूर्त्तिमान् स्वयम् ।
अत्र ब्रह्मा च विष्णुश्च रुद्रश्चैव वरानने ॥
सदाशिवयुतं वर्णं सदा ईश्वरसंयुतम् ।
पञ्चवर्णमयं वर्णं चतुर्ज्ञानमयं तथा ॥
रक्तविद्युल्लताकारं ऋकारं प्रणमाम्यहम्" ॥
इति कामधेनुतन्त्रम् ॥ (वङ्गीयभाषायाम्) तस्य लेखनप्रकारादि यथा ।
"ऊर्द्ध्वादृक्षगता वक्रा त्रिकोणा वामतस्ततः ।
पुनस्त्वधोदक्षगता मात्रा शक्तिः परा स्मृता ॥
मात्रासु ब्रह्मविष्ण्वीशास्तिष्ठन्ति क्रमतः पराः" ।
इति वर्णोद्धारतन्त्रम् ॥ * ॥ तस्य नामानि यथा ।
"ऋः पूर्व्वदीर्घमुखी वक्रो देवमाता त्रिविक्रमः ।
भावभूतिः क्रिया क्रूरा रेचिका नासिका धृतः ॥
एकपादशिरो माला मण्डला शान्तिनी जलम् ।
कर्णः कामलता मेधा निवृत्तिर्गणनायकः ॥
रोहिणी शिवदूती च पूर्णगिरिश्च सप्तमी" ।
इति तन्त्रम् ॥ (मातृकान्यासेऽस्य दक्षिणनासायामवस्थितत्वान्नासिकयाप्यभिधानम् । यथा, मातृका-

न्यासप्रकरणे "ऋं नमो दक्षिणशाखे ॠं नमो वामशाखे" । इति । अनुबन्धविशेषः । यथा, कविकल्पद्रुमः । "ऋः शात्वेऽलम् वेट् क्व क्तः । स्वङा-ऋक्तः" । एतेन ढौकृङ् गत्यामित्यस्य लुङि अडुढौकदिति सिद्धम् ॥)

ऋ, प्रापे । गत्याम् । इति कविकल्पद्रुमः ॥ (भ्वादिं-परं-सकं-अनिट् ।) प्रायः प्राप्तिः । "ऋच्छति धनं ज्ञती" । इति दुर्गादासः ॥

ऋ, इर् ञ गत्याम् । इति कविकल्पद्रुमः ॥ (अदां-परं-सकं-अनिट् ॥)

ऋ, र कि गत्याम् । (जुहो-परं-सकं-अनिट् ।) र वैदिकः । कि इयर्त्ति । शपो लुक्परत्वादस्य पक्ष-प्रानयोरेव ऋच्छादेशः । इयृच्छत् अभियृच्छागः । इति दुर्गादासः ॥

ऋ, र न हिंसने । इति कविकल्पद्रुमः ॥ (स्वां-परं-सकं-अनिट् ।) र वैदिकः । न ऋणोति । केषाञ्चित् तृतीयस्वरान्तोऽयमिति केचित् । इति दुर्गादासः ॥

ऋ, व्य गर्हणम् । वाक्यम् । देवमातरि स्त्री । इति मेदिनी ॥ (सम्बोधनम् ।) परिहासः । वाक्यविकारः इति शब्दरत्नावली ॥ ( पुं, स्वर्गः ॥)

ऋक्, [च्] स्त्री, (ऋच्यन्ते स्तूयन्ते देवा अनया । ऋच्+क्विप ।) वेदविशेषः । ऋग्वेदः । इत्यमरः ॥ अस्य एकविंशतिशाखाः । वेदमन्त्रविशेषः । तस्य लक्षणम् । यत्रार्थवशेन पादव्यवस्थितिः । अस्यार्थः । यत्रार्थवशेन एकान्वयित्वेनानुष्टुबादिपादस्थितिः । इति जैमिनिः ॥ (ऋग्यजुःसामाथर्व्ववेदाभिहितैरमरैश्चाशीर्विधानैरुपाध्याया भिषजश्च सम्ययोः रक्षां कुर्य्युः ॥ इति सुश्रुते सूत्रस्थाने ऊनविंशे अध्याये ॥)

ऋक्थं, क्ली, ( ऋच् स्तुतौ ऋच्+"पातृतुदिवचिरिचिसिचिभ्यस्थक्" ।२।७। इत्युणादिसूत्रेण थक् ।) धनम् । इत्यमरः ॥ स्वर्णम् । इत्युणादिकोषः ॥ (यदुक्तं शब्दार्णवे । "हिरण्यं द्रविणं द्युम्नं विक्तमृक्थं धनं वसु" ॥) पुत्रहीनस्य ऋक्थिनः" । इति याज्ञवल्क्यः । "ऋक्थमूलं हि कुटुम्बं" । इति दायभागे पितृधनविभागकालेऽभिहितम् ॥)

ऋक्ष, न र वधे । इति कविकल्पद्रुमः ॥ (स्वां-परं-सकं-सेट् ।) र वैदिकः । न ऋक्ष्णोति । इति दुर्गादासः ॥

ऋक्षं, क्ली, पुं, ( ऋष्+स । "स्नुव्रश्चिकृत्यृषिभ्यः कित्" । ३ । ६६ । इत्युणादिसूत्रेण कित् ।) नक्षत्रम् । इति मेदिनी ॥ (यथा, मनुः ।२।१०१ ।
"पूर्व्वां सन्ध्यां जपंस्तिष्ठेत् सावित्रीमार्कदर्शनात् ।
पश्चिमान्तु समासीनः सम्यगृक्षविभावनात्" ॥
तच्च अश्विन्यादिभेदेन सप्तविंशतिः ।) राशिः । इति ज्योतिषम् ॥ ( राशयश्च मेषवृषादिभेदेन द्वादश । अस्मिन्नर्थे प्रमाणं यथा रघौ । १२ ।२५ ।
"प्रययावातिथेयेषु वसन्नृषिकुलेषु सः ।
दक्षिणां दिशमृक्षेषु वार्षिकेष्विव भास्करः" ॥
"ऋक्षेषु नक्षत्रेषु राशिषु वा भास्कर इव" । इति तट्टीकायां मल्लिनाथः ॥ )

ऋक्षः, पुं, (ऋष्+क्स ।) पर्व्वतविशेषः ॥ (अयं हि कुलाचलानामेकः । यथा, सिद्धान्तशिरोमणौ ॥
"माहेन्द्रशुक्तिमलयर्क्षकपारियात्राः
सह्यः सविन्ध्य इह सप्त कुलाचलाख्याः" ॥ )
भल्लूकः । (यथा मनुः । १२ । ६७ ।
"हृत्वा मृगेभं व्याघ्रोऽश्वं फलमूलन्तु मर्कटः ।
स्त्रीमृक्षः स्तोककोवारि यानान्युष्ट्रः पशूनजः" ॥ )
श्योनाकवृक्षः । इति मेदिनी ॥ श्योनाकप्रभेदः । इति राजनिर्घण्टः ॥ (स्वनामख्यातोऽजमीढपुत्रः । यथा, हरिवंशे पुरुवंशानुकीर्त्तने । ३२ । ८७ ।
"धूमिन्या स तदा देव्या त्वजमीढः समेयिवान् ।
ऋक्षं स जनयामास धूमवर्णं सुदर्शनम्" ॥
स्वनामख्यातो विदूरथस्य पुत्रः ।
यथा, तत्रैव ३२ । १०४ ।
"विदूरथस्य दायद ऋक्ष एव महारथः" ॥
तथा स्वनामख्यातोऽरिहस्य पुत्रः । यथा, महाभारते १ । पुरुवंशानुकीर्त्तने । ९५ । २४ ।
"अरिहः खल्वाङ्गेयीमुपयेमे सुदेवां नाम तस्यां पुत्रमजीजनदृक्षम्" ॥ एतेन पुरुवंशे त्रयएव ऋक्षनामानो राजानः सम्भूताः ॥ )

ऋक्षगन्धा, स्त्री, ( ऋक्षस्येव गन्धो यस्याः ।) क्षुप-विशेषः । वीरताड इति ख्यातः । तत्पर्य्यायः । छगलान्त्री २ आवेगी ३ वृद्धदारकः ४ जुङ्गः ५ । इत्यमरः ॥ ऋषिगाकुल इति ख्यातो वृक्षश्च । तत्पर्य्यायः । ऋष्यगन्धा २ ऋषिगाकुलिका ३ इति रत्नमाला । क्षीरविदारीवृक्षः । तत्पर्य्यायः । महाश्वेता २ । क्षीरिका ३ । ऋक्षगन्धिका ४ । इति शब्दरत्नावली ॥ ( वृद्धदारकशब्देऽस्याः गुणादयो ज्ञेयाः ॥ )

ऋक्षगन्धिका, स्त्री, (ऋक्षगन्धा + स्वार्थे कन् । अत इत्वम् ।) क्षयाभूमिकुष्माण्डः । तत्पर्य्यायः । क्षीरविदारी २ महाश्वेता ३ । इत्यमरः ॥

ऋक्षरं,क्ली, (ऋषी गतौ । ऋष् + "तन्यृषिभ्यां क्सरन्" ।३।७५ । इत्युणादिसूत्रेण क्सरन् ।) वारिधारा । इति मेदिनी ॥

ऋक्षरः, पुं, ( ऋष + "तन्यृषिभ्यां क्सरन्" । ३ । ७५ । इत्युणादिसूत्रेण क्सरन् । ) ऋत्विक् । इति मेदिनी ॥

ऋक्षराजः, पुं, ( ऋक्षाणां भल्लूकानां राजा । राजाहःसखिभ्यष्टच् ।) जाम्बवान् । इति रामायणम् ॥ (यथा, हरिवंशे । ३८ । ३१ ।
"लेभे जाम्बवतीं कन्यामृक्षराजस्य सम्मताम्" ॥)

ऋक्षेशः, पुं, (ऋक्षाणां नक्षत्राणामीशः ।) चन्द्रः । इति हलायुधः ॥

ऋच, श स्तुत्याम् । इति कविकल्पद्रुमः ॥ (तुदां-परं-सकं-सेट् ।) श ऋचति । आनर्च । इति दुर्गादासः ॥

ऋचीषं, क्ली, (ऋचतीति । ऋच् + बाहुलकात् कीषन् ।) पिष्टकभर्ज्जनपात्रम् । इति हेमचन्द्रः ॥

ऋच्छ, श मूर्त्तौ । गमने । मोहे । इति कविकल्पद्रुमः ॥ (तुदां-परं-सकं अकं-च-सेट् ।) श ऋच्छती ऋच्छन्ती । मूर्त्तिः काठिन्यभावः । "मूर्त्तिः काठिन्यकाययोरित्यमरात् । ऋच्छति घृतं कठिनं स्यादित्यर्थः । ऋच्छति वृक्षो गच्छति मुह्यति वेत्यर्थः । मोहस्थाने इन्द्रियप्रलयं पठन्ति प्राञ्चः । ऋच्छति वृद्धस्येन्द्रियं प्रलीयते इत्यर्थः । इति रमानाथः" ॥ इति दुर्गादासः ॥

ऋच्छरा, स्त्री, ( ऋच्छति परपुरुषं प्राप्नोतीति । ऋच्छ + "ऋच्छेररः" ३ । १३१ । इत्युणादिसूत्रेण अरः । अरन् इति प्रमाद इति पारायणीयम् ।) वेश्या । इत्युणादिकोषः ॥ (यथा, अथर्व्ववेदे १० । ९२० । "ऋच्छरा ये च ते शफाः" ॥)

ऋज, उ गत्याम् । स्थैर्य्ये । ऊर्ज्जने । अर्ज्जने । इति कविकल्पद्रुमः ॥ (भ्वादिं-आत्मं-सकं-अकं-च-सेट् ।) उ अर्ज्जते । ऊर्ज्जनं जीवनं बलवत्त्वञ्च । इति दुर्गादासः ॥

ऋज, इ उ भर्जि । इति कविकल्पद्रुमः ॥ (इदित् भ्वादिं-आत्मं-सकं-सेट् ।) ऋञ्जादिः । भर्जि भर्जने । इ ऋञ्ज्यते । उ ऋञ्जते मत्स्यं सूपकारः । इति दुर्गादासः ॥

ऋजीषं, क्ली, (अर्ज्जते रसोऽस्मादिति । ऋज् + "अर्ज्जिदृशिकम्यमिपंसि ... ऋजश्च" इत्युणादिसूत्रेण ईषन् ।) पिष्टपचनम् । पिष्टकभर्जनपात्रम् । इति हेमचन्द्रामरौ ॥ नरकविशेषः । अत्र पिष्टपचनप्रक्षेपः ।
(यथा, मनुः ४ । ९० ।
"लोहशङ्कुमृजीषञ्च पन्थानं शाल्मलीं नदीम्" ॥
धनम् । सोमलताया उद्धृतो रसः । यथा, ऋग्वेदे ३ । ४३ । ५ । "कुविन्मा गोपां करसे जनस्य कुविद्राजानं मघवन्नृजीषिन्" । "ऋजीषिन् सोमवन्" । इति भाष्यम्" ॥)

ऋजु, त्रि, (अर्जयति गुणान् । अर्ज अर्जने । "अर्जिदृशीति" । १ । २८ । उणादिसूत्रेण साधुः ।) अवक्रम् । सोजा इति भाषा । तत्पर्य्यायः । अजिह्मम् २ प्रगुणम् ३ । इत्यमरः ॥ प्राञ्जलः ४ सरलः ५ । इति जटाधरः ॥
("उमां स पश्यन् ऋजुनैव चक्षुषा" ।
इति कुमारे ५ । ३२ ॥ यथा, मनुः । २ । ४७ ।
"ऋजवस्ते तु सर्व्वे स्युरव्रणाः सौम्यदर्शनाः" ॥
स्त्रियां ङीषपक्षे यथा, माघे १२ । १८ ।
"ऋज्वीर्दधानैरवलम्ब्य कन्धराः
श्चलावचूडाः कलघर्घरारवैः ॥
अनुकूलम् । यथा, ऋग्वेदे ५ । ४१ । १५ ।
"ऋजुहस्ता ऋजुवनिः" । "ऋजुहस्तास्सदनुकूलहस्ताः" । इति भाष्यम् ॥ शोभनम् । यथा ऋग्वेदे ५ । ४४ । ५ । "धारवाकेष्वृजुगाथः" । "ऋजुगाथः शोभनस्तुतिकः" । इति भाष्यम् ॥ वसुदेवपुत्रभेदे पुं । यथा भागवते ९ । २४ । ५४ ।
"ऋजुं संमर्द्दनं भद्रं संकर्षणमहीश्वरम्" ॥)

ऋजुकायः, पुं, (ऋजुः सरलः कायो यस्य ।) काश्यपमुनिः । इति जटाधरः ॥ अवक्रशरीरे त्रि ॥
("तस्मिन् स्वस्तिसमासीन ऋजुकायः समभ्यसेत्" ।
इति भागवते २ । २८ । ८ ॥)

ऋज्रः, पुं, (ऋज् + "ऋज्रेन्द्राग्रवज्रेति" । २ । २८ ॥ उणादिसूत्रेण निपातनात् रन् गुणाभावश्च ।) नायकः । इत्युणादिकोषः ॥ (सरलगामिनि, त्रि । यथा ऋग्वेदे १ । ११७ । १४ । "युवं भुज्युमर्णसो निः समुद्राद्विभिरूहथुर्ऋज्रेभिरश्वैः" ।

"ऋचेभिः ऋतुमाभिर्भिः" । इति भाष्यम्"॥)

ऋञ्जसानः, पुं, ( ऋजि + "ऋञ्जिवृधिमन्दिसहिभ्यः किन्" । २ । ८७ । इत्युणादिसूत्रेण असानच् । किच्च ।) मेघः । इति सिद्धान्तकौमुद्यां उणादिवृत्तिः ॥)

ऋण, उ ङ न गतौ । इति कविकल्पद्रुमः ॥ (तनां-उभं-सकं-सेट् ।) उ न ऋणोति अर्णोति ऋणुते अर्णुते । उ अर्णित्वा ऋत्वा । इति दुर्गादासः ॥

ऋणं, क्ली, (ऋ + क्त । ऋणमाधमर्ण्ये इति सूत्रम् ।) धारः । देना इति भाषा । तत्पर्य्यायः । पर्युदञ्चनम् २ उद्धारः ३ । इत्यमरः ॥ पुनर्देयत्वेन स्वीकृत्य यत् गृहीतम् । इति जगदीशः ॥ अस्य विवरणं ऋणादानशब्दे द्रष्टव्यम् ॥ * ॥

कुसीदाख्यं ऋणं यथा ।

"ऋणलाभनिमित्तं यद्दानग्रहणमिष्यते ।

तत्कुसीदमिति ज्ञेयं तेन वृत्तिः कुसीदिनाम्" ॥

इति नारदः ॥ अस्यार्थः । ऋणं मूलधनावस्थानम् लाभो वृद्धिः । दानग्रहणपदे कर्म्मण्यनटा साध्ये तेन मूलधनावस्थाने सत्येव यो लाभस्तदर्थं यद्दानं धनिकेन दीयमानं मूलधनं अधमर्णेन च ग्रहणं तथा स्वीकृत्य गृह्यमाणं यत्तद्धनम् । इति रत्नाकरादयः ॥ कलाप्रभृत्ये तु अवश्याप्राकरणीयत्व-रूपगुणयोगाद्गौणप्रयोगः । अतएव वाणिज्यार्थ-प्रयुक्तस्य नवीनं इति मिश्राः ॥ * ॥ अपि च ।

"कुत्सितात् सीदतश्चैव निर्विशङ्कैः प्रगृह्यते ।

चतुर्गुणं चाष्टगुणं कुसीदाख्यमतः स्मृतः" ॥

इति बृहस्पतिः ॥ अस्यार्थः । कुत्सितात् सीदतश्चाधमर्णात् सकलं धनं यत् गृह्यते निर्विशङ्कैरुत्तमर्णैः । चतुर्गुणं चेति वाकारोऽनास्थायां तेन द्वैगुण्यादिलाभः ॥ * ॥ ऋणत्रयविशेषो यथा ।

"देवानाञ्च पितॄणाञ्च ऋषीणाञ्च तथा नरः ।

ऋणवान् जायते यस्मात्तन्मोक्षे प्रयतेत् सदा ॥"*॥

तत्परिशोधनमाह ।

"देवानामनृणो जन्तुर्यज्ञैर्भवति मानवः ।

अध्यक्षित्य पूजाभिर्व्रतवासकृतैस्तथा ॥

श्राद्धेन प्रजया चैव पितॄणामनृणो भवेत् ।

ऋषीणां ब्रह्मचर्य्येण श्रुतेन तपसा तथा" ॥

इति विष्णुधर्म्मोत्तरम् ॥ (जलदुर्गमभूमिः । यथा मुग्धबोधे १ । २८ सूत्रस्य टीकायां दुर्गादासः । "दशार्णो देशः दशार्णा नदी उभयत्र ऋणशब्देन जलदुर्गमभूमिरुच्यते" ॥ अस्मृष्टास्त्वोत्तः कुतश्चिदपि राशन्तरात् वियोज्य संख्यावान् पदार्थः । यथा बीजगणिते ।

"धनर्णसङ्कलने करणसूत्रं वृत्तार्द्धम् ।

योगे युतिः स्यात् क्षययोः स्वयोर्वा

धनर्णयोरन्तरमेव योगः" ॥

ऋणातीति । ऋण गतौ तस्मात्कः । इति व्युत्पत्त्या वाच्यलिङ्गः । गन्ता । गमनशीलः । यथा, ऋग्वेदे ६ । १२ । ५ । "तद्यो यः स्पन्द्रो विनितो यवोया-ऋणो न तायुरतिधन्वा राट्" । "ऋणः शीघ्र-गन्ता" इति भाष्यम् ॥)

ऋणमत्कुणः, पुं, (ऋणे मत्कुण इव ।) बन्धकः । इति शब्दरत्नावली ॥ जामिन इति भाषा ॥

ऋणमार्गणः, पुं, (ऋणं मार्गयति यः सः । ऋण + मार्ग + ल्यु ।) प्रतिभूः । इति शब्दावली ॥ जामिन इति भाषा ॥

ऋणमुक्तिः, स्त्री, (ऋणस्य ऋणात् वा मुक्ति-र्मोचनं मत्यस्मात् ।) ऋणपरिशोधनम् । तत्-पर्य्यायः । विगयनम् २ । इति त्रिकाण्डशेषः ॥

ऋणमोक्षः, पुं, (ऋणात् मोक्षः ।) ऋणपरिशो-धनम् । इति शब्दावली ॥

ऋणादानं, क्ली, (ऋणस्य आदानम् ग्रहणम् ।) अधम-र्णात् उत्तमर्णेन स्वधनग्रहणम् । तत्तु अष्टा-दशविवादान्तर्गतविवादः । (यदाह मनुः । ८।४।

"तेषामाद्यमृणादानं निक्षेपोऽस्वामिविक्रयः" ।

इत्यादि ।) तच्च सप्तविधं यथा । ईदृशमृणं देयम् १ ईदृशमदेयम् २ अनेनाधिकारिणा देयम् ३ अस्मिन् समये देयं ४ अनेन प्रकारेण देयं ५ इत्यधमर्ण पञ्चविधम् । उत्तमर्णे तु दानविधिः ६ आदान-विधिश्च ७ इति द्विविधम् । तथाच नारदः ।

"ऋणन्देयमदेयञ्च येन यत्र यथा भवेत् ।

दानग्रहणधर्म्माश्च ऋणादानमिति स्मृतम् ॥

अदेयमिति यदुक्तं तदाह कात्यायनः ।

न स्त्रीभ्यो दासबालेभ्यः प्रदद्यात् किञ्चिदृणम् ।

दाता न लभते तत्तु तेभ्यो दत्तन्तु यद्वसु" ॥

तत्र विशेषमाह बृहस्पतिः ।

"परिपूर्णं गृहीत्वाधिं बन्धं वा साधुलग्नकम् ।

लेख्यारूढं साक्षिमद्वा ऋणं दद्यात् धनी सदा" ॥

इति विवादार्णवसेतुः ॥ अस्य यदवशिष्टं ऋणोद्-ग्राहणशब्दे द्रष्टव्यम् ॥

ऋणान्तकः, पुं, (ऋणमन्तयति यः । ऋण + अन्ति नामधातु + ण्वुल् । मङ्गलग्रहाराधनेन ऋणाप-नयनात् तथात्वम् ।) मङ्गलग्रहः । इति शब्द-रत्नावली ॥

ऋणापनोदनं, क्ली, (ऋण + अप + नुद + ल्युट् । ततः षष्ठीतत्पुरुषः ।) ऋणापनयनम् । धारशोधनम् ॥

ऋणी, [न्] त्रि, (ऋणमस्यास्तीति । ऋण + इनि ।) ऋणग्रस्तः । धारी ॥

("जायमानो वै ब्राह्मणः त्रिभिरृणैरृणी भवति"। इति श्रुतिः । "ऋणी न स्यात् यथा पिता" । इति दायभागे ॥)

ऋणोद्ग्राहणं, क्ली, (ऋणस्य उद्ग्राहणं ।) अधमर्ण-गृहीतर्णग्रहणं । यत्र ऋणं प्रार्थनकाले प्रार्थितो-ऽपि ऋणी न ददाति तत्र धनिकेन यत् कार्य्यं तदाह मनुः । ८।४८—४९ ।

"यैर्यैरुपायैरर्थं स्वं प्राप्नुयादुत्तमर्णिकः ।

तैस्तैरुपायैः संगृह्य साधयेदधमर्णिकम्" ॥

धर्म्मेण व्यवहारेण छलेनाचरितेन च ।

प्रयुक्तं साधयेदर्थं पञ्चमेन बलेन च" ॥

अयमर्थः । पूर्व्वपूर्व्वसामर्थ्याभावे उत्तरोत्तरम् संगृह्य वशीकृत्य । धर्म्मं बृहस्पतिराह ।

"सुहृत्सम्बन्धिसन्दिष्टैः सामोक्त्यानुगमेन च ।

प्रायेण वा ऋणी दाप्यो धर्म्म एष उदाहृतः" ॥

अस्यार्थः । ऋणिकस्य ये सुहृत्सम्बन्धिनस्तैरन्देशो यो यत्र सामवचनं पश्चादनुगमनं प्रायोपवेशनं वा धनिकस्य तद्धर्म्मं ऋणोद्ग्राहणोपायः ॥ व्यवहारे कात्यायनः ।

"धार्य्योऽवश्यं ऋणिकः प्रकाशं जनसंसदि ।

यावन्न दद्याद्देयञ्च देशाचारस्थितिर्यथा" ॥

अस्यार्थः । यावद्दानं जनसंसदि ऋणिकस्य धनिकेन धारणं व्यवहारः ॥ छलाचरितबलात्कारेषु बृहस्पतिः ।

"छद्मना याचितार्थमानीय ऋणिकाद्धनी ।

अन्वाहितादि वाहृत्य दाप्यते यत्र सोपधिः" ॥

अस्यार्थः । ऋणिकस्य धनमन्वाहितादि वा छद्मना आहृत्य वा यत्र दाप्यते तत्र साधनोपायः सोपधिः छलमुच्यते ॥

"पुत्त्रदारपशून् बद्ध्वा कृत्वा द्वारोपवेशनम् ।

यत्रर्णी दाप्यतेऽर्थं स्वं तदाचरितमुच्यते ॥

बद्ध्वा स्वगृहमानीय ताडनाद्यैरुपक्रमैः ।

ऋणिको दाप्यते यत्र बलात्कारः स उच्यते" ॥

अनयोरर्थः । पुत्त्रदारपश्ववरोधो द्वारोपवेशनञ्च य उद्ग्राहणोपायस्तदाचरितमुच्यते । स्वगृहमानीय ताडनादिलक्षण उद्ग्राहणोपायो बलात्कार उच्यते ॥ * ॥ कोऽधमर्णः केनोपायेन साध्यस्तदाह कात्यायनः ।

"राजानं स्वामिनं विप्रं सान्त्वेनैव प्रसाधयेत् ।

ऋणिनं दुर्हृदं वापि छलेनैव प्रसाधयेत्" ॥

ऋणिनं दायादम् ॥ तथा

"वणिजः कर्षकांश्चैव शिल्पिनश्चाब्रवीद् भृगुः ।

देशाचारेण दाप्याः स्युर्दुष्टान् संपीड्य दापयेत् ॥"*॥

यत्र धनं न लभ्यते तत्राह बृहस्पतिः ।

"निर्धनं ऋणिकं कर्म्म गृहमानीय कारयेत् ।

शौण्डिकाद्यं ब्राह्मणस्तु दापनीयः शनैः शनैः" ॥

याज्ञवल्क्यः,—

"हीनजातिं परिक्षीणमृणार्थं कर्म्म कारयेत् ।

ब्राह्मणस्तु परिक्षीणः शनैर्दाप्यो यथोदयम् ॥

यथोदयं यथा धनोत्पत्तिरित्यर्थः ॥ * ॥ व्यापार-द्वारा न ब्राह्मणस्य ऋणशोधनमाह कात्यायनः ।

"कर्म्मणा त्वसवित्सुभान् समहीनांस्तु दापयेत्" ॥*

ऋणशोधनाय निन्दितं कर्म्म कारयितुमुत्तमर्णस्य दण्डमाह कात्यायनः ।

"यदि स्त्रादावनादिष्टमशुभं कर्म्म कारयेत् ।

प्राप्नुयात् साहसं पूर्व्वमृणकान्मुच्येत धर्म्मिकः ॥ * ।

यदि परमदरिद्रप्राप्तं धनमृणिको दातुं न शक्नोति तदा वचनद्वारा लेखया धारयेत् । यथा बृहस्पतिः ।

"पूर्व्वावधौ तान्तलाभमृणमुद्ग्राहयेद्धनी ।

कारयेद्वा धनी लेख्यं पञ्चचत्वारिंशकया" ॥

तथा च बृहस्पतिः ।

"हिरण्ये द्विगुणीभूते मृते नष्टेऽधमर्णिके ।

द्रव्यं तदीयं संगृह्य विक्रीणीत ससाक्षिकम् ॥

रक्षेद्वा कृतमूल्यन्तु दद्यात् जनसंसदि ।

ऋणानुरूपं परतो गृहीतान्यत्तु वर्जयेत् ॥

सधनश्च विरोधेन याचमानः कुलीनैः ।

तद्बन्धुजातिविदितं प्रत्यर्पयेदृणम्" ॥*॥

यथाविषयं धर्म्मादीन् धनसाधनोपायान् प्रयुञ्जानो

न दाप्या निवर्त्तनीय इत्याह मनुः ।
“यः स्वयं साधयेदर्थमुत्तमर्णोऽधमर्णिकात् ।
स राज्ञा नाभियोक्तव्यः स्वकं संसाधयन् धनम्” ॥*॥
धनवता ऋणिकेनादत्ते ऋणे राजा स्वयं विंशति-
तमभागं गृहीत्वा उत्तमर्णाय दापयेत् इत्याह
नारदः ॥
“ऋणिकः सधनो यस्तु दौरात्म्यान्न प्रयच्छति ।
राज्ञा दापयितव्यः स्याद्गृहीत्वांशन्तु विंशकम्” ॥*॥
यदा अधमर्णिकः ऋणमखिलं दातुमसमर्थः सामर्थ्या-
नुसारेण दत्त्वा पूर्व्वकृतस्य लेख्यस्य पृष्ठेऽभिलिखेत्
एतावद्दत्तं उत्तमर्णेन उपगतं प्राप्तमिति धनी
तस्यैव लेख्यस्य पृष्ठे दद्यादभिलिखेत् इत्याह
याज्ञवल्क्यः ।
“लेख्यस्य पृष्ठेऽभिलिखेद्दत्त्वा दत्त्वाधमर्णिकः ।
धनी चोपगतं दद्यात् स्वहस्तपरिचिह्नितम्” ॥
इति विवादार्णवसेतुः ॥
ऋत, गत्याम् । स्पर्द्धे । ऐश्वर्य्ये । घृणायाम् । इति
कविकल्पद्रुमः ॥ (आदिं-परं-ईयङ्पक्षे आत्मं-
सकर्म्में सर्व्व, अन्यार्थे-अकं-सेट् ।) घृणा दया ।
ऋतीयते जनः स्पर्द्धते ईश्वरो भवति । किचि-
दृयते गच्छति वैरार्थः । परे तु ईयङोऽप्राप्तिपक्षे
परस्मैपदमेव । आर्त्तीत् आनर्त्त इत्यादि । इति
दुर्गादासः ॥
ऋतं, क्ली, (ऋ + क्त ।) उञ्छशिलम् । (यथा, मनुः ।
४ । ४—५ ॥
“ऋतामृताभ्यां जीवेत्तु मृतेन प्रमृतेन वा ।
सत्यानृताभ्यामपि वा न श्ववृत्त्या कदाचन ॥
ऋतमुञ्छशिलं ज्ञेयममृतं स्यादयाचितम् ।
मृतन्तु याचितं भैक्षं प्रमृतं कर्षणं स्मृतम्” ॥)
जलम् । (यथा, ऋग्वेदे । ७ । १०१ । ६ । “तन्म
ऋतं पातु शतशारदाय” । “ऋतमुदकम्” । इति
भाष्यम् ॥) सत्यं इति मेदिनी ॥ (यथा, मनुः ।
८ । ८२ ।
“साक्ष्येऽनृतं वदन् पाशैर्बध्यते वारुणैर्भृशम् ।
“विवशः शतमाजातीस्तस्मात् साक्ष्यं वदेदृतम्” ॥
कर्म्मफलं । यथा, “ऋतं पिबन्तौ सुकृतस्य लोके” ।
इति श्रुतिः ॥ विष्णुः ॥ यथा, महाभारते । १ ।
१ । २५६ ।
“भगवान् वासुदेवश्च कीर्त्त्यतेऽत्र सनातनः ।
स हि सत्यमृतञ्चैव पवित्रं पुण्यमेव च ।
शाश्वतं ब्रह्म परमं ध्रुवं ज्योतिः सनातनम्” ॥
पुं, सूर्य्यः । यथा, शतपथब्राह्मणे । “ब्रह्म वा
ऋतं ब्रह्म हि मित्रो ब्रह्म ऋतं ब्रह्म वरुणः” ॥
परब्रह्म । यथा, श्रुतिः । “ऋतमेकाक्षरं ब्रह्म” ॥
सत्याचारः । यथा, ऋग्वेदे । १ । १३७ । २ ।
“तवो मित्राय वरुणाय पीतये चारुर्ऋताय
पीतये” ॥ “ऋताय सत्याचाराय” । इति दया-
नन्दभाष्यम् ॥ यज्ञः । यथा, सामसामां सन्ध्यामन्त्रे
वन्दोपस्थाने । “ऋतमित्यस्य त्वाघमो वन ऋषि-
रनुष्टुप्छन्दो यज्ञो देवता वन्दोपस्थाने विनि-
योगः” ॥ देवभेदः । यथा, ऋग्वेदे । ४ । २३ । ८ ।
“ऋतस्य हि शुरुधः सन्ति पूर्व्वीर्ऋतस्य धीति-
र्वृजिनानि हन्ति” । “ऋतस्य ऋतदेवस्य” । इति
भाष्यम् ॥ यज्ञः । यथा, ऋग्वेदे । १ । १०५ । ५ ।
“ऋतमित्रि सत्यम्” । “ऋतस्य यज्ञस्य गतस्य
वा चित् ज्ञाता” । इति भाष्यम् ॥ अग्नेर्मूर्त्ति-
भेदः । यथा, यजुषि । १७ । ८२ । “ऋतश्च
सत्यश्च” । इति ॥)
ऋतः, त्रि, (ऋ + क्त ।) दीप्तः । पूजितः । इति
मेदिनी ॥
ऋतजित्, पुं, (ऋतं जयति ऋत + जि + क्विप् ।)
यक्षविशेषः । यथा,—
“त्वष्टा च जमदग्निश्च कम्बलोऽथ तिलोत्तमा ।
ब्रह्मापेतोऽथ ऋतजित् धृतराष्ट्रश्च सप्तमः ॥
माघमासे वसन्त्येते सप्त मैत्रेय भास्करे ।
श्रूयतां चापरे सूर्य्ये फाल्गुने निवसन्ति ये” ॥
इति श्रीविष्णुपुराणे २ । १० । १५—१६ । “त्वष्टा
सूर्य्यः । कम्बलः सर्पः । ब्रह्मापेतो राक्षसः । ऋत-
जिद्यक्षः । धृतराष्ट्रो गन्धर्व्वः । इति तट्टीकायां
श्रीधरस्वामी ॥ (त्रि, यज्ञजेता । यथा, यजुषि १७ ।
८३ । “ऋतजिच्च सत्यजिच्च सेनजिच्च सुषेणश्च” ॥)
ऋतधामा, [ न् ] पुं, (ऋतं सत्यं धाम भवनं यस्य ।)
विष्णुः । इति त्रिकाण्डशेषः ॥ (यथा यजुर्व्वेदे ५ । ३२ ।
“हव्यसूदन ऋतधामासि स्वर्ज्योतिः” ॥ इन्द्रभेदः ।
स तु रुद्रसावर्णिके मनौ भविता । यथा,—
भागवते । ८ । १३ । २८ ।
“भविता रुद्रसावर्णी राजन् ! द्वादशमो मनुः ।
ऋतधामा च देवेन्द्रो देवाश्च हरितादयः” ॥
यदुवंशीयो नृपतिभेदः । यथा, भागवते ।
“कङ्कस्य कर्णिकायां वै ऋतधामाजयावपि” ॥
अविनश्वरस्थानवति, त्रि । यथा यजुर्व्वेदे । १८ । ३८ ।
“ऋताषाडृतधामाग्निर्गन्धर्व्वस्तस्यौषधयः” ॥)
ऋतिः, स्त्री, (ऋ + करणे + क्तिन् ।) कल्याणम् । वर्त्म ।
जुगुप्सा । स्पर्द्धा । इति मेदिनी ॥ (भावे + क्तिन् ।)
गमनम् । अशुभम् । इति धरणी ॥ (पुरुषमेध-
यज्ञीयदेवभेदः । यथा, यजुर्व्वेदे । ३० । १३ ।
“ऋतये स्तेन हृदयम्” । अर्शौ पुं, इति निरुक्तिः ।)
ऋतीया, स्त्री, (ऋत + ईयङ् + टाप् ।) घृणार्थकः ।
जुगुप्सा । तत्पर्य्यायः । अर्त्तनम् २ ऋतीया ३ ।
इत्यमरः ॥
ऋतुः, पुं, (ऋ + “अर्त्तेश्च तुः” । इति उणादिसूत्रेण
१ । ७२ । तुः चकारात् कित् च ।) कालविशेषः ।
स तु षड्विधः यथा । मार्गपौषौ हिमः १ माघ-
फाल्गुनौ शिशिरः २ चैत्रवैशाखौ वसन्तः ३
ज्यैष्ठाषाढौ ग्रीष्मः ४ श्रावणभाद्रौ वर्षाः ५ आ-
श्विनकार्त्तिकौ शरत् ६ । इत्यमरः ॥ स त्रिविधो-
ऽपि । कार्त्तिकाग्रहायणपौषमाघाः शीतः १
फाल्गुनचैत्रवैशाखज्यैष्ठाः ग्रीष्मः २ आषाढश्रावण-
भाद्राश्विनाः वर्षाः ३ । द्विविधोऽपि । कार्त्तिका-
दिषण्मासाः शीतः १ वैशाखादिषण्मासाः ग्रीष्मः
२ । इति स्मृतिः ॥ * ॥
(वसुश्रुतम् ।
“मासद्वयात्मकः कालः ऋतुः प्रोक्तो विचक्षणैः” ।
यत्र तु “द्वादश मासाः पञ्चर्त्तवः” इति श्रुतं तत्र
हेमन्तशिशिरयोरेकीकरणं विवक्षितम् ॥
“चयकोपशमा यस्मिन् दोषाणां सम्भवन्ति हि ।
ऋतुषट्कं तदाख्यातं रवेः राशिषु संक्रमात् ॥
ग्रीष्मो मेषवृषौ प्रोक्तः प्रावृण्मिथुनकर्कटौ ।
सिंहकन्ये स्मृता वर्षा तुलावृश्चिकयोः शरत् ॥
धनुर्ग्राहौ च हेमन्तौ वसन्तः कुम्भमीनयोः” ।
मेषवृषौ रविणा संक्रान्तौ । एवं मिथुनकर्कटा-
दिष्वादि । अन्ये तु ।
“शिशिरः पुष्पसमयो ग्रीष्मो वर्षाशरद्धिमाः ।
माघादिमासयुग्मैः स्युर्ऋतवः षट् क्रमादमी” ॥
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमभागे ।
“वर्षाः शरच्च हेमन्तः शिशिरश्च वसन्तकः ।
ग्रीष्मश्चेति क्रमादेते ऋतवः षट् प्रकीर्त्तिताः ॥
पृथक् पृथक् प्रवक्ष्यामि रवेर्गतिविशेषतः” ।
इति प्रथमस्थाने चतुर्थेऽध्याये हारीतेनोक्तम् ॥
“मासैर्द्विसङ्ख्यैर्माघाद्यैः क्रमात् षडृतवः स्मृताः ।
शिशिरोऽथ वसन्तश्च ग्रीष्मवर्षा शरद्धिमाः” ॥
इति सूत्रस्थाने तृतीयेऽध्याये वाभटेनोक्तम् ॥
“इह खलु संवत्सरं षडङ्गमृतुविभागेन विद्यात्” ।
इति सूत्रस्थाने षष्ठोऽध्यायः ।
“तत्र खलु तावत् षोढा प्रविभज्य कार्य्यमुपदेक्ष्यते ।
हेमन्तो ग्रीष्मो वर्षाश्चेति शीतोष्णवर्षलक्षणास्त्रय
ऋतवो भवन्ति । तेषामन्तरेष्वितरे साधारण-
लक्षणास्त्रय ऋतवः प्रावृट्शरद्वसन्ता इति ।
प्रावृडिति प्रथमः प्रवृष्टेः कालस्तस्यानुबन्धो वर्षाः ।
एवमेते संशोधनमधिकृत्य षड् विभज्यन्ते
ऋतवः” ।
इति च विमानस्थानेऽष्टमेऽध्याये चरकेणोक्तम् ।
“तत्र माघादयो द्वादशमासा द्विमासिकमृतुं
कृत्वा षड़ृतवो भवन्ति । ते शिशिर-वसन्त-ग्रीष्म-
वर्षा-शरद्धेमन्ताः । तेषां तपस्तपस्यौ शिशिरः ।
मधुमाधवौ वसन्तः । शुचिशुक्रौ ग्रीष्मः । नभो-
नभस्यौ वर्षाः । इषोर्जौ शरत् । सहःसहस्यौ
हेमन्त इति ॥ तत्र ते शीतोष्णवर्षलक्षणाश्चन्द्रा-
दित्ययोः कालविभागकरत्वादयने द्वे भवतो-
दक्षिणमुत्तरञ्च” ।
“इह तु वर्षा-शरद्धेमन्त-वसन्त-ग्रीष्म-प्रावृषः षड़ृ-
तवो भवन्ति दोषोपचय-प्रकोपोपशम-निमित्तम् ।
ते तु भाद्रपदाद्येन द्विमासिकेन व्याख्याताः । तद्-
यथा । भाद्रपदाश्वयुजौ वर्षाः । कार्त्तिकमार्गशीर्षौ
शरत् । पौषमाघौ हेमन्तः । फाल्गुन-चैत्रौ
वसन्तः । वैशाख-ज्यैष्ठौ ग्रीष्मः । आषाढ़-श्रावणौ
प्रावृडिति” । इति सूत्रस्थाने ६ अध्याये सुश्रुते-
नोक्तम् ॥)
स्त्रीकुसुमम् । इति विश्वमेदिन्यौ ॥ तत्पर्य्यायः ।
रजः १ पुष्पम् २ आर्त्तवम् ३ । इत्यमरः ॥
यथाह मनुः । ३ । ४५-४६ ।
“ऋतुकालाभिगामी स्यात् स्वदारनिरतः सदा ।
पर्व्ववर्ज्जं व्रजेच्चैनां तद्व्रतो रतिकाम्यया ॥
ऋतुः स्वाभाविकः स्त्रीणां रात्रयः षोड़श स्मृताः ।
चतुर्भिरितरैः सार्द्धमहोभिः सद्विगर्हितैः ॥
तासामाद्याश्चतस्रस्तु निन्दितैकादशी च या ।

ऋतु

अमोघमी च प्रोक्तास्तु यास्वन्या रजनीत्रयः ॥
युग्मासु पुत्रा जायन्ते स्त्रियोऽयुग्मासु रात्रिषु ।
तस्मात् युग्मासु पुत्रार्थी संविशेदार्त्तवे स्त्रियम् ॥
पुमान् पुंसोऽधिके शुक्रे स्त्री भवत्यधिके स्त्रियाः ।
समेऽपुमान् पुंस्त्रियौ वा क्षीणेऽल्पे च विपर्ययः" ॥
"रजः षोडशदिनं यावत् ऋतुश्च भिषजां वर" ।
इति शारीरस्थाने प्रथमेऽध्याये हारीतेनोक्तम् ॥
"ऋतुस्तु द्वादशरात्रं भवति दृष्टार्त्तवम् ॥"
"नियतं दिवसेऽतीते सङ्कुचत्यम्बुजं यथा ।
ऋतौ व्यतीते नार्य्यास्तु योनिः संव्रियते तथा ॥
मासेनोपचितं काले धमनीभ्यां तदार्त्तवम् ।
ईषत् कृष्णं विगन्धञ्च वायुर्योनिमुखं नयेत् ॥
तद्वर्षाद्द्वादशात् काले वर्त्तमानमसृक् पुनः ।
जरापक्वशरीराणां याति पञ्चाशतः क्षयम्" ॥
इति शारीरस्थाने तृतीयेऽध्याये सुश्रुतेनोक्तम् ॥
"द्वादशाद्वत्सरादूर्द्ध्वमापञ्चाशत् समाः स्त्रियः ।
मासि मासि भगद्वारा प्रकृत्यैवार्त्तवं स्रवेत् ॥
आर्त्तवस्रावदिवसात् ऋतुः षोडशरात्रयः ।
गर्भग्रहणयोग्यस्तु स एव समयः स्मृतः" ॥
"सर्व्वासामेव वर्णानां स्त्रीणां सर्व्ववादिसम्मतः ।
पूर्व्वोक्तसमयः ग्रन्थान्तरेषु विशेषः । तद्यथा ।
स्नानदिवसादूर्द्ध्वं द्वादशरात्रावधि ब्राह्मण्याः । दश-
रात्रावधि क्षत्त्रियायाः । अष्टरात्रावधि वैश्यायाः ।
षड्रात्रावधि शूद्रायाः गर्भधारणे शक्तिः" ॥
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥
"पद्मं सङ्कोचमायाति दिनेऽतीते यथा तथा ।
ऋतावतीते योनिः सा शुक्रं नातः प्रतीच्छति ॥
मासेनोपचितं रक्तं धमनीभ्यामृतौ पुनः ।
ईषत्कृष्णं विगन्धञ्च वायुर्योनिमुखान्नुदेत्" ॥
"ऋतुस्तु द्वादशनिशाः पूर्व्वास्तिस्रश्च निन्दिताः" ॥
इति शारीरस्थाने प्रथमेऽध्याये वाभटेनोक्तम् ॥
शिवः । यथा महाभारते १३ । महादेवसहस्र-
नामकथने १७ । १३९ ।
"ऋतुः संवत्सरो मासः पक्षः संख्यासमापनः" ॥
विष्णुः । यथा, महाभारते १३ । विष्णुसहस्रनाम-
कथने १४९ । ५८ ।
"ऋतुः सुदर्शनः कालः परमेष्ठी परिग्रहः" ॥)
दीप्तिः । इति मेदिनी । मासः । सुवीरः । इति विश्वः ॥

ऋतुप्राप्तः, त्रि, ( ऋतुः प्राप्तोऽनेन । ) फलेग्रहिः ।
अवन्ध्यवृक्षादिः । इति शब्दचन्द्रिका ।

ऋतुमती, स्त्री, (ऋतुरस्या अस्तीति । ऋतु + मतुप्
+ ङीप् । ) ऋतुयुक्ता स्त्री । तत्पर्य्यायः । रज-
स्वला २ स्त्रीधर्म्मिणी ३ अवी ४ आत्रेयी ५
मलिनी ६ पुष्पवती ७ उदक्या ८ । इत्यमरः ।
(यथा, महाभारते ।१।३। ८७। "उपाध्यायानी
ते ऋतुमती उपाध्यायश्च प्रोषितोऽस्या यथाय-
मृतुर्वन्ध्यो न भवति तथा क्रियताम्" ॥

ऋतुमतीकृत्यमाह ।
"आर्त्तवस्रावदिवसात् स्वयं सा ब्रह्मचारिणी ।
शयीत दर्भशय्यायां पश्येदपि पतिं न च ॥
करे शरावे पर्णे वा हविष्यं त्र्यहमाचरेत् ।
अश्रुपातं नखच्छेदमभ्यङ्गमनुलेपनम् ॥
नेत्रयोरञ्जनं स्नानं दिवास्वप्नं प्रधावनम् ।
अत्युच्चशब्दश्रवणं हसनं बहुभाषणम् ॥
आयासं भूमिखननं प्रवातञ्च विवर्जयेत् ।
ततश्चतुर्थे दिवसे स्नाता शुक्लाम्बराद्दिभिः ।
भूषिताः सुमनाः पश्येत् भर्त्तारं समलङ्कृतम् ॥
पूर्व्वं पश्येत् ऋतुस्नाता यादृशं नरमङ्गना ।
तादृशं जनयेत् पुत्रं ततः पश्येत् पतिं प्रियम्" ॥
एतदकरणे प्रत्यवायमाह ।
"अज्ञानात् वा प्रमोदाद्वा लौल्याद्वा दैवतश्च वा ।
सा चेत् कुर्य्यात् निषिद्धानि गर्भदोषांस्तदाप्नुयात् ॥
एतस्या रोदनात् गर्भो भवेद्विकृतलोचनः ।
नखच्छेदेन कुनखी कुष्ठी त्वभ्यङ्गतो भवेत् ॥
अनुलेपात् तथा स्नानात् दुःखशीलोऽञ्जनाद्दृक् ।
स्वापशीलो दिवास्वापात् चञ्चलः स्यात् प्रधावनात् ॥
अत्युच्चशब्दश्रवणात् बधिरः खलु जायते ।
तालुदन्तौष्ठजिह्वासु श्यावो हसनतो भवेत् ॥
प्रलापी भूरिकथनात् उन्मत्तस्तु परिश्रमात् ।
स्खलतिर्भूमिखननात् उन्मत्तो वातसेवनात्" ॥
इति ।
"क्षामप्रसन्नवदनां स्फुरच्छ्रोणिपयोधराम् ।
स्रस्ताक्षिकुक्षिं पुंस्कामां विद्यादृतुमतीं स्त्रियम्" ॥
इति शारीरस्थाने प्रथमेऽध्याये वाभटेनोक्तम् ॥
"गते पुराणे रजसि नवे चावस्थिते पुनः शुद्ध-
स्नाता स्त्रियमव्यापन्नयोनिशोणितगर्भाशयामृतु-
मतीमाचक्षते" ।
इति शारीरस्थाने चतुर्थेऽध्याये चरकेणोक्तम् ॥
"पीनप्रसन्नवदनां प्रक्लिन्नात्मसुखद्विजाम् ।
नरकामां प्रियकथां स्रस्तकुक्ष्यक्षिमूर्द्धजाम् ॥
स्फुरद्भुजकुचश्रोणिनाभ्यूरुजघनस्फिचम् ।
हर्षौत्सुक्यपराञ्चापि विद्यादृतुमतीमिति" ॥
इति शारीरस्थाने तृतीयेऽध्याये,—
"तत शुद्धस्नातां चतुर्थेऽहन्यहतवासःसमलङ्कृतां
कृतमङ्गलस्वस्तिवाचनां भर्त्तारं दर्शयेत् । तत्
कस्य हेतोः ।
पूर्व्वं पश्येदृतुस्नाता यादृशं नरमङ्गना ।
तादृशं जनयेत् पुत्रं भर्त्तारं दर्शयेदतः ॥
ततो विधानं पुत्त्रीयमुपाध्यायः समाचरेत् ।
कर्म्मान्ते च क्रमं ह्येनमारभेत विचक्षणः" ॥
"तत्र प्रथमे दिवसे ऋतुमत्यां मैथुनगमनमना-
युष्यं पुंसां भवति । यश्च तत्राधीयते गर्भः स
प्रसवमानो विमुच्यते । द्वितीयेऽप्येवं सूतिकागृहे
वा । तृतीयेऽप्येवमसम्पूर्णाङ्गोऽल्पायुर्व्वा भवति ।
चतुर्थे तु सम्पूर्णाङ्गो दीर्घायुश्च भवति । न च
प्रवर्त्तमाने रक्ते बीजं प्रविष्टं गुणकरं भवति यथा
नद्यां प्रतिस्रोतः प्लाविद्रव्यं प्रक्षिप्तं प्रतिनिव-
र्त्तते नोर्द्ध्वं गच्छति तद्वदेव द्रष्टव्यम् । तस्मान्नि-
यमवतीं त्रिरात्रं परिहरेत् । अतः परं मासा-
दुपेयात्" । इति च शारीरस्थाने द्वितीयेऽध्याये
सुश्रुतेनोक्तम् ॥)

ऋतुराजः, पुं, ( ऋतूनां राजा । "राजाहःसखिभ्य-
ष्टच्" । ५ । ४ । ९१ । इति टच् ।) वसन्तकालः ।
इति राजनिर्घण्टः ॥

ऋतुवृत्तिः, पुं, (ऋतुषु वृत्तिर्वर्त्तनं यस्य ।) वत्सरः ।
इति त्रिकाण्डशेषः ॥

ऋतुसन्धिः, पुं, (ऋत्वोः सन्धिर्मेलनम् ।) ऋतुद्वयसन्धि-
कालः । स च ऋत्वोरन्त्यादिसप्ताहौ । तथाच
वाभटः ।
"ऋत्वोरन्त्यादिसप्ताहावृतुसन्धिरिति स्मृतः ।
तत्र पूर्व्वो विधिस्त्याज्यः सेवनीयः परो विधिः" ॥

ऋतुस्नानं, क्ली, ( ऋतौ स्नानम् ।) रजस्वलास्त्रियाः
चतुर्थाहकर्त्तव्यस्नानम् । इति स्मृतिः ॥ तत्स्ना-
नानन्तरं भर्त्तृवदनं द्रष्टव्यं नान्यस्य भर्त्तृसन्निधाने
भर्त्तारं मनसि ध्यात्वा सूर्य्यं विलोकयेत् । इति
काशीखण्डम् ॥
("ततः पुष्पोद्गमादेव कल्याणध्यायिनी त्र्यहम् ।
मृजालङ्काररहिता दर्भसंस्तरशायिनी ॥
क्षैरेयं यावकं स्तोकं कोष्ठशोधनकर्षणम् ।
पर्णे शरावे हस्ते वा भुञ्जीत ब्रह्मचारिणी ॥
चतुर्थेऽह्नि ततः स्नाता शुक्लमाल्याम्बरा शुचिः ।
इच्छन्ती भर्त्तृसदृशं पुत्रं पश्येत् पुरः पतिम्" ॥
इति शारीरस्थाने प्रथमेऽध्याये वाभटेनोक्तम् ॥)

ऋते, व्य, (ऋत + के ।) विना । वर्ज्जनम् । इत्यमरः ॥
("अवेहि मां प्रीतमृते तुरङ्गमात्" ।
इति रघुवंशे । ३ । ६३ ॥ तथा, कुमारे २ । ५७ ।
"अंशादृते निषिक्तस्य नीललोहितरेतसः" ॥)

ऋत्विक्, [ज्] पुं, (ऋतौ यजतीति । ऋतु + यज् +
ऋत्विगादिना क्विन्नन्तो निपातितः ।) पुरोहितः ।
यथा,—
"अग्न्याधेयं पाकयज्ञानग्निष्टोमादिकान्मखान् ।
यः करोति वृतो यस्य स तस्यर्त्विगिहोच्यते" ॥
इति मानवे २ । १४३ ॥ तत्पर्य्यायः । याजकः २ ।
इत्यमरः ॥ भरताः ३ कुरवः ४ वाग्यतः ५ वृक्त-
वर्हिषः ६ यतस्रुचः ७ मरुतः ८ सबाधः ९ देव-
यवः १० । इत्यष्टावृत्विङ्नामानि । इति वेदनि-
र्घण्टौ ३ अध्यायः ॥
अयं हि नायकस्य धर्म्मसहायः । यदुक्तं साहि-
त्यदर्पणे । ३ । ५१ । "ऋत्विक्पुरोधसः स्युर्ब्रह्म-
विदस्तापसास्तथा धर्म्मे" ॥)

ऋद्धं, क्ली, (ऋध् + क्त ।) सम्पन्नधान्यम् । इति मे-
दिनी ॥ परिपक्कमर्द्दितधान्यम् । इत्यमरटीकायां
भरतः ॥ वर्द्धितधान्यम् । इति सुभूतिः ॥ तत्प-
र्य्यायः । आवसितम् २ । इत्यमरः ॥ अवसितम् ३ ।
इति तट्टीका ॥ सिद्धान्तः । इति हेमचन्द्रः ॥
(पुं, विष्णुः । यथा, महाभारते विष्णुसहस्रनाम-
कीर्त्तने १३ । १४९ । ४३ ।
"ऋद्धः स्पष्टाक्षरो मन्त्रश्चन्द्रांशुर्भास्करद्युतिः" ॥)

ऋद्धः, त्रि, (ऋध् + क्त ।) समृद्धः । सम्पन्नः । इति
मेदिनीकरहेमचन्द्रौ ॥ (यथा, गीतायाम् । २ । ८ ।
"अवाप्य भूमावसपत्नमृद्धं
राज्यं सुराणामपि चाधिपत्यम्" ॥)

ऋद्धिः, स्त्री, (ऋध् + क्तिन् ।) अष्टवर्गान्तर्गतौषध-
विशेषः तत्पर्य्यायः । योग्यम् २ सिद्धिः ३ लक्ष्मीः
४ । इत्यमरः ॥ प्राणपदा ५ हृद्या ६ । इति रत्न-
माला ॥ प्राणदा ७ जीवदात्री ८ सिद्धा ९ योग्या

औषध

ॐ क्लीं भगिनि! देहि सौभाग्यं सर्व्वलोकमनोहरम्॥
दुरालभा वचा कुष्ठं कुङ्कुमञ्च शतावरी।
तिलतैलेन संयुक्तं योनिलेपाद्वशो नरः॥
निम्बकाष्ठस्य चूर्णेन धूपयित्वा भगं स्त्रियाः।
सुभगा स्यात् सा च रुद्र! पतिर्दासो भविष्यति॥
माहिषं नवनीतञ्च कुष्ठञ्च मधुयष्टिका।
सौभाग्यं भगलेपाच्च पतिर्दासो भवेत्तदा॥
मधुयष्टिञ्च तैलञ्चाङ्कोल्लीजं कण्टकारिका।
एतानि समभागानि पिबेदुष्णेन वारिणा॥
चतुर्भागावशेषेण गर्भसम्भवमुत्तमम्॥
मातुलुङ्गस्य बीजानि क्षीरेण सह भावयेत्।
तत्पीत्वा लभते गर्भं नात्र कार्य्या विचारणा।
मातुलुङ्गस्य बीजानि मूलान्येरण्डकस्य च॥
घृतेन सह संयोज्य पाययेत् पुत्रकाङ्क्षिणीम्।
अश्वगन्धाशृतं दुग्धं क्वथितं पुत्रकारकम्॥
पलाशस्य तु बीजानि क्षौद्रेण सह पेषयेत्।
एतज्जला तु पीत्वा स्यात् पुष्पगर्भविवर्ज्जिता"॥
इति गारुडे १८२ अध्यायः॥*॥

हरिरुवाच।

"हरितालं यवक्षारं पत्राङ्गं रक्तचन्दनम्।
जाती लिकुचकं लाक्षा पक्वतैलेन पेषयेत्॥
हरीतकीकषायेण क्षुद्रा दन्तान् प्रलेपयेत्।
दन्ताः स्वर्णोपमाः पुंसः श्वेता रुद्र! न संशयः॥
मूलकं क्षेदमग्नौ तु रसं तस्य प्रपेषयेत्।
कर्णयोः पूरणात्तेन कर्णस्रावो विनश्यति॥
अर्कपत्रं गृहीत्वा तु मन्दाग्नौ तापयेच्छनैः।
निष्पीड्य पूरयेत् कर्णौ कर्णशूलं विनश्यति॥
प्रियङ्गुमधुकाम्बष्ठाधातक्युत्पलपर्णिभिः।
मञ्जिष्ठालोध्रलाक्षाभिः कपित्थस्य रसेन च॥
पचेत्तैलं तथा गुल्मनाशे हिङ्गु महौषधम्।
शतपुष्पा वचा कुष्ठं दारु शिग्रु रसायनम्॥
सौवर्चलं यवक्षारं तथा सर्ज्जिकसैन्धवम्।
भुजग्रन्थि विडं मुस्तं मधुयुक्तं चतुर्गुणम्॥
मातुलुङ्गरसस्तद्वत् कदल्याश्च रसो हि तैः।
पक्वतैलं हरेदाशु स्रावादींश्च न संशयः॥
कर्णयोः कृमिनाशः स्यात् कटुतैलस्य पूरणात्।
हरिद्रा निम्बपत्राणि पिप्पल्यो मरिचानि च॥
विडङ्गं भद्रमुस्तञ्च सप्तमं विश्वभेषजम्।
गोमूत्रेण च पिष्ट्वैव कृत्वा च वटिकां हर!॥
अजीर्णाद्युद्भवेष्वेषा हयं विषूचिकापहम्।
पटलं मधुना हन्ति गोमूत्रेण तथार्व्वुदम्॥
रथा च शाङ्करी वर्त्तिः सर्व्वनेत्रामयापहा"।
इति गारुडे १८३ अध्यायः॥*॥

हरिरुवाच।

"वचा मांसी च बिल्वञ्च तगरं पद्मकेशरम्।
नागपुष्पं प्रियङ्गुञ्च समभागानि चूर्णयेत्॥
अनेन धूपितो मर्त्यः कामवद्विचरेन्महीम्।
कर्पूरं देवदारुञ्च मधुना सह योजयेत्॥
लिङ्गलेपाच्च तेनैव वशीकुर्य्यात् स्त्रियं किल।
मैथुनं पुरुषो गच्छेत् गृह्णीयात् स्वकमिन्द्रियम्॥
वामहस्तेन वामञ्च हस्तं यस्याः स्त्रिया लिपेत्।
चालिता स्त्री वशं याति नान्यं पुरुषमिच्छति॥

औषध

ओम् रक्तचामुण्डे अमुकं मे वशमानय वशमानय
ह्रीं क्रौं क्रः फट्।
इमं मन्त्रायुतं मन्त्रं तिलकेन च शङ्कर!।
गोरोचनासंयुतेन स्वरक्तेन वशीभवेत्॥
सैन्धवं कृष्णलवणं सौवीरं मत्स्यपित्तकम्।
मधु सर्पिः सितायुक्तं स्त्रीणां तद्भगलेपनम्॥
यः पुमान् मैथुनं गच्छेत् नान्यां नारीं गमिष्यति॥
शङ्खपुष्पी वचा मांसी सोमराजी च पद्मकम्।
माहिषं नवनीतञ्च गाढ़ीकरणमुत्तमम्।
समांशानि च पद्मानि क्षीरेणाज्येन पेषयेत्॥
गुटिकां शोषितां कृत्वा नारी योन्यां प्रवेशयेत्।
दशवारं प्रसूतापि पुनः कन्या भविष्यति॥
सर्षपाश्च वचा चैव मदनस्य फलानि च।
मार्ज्जारविष्ठाधुस्तूरस्त्रीकेशेन समन्वितः॥
चातुर्थकहरो धूपो डाकिनीभयनाशनः।
अर्ज्जुनस्य तु पुष्पाणि भल्लातकविडङ्गके॥
श्रीवेष्टकं सर्जरसं सौवीरं सर्षपास्तथा।
सर्पयूकामक्षिकाणां धूपो मशकनाशनः॥
भूलतायाश्च चूर्णेन स्तम्भः स्यात् योनिपूरणात्।
तेन लेपयतो योनौ भगस्तम्भश्च जायते"॥
इति गारुडे १८४ अध्यायः॥*॥

हरिरुवाच।

"आञ्जनञ्च घृतं क्षौद्रं लवणं ताम्रभाजने।
दृष्टं पयःसमायुक्तं चक्षुःशूलहरं परम्॥
हरितकी वचा कुष्ठं पिप्पल्यो मरिचानि च।
विभीतकस्य बीजानि हरितालं मनःशिला॥
सर्व्वाक्षिरोगग्रथ्यग्रनालीरसमन्विताः।
तत्क्षयात् पुष्पनाशः स्यात् मालतीकुसुमाञ्जनात्॥
विडङ्गं सैन्धवं कुष्ठं व्योषं हिङ्गु मनःशिला।
कासे श्वासे च हिक्कायां लिह्यात् क्षौद्रं घृतप्लुतम्॥
पिप्पलीत्रिफलाचूर्णं मधुना लेहयेन्नरः।
नश्यते पीनसः कासः श्वासश्च बलवत्तरः॥
समूलचित्रकं भस्म पिप्पलीचूर्णकं हरेत्।
कासं श्वासञ्च हिक्काञ्च मधुमिश्रं वृषध्वज!॥
नीलोत्पलं शर्करा च मधुकं पद्मकं समम्।
तण्डुलोदकसंमिश्रं प्रशमेद्रक्तविक्रियाम्॥
सुराठी च शर्करा चैव तथा क्षौद्रेण संयुता।
कोकिलस्वरश्च स्यात् गुल्मिकाभक्षणात्ततः॥
हरितालं शङ्खचूर्णं कदलीदलभस्मना।
एतद्द्रव्येण चोदर्थ लोमशातनमुत्तमम्॥
लवणं हरितालञ्च तगड़ल्याश्च फलानि च।
क्षाररससमायुक्तं लोमशातनमुत्तमम्॥
सुधा च हरितालञ्च शङ्खञ्चैव मनःशिला।
सैन्धवेन सहैकत्र छागमूत्रेण पेषयेत्॥
तस्याथोद्वर्त्तनादेव लोमशातनमुत्तमम्।
शङ्खमामलकीपत्रं धातक्याः कुसुमानि च॥
पिष्ट्वा तत् पयसा सार्द्धं नवाहं धारयेन्मुखे।
स्निग्धाः श्वेताश्च दन्ताश्च भवन्ति विमलप्रभाः"॥
इति गारुडे १८५ अध्यायः॥*॥

हरिरुवाच।

"शरद्ग्रीष्मवसन्तेषु प्रायशो दधि गर्हितम्।
हेमन्ते शिशिरे चैव वर्षासु दधि शस्यते॥

औषध

मुस्ते तु शर्करा पीता नवनीतेन वृद्धिकृत्।
गुड़श्च तु पुराणस्य पलमेकन्तु भक्षयेत्॥
प्रत्यहं वर्षमेकन्तु निरन्तरमथो हर!।
स्त्रीसहस्रञ्च गच्छेच्च पुमान् बलयुतो हर!॥
कुष्ठं सुचूर्णितं कृत्वा घृतमाक्षिकसंयुतम्।
भक्षणात् स्वप्नवेलायां वलीपलितनाशनम्॥
अलसीमाषगोधूमं चूर्णं कृत्वा च पिप्पलीम्।
घृतेन लेपयेद्गात्रमेभिः सार्द्धं विचक्षणः॥
कन्दर्पसदृशो मर्त्यो भवते नित्यमक्षयात्।
यवास्तिला अश्वगन्धा मुषली शरला गुड़म्॥
एभिश्च वटिकां भक्ष्या तरुणो बलवान् भवेत्।
हिङ्गु सौवर्चलं शुण्ठीं पीत्वा तु क्वथितोदकैः॥
परिणामाख्यशूलञ्च अजीर्णञ्चैव नश्यति॥
धातकीं सोमराजीञ्च मधुना सह पेषयेत्।
दुर्व्वलश्च भवेत् स्थूलो नात्र कार्य्या विचारणा।
शर्करामधुसंयुक्तं नवनीतं बली लिहेत्॥
क्षीराशी च क्षयी पुष्टिमेवाप्यैरतुलां लभेत्॥
कुलीरचूर्णं सक्षीरं पीतञ्च क्षयरोगनुत्।
भल्लातकं विडङ्गञ्च यवक्षारञ्च सैन्धवम्।
मनःशिला शङ्खचूर्णं तैलपक्वं तथैव च॥
लोमानि शातयत्येव नात्र कार्य्या विचारणा॥
मालूरस्य रसं गृह्य जलौकां तत्र पेषयेत्।
हस्तौ तु लेपयेत्तेन अग्निस्तम्भनमुत्तमम्॥
शाल्मलीरसमादाय खरमूत्रे निधाय तम्।
अग्न्यागारे क्षिपेत्तेन अग्निस्तम्भनमुत्तमम्॥
वायसी-उदरं गृह्य मण्डूकवसया सह।
गुटिकां कारयेत्तेन ततोऽग्नौ प्रक्षिपेद्वशी।
एवमेतत् प्रयोगेण अग्निस्तम्भनमुत्तमम्॥
मुस्तोलककषायश्च मरीचं नागरं तथा।
चर्व्वित्वा च इमं सद्यो जिह्वया ज्वलनं लिहेत्॥
गोरोचनाभेकराजं चूर्णीकृत्य घृतं समम्।
दिव्यास्तम्भस्तु स्तम्भः स्यात् मन्त्रेणानेन वै तथा॥
ॐ ह्रां अग्निस्तम्भनं कुरु। ॐ नमो भगवते जलं
स्तम्भय स्तम्भय सं सं लेक लेक चर चर।
जलस्तम्भनमन्त्रोऽयं जलं स्तम्भयते शिव!॥
मृगास्थि च गवास्थि च नृतनिर्माल्यमेव च।
अरेर्यो निखनेत् द्वारे पञ्चत्वमुपयाति सः॥
श्वेतदग्धी तु पुष्येण स्नाने पाने वशीकरा॥
यष्टीमधुपलैकेन पक्वमुद्गोदकं पिबेत्।
विषूचिकाञ्च हृच्छूलं हरत्येव महेश्वर!॥
ॐ क्षुः क्षः।
मन्त्रोऽयं हरते रुद्र! सर्पवृश्चिकजं विषम्।
पिप्पली नवनीतञ्च शृङ्गवेरञ्च सैन्धवम्॥
मरीचं दधि कुष्ठञ्च नस्ये पाने विषं हरेत्।
त्रिफलार्द्धककुष्ठञ्च चन्दनं घृतसंयुतम्॥
एतत्पानाच्च लेपाच्च विषनाशो भवेच्छिव!।
पारावतस्य चाक्षीणि हरितालं मनःशिला॥
एष योगो विषं हन्ति वैनतेय इवोरगान्॥
सैन्धवं त्र्यूषणं चूर्णं दधिमध्वाज्यसंयुतम्।
वृश्चिकस्य विषं हन्ति लेपोऽयं वृषभध्वज!।
श्वेतदग्धीशिफाम् क्वाथ्य चूर्णं त्रिकटुकं पिबेत्।
नाशयेद्धर! गुल्मानि निरोधं रक्तमेव च॥

पीत्वा क्षीरं क्षौद्रयुतं नाशयेद्रक्तदुर्गमम् ॥
अटरूषकमूलेन भगं नाभिञ्च लेपयेत् ।
सुखं प्रसूयते नारी नात्र कार्य्या विचारणा ॥
शर्करा मधुसंयुक्ता पीता तण्डुलवारिणा ।
रक्तातिसारशमनं भवतीति वृषध्वज !” ॥
इति गारुडे १८६ अध्यायः ॥ * ॥

हरिरुवाच ।

“मरीचं शृङ्गवेरञ्च कुटजत्वचमेव च ।
पानाच्च ग्रहणी नश्येत् शशाङ्ककृतशेखर ! ॥
पिप्पलीं पिप्पलीमूलं मरीचं तगरं वचाम् ।
देवदारुरसं पाठां क्षीरेण सह पेषयेत् ॥
अनेनैव प्रयोगेण अतीसारो विनश्यति ॥
मरीचतिलपुष्पाभ्यामञ्जनं कामलापहम् ।
हरीतकीसमगुडा मधुना सह योजिता ।
विरेचनकरी रुद्र ! भवतीति न संशयः ॥
त्रिफला चित्रकं चित्रं तथा कटुकरोहिणी ।
ऊरुस्तम्भहरो ह्येष उक्तमन्तु विरेचनम् ॥
हरीतकीं शृङ्गवेरं देवदारु च चन्दनम् ।
क्वाथयेच्छागदुग्धेन अपामार्गस्य मूलकम् ॥
मधुरामूत्रमूत्रलम्भं सप्तरात्रेण नाशयेत् ॥
नाटाच्च शृङ्गवेरञ्च तुल्यचूर्णानि कारयेत् ॥
गुग्गुलं गुडतुल्यञ्च गुलिकामुपयुज्य तु ।
वायुं वायुगतञ्चैव अग्निमान्द्यञ्च नाशयेत् ॥
शङ्खपुष्पीं तु पुष्येण समुद्धृत्य सपत्रिकाम् ।
समूलां छागदुग्धेन अपस्मारहरां पिबेत् ॥
कम्बुगन्धाभये चैव उदकेन समं पिबेत् ।
रक्तपित्तं विनश्येत नात्र कार्य्या विचारणा ॥
हरीतकीकुष्ठचूर्णं कृत्वा आस्यञ्च पूरयेत् ।
शीतं पीत्वाथ पानीयं सर्व्वच्छर्द्दिनिवारणम् ॥
गुडूची पद्मकारिष्टं धन्याकं रक्तचन्दनम् ।
पित्तश्लेष्मज्वरच्छर्द्दिदाहतृष्णाघ्नमग्निकृत् ॥
ॐ ह्रूँ नम इति ।
श्रोत्रे बद्धा शङ्खपुष्पीं ज्वरं मन्त्रेण वै हरेत् ।
ॐ जम्भनि स्तम्भनि विमोहय सर्व्वव्याधीन् मे वज्रेण ठ ठ सर्व्वव्याधीन् मे वज्रेण फट् । इति ॥
पुष्यमङ्गलतं जप्त्वा हस्ते दत्त्वाथ न स्पृशेत् ।
चातुर्थको ज्वरो रुद्र ! अन्ये चैव ज्वरास्तथा ॥
जम्बूफलं हरिद्रा च सर्पस्यैव च कञ्चुकम् ।
सर्व्वज्वराणां धूपोऽयं हर ! चातुर्थकस्य च ॥
करवीरं भृङ्गपत्रं लवणं कुष्ठकर्कटम् ।
चतुर्गुणेन मूत्रेण पचेत्तैलं हरेच्च तत् ॥
पामां विचर्च्चिकां कुष्ठमभ्यङ्गाद्व्रणानि वै ॥
पिप्पलीमधुपानाच्च तथा मधुरभोजनात् ॥
क्षीहा विनश्यते रुद्र ! तथा शूरणसेवनात् ॥
पिप्पलीञ्च हरिद्राञ्च गोमूत्रेण समन्विताम् ॥
प्रक्षिपेच्च गुदद्वारे अर्शांसि विनिवारयेत् ।
अजादुग्धमार्द्रकञ्च पीतं शोथापहं भवेत् ॥
सैन्धवञ्च विडङ्गानि सोमराजी तु सर्षपाः ।
रजनी द्वे त्रिफलाश्चैव गोमूत्रेण च पेषयेत् ॥
कुष्ठनाशश्च तल्लेपान्निम्बपत्रादनात्तथा” ॥
इति गारुडे १८७ अध्यायः ॥ * ॥

हरिरुवाच ।

“रजनीकदलीक्षारलेपः सिध्मविनाशनः ।
कुष्ठस्य नाशनेकन्तु पथ्याभागद्वयं तथा ॥
उष्णोदकेन संपीत्वा कटिशूलविनाशनम् ।
अभया नवनीतञ्च शर्करा पिप्पलीयुतम् ॥
पानादर्शोहरं स्याच्च नात्र कार्य्या विचारणा ।
अटरूषकपत्रेण घृतं च्छागमिना पचेत् ॥
चूर्णं कृत्वा तु लेपोऽयं अर्शोरोगहरः परः ।
गुग्गुलुं त्रिफलायुक्तं पीत्वा नश्येत् भगन्दरम् ॥
अजाक्षीं शृङ्गवेरञ्च दधिमण्डेन पाययेत् ।
लवणेन तु संयुक्तं मूत्रकृच्छ्रविनाशनम् ॥
यवक्षारः शर्करा च मूत्रकृच्छ्रविनाशनम् ॥
चिताग्निः खञ्जरीटस्य विष्ठा फेनो हयस्य च ।
शोभाञ्जनं वासनेत्रं नर एतैस्तु धूपितः ।
अदृश्यश्छिद्रदृग्भिः सर्व्वैः किं पुनर्मानवैः शिव ! ॥
तिलतैलं यवान्दग्ध्वा मसिं कृत्वा तु लेपयेत् ।
तेनैव सह तैलेन अग्निदग्धः सुखी भवेत् ॥
लज्जालुः शरपुङ्खा च लेपः लाज्यो हरामिषा ।
पञ्चाङ्गं कनकं रक्षा शस्त्राचूर्णन्तु कारयेत् ॥
दुग्धं धूपं तत्र दत्त्वा तत्क्षणात् पतते ध्रुवम् ।
ॐ नमो भगवते छिन्द छिन्द ज्वरस्य शिरः प्रज्वलितपरशुपाणिपुत्राय फट् ।
करे बद्धा तु निर्गुण्ड्या मूलं ज्वरहरं ततः ।
मूलञ्च श्वेतगुञ्जायाः कृत्वा तत् सप्तखण्डकम् ॥
हस्ते बद्धं नाशयेच्च अर्शांस्येव न संशयः ॥
विष्णुक्रान्ताजमूत्रेण चौरव्याघ्रादिरक्षणम् ।
अश्वादगदाक्तु मूलेन सर्व्वकर्म्माणि कारयेत् ॥
त्रिफलायास्तु चूर्णन्तु साज्यं कुष्ठं विनाशयेत् ।
आज्यं पुनर्नवाबिल्वैः पिप्पलीभिश्च साधितम् ।
हरेत् हिक्काश्वासकासं पीतं स्त्रीणाञ्च गर्भकृत् ॥
भक्षयेच्चैवमादीनि पयसाज्येन पायसम् ।
घृतशर्करया युक्तं मुक्तं स्याद्दक्षयं ततः ॥
विडङ्गं मधुकं पाठां मांसीं सर्ज्जरसन्तथा ।
हरिद्रां त्रिफलाञ्चैव अपामार्गं मनःशिलाम् ॥
उडुम्बरं धातकीपुष्पं तिलतैलेन पेषयेत् ।
योनिं लिङ्गञ्च म्रक्षेत स्त्रीपुंसोः स्यात् प्रियं मिथः ॥
पुनर्नवाम्लता दूर्व्वा कनकं चेन्द्रवारुणी ।
वीजैरेषां जातिकाया रसेन रसमर्दनम् ॥
कृत्वा धमेच्च मूषायां रसमारणमीरितम् ॥
मध्वाज्यसहितं दुग्धं वलीपलितनाशनम् ॥
मध्वाज्यं गुडताम्रञ्च करेणामाक्षिकं रसम् ।
धमनाच्च भवेद्रौप्यं सुवर्णकरणं ध्रुवम् ॥
पीतं धुस्तूरपुष्पञ्च सीसकस्य पलं मतम् ।
पाठा लाङ्गलशाखा च मूलमावर्त्तनाद्भवेत् ॥
तैलं धुस्तूरवृक्षस्य तेन दीपं प्रदापयेत् ।
समाधावुपविष्टन्तु गगनस्थो न पश्यति ॥
रात्रौ च मार्षपं तैलं कार्य्यं खद्योतसम्भवम् ।
तद्दीपः प्रज्वलेत् सम्यक् अग्निज्वालाकलापवत् ॥
कुञ्जरस्य मदार्त्तस्य स्वयं नेत्रे शिवाञ्जयेत् ।
संग्रामं जयते सोऽपि महाशूरश्च जायते ॥
वस्त्रं कुसुम्भवर्णस्य मुखे संग्रह्य वै क्षिपेत् ।
तिष्ठते जलमध्ये तु निर्विकल्पं स्थले यथा ॥
कुम्भीरनेत्रदंष्ट्राणि चाक्षीणि रुधिरं तथा ।
वसातैलसमायुक्तमेकत्र तन्नियोजयेत् ॥
आत्मानं म्रक्षयेत्तेन जले तिष्ठेद्दिनत्रयम् ।
कुम्भीरकस्य नेत्राणि हृदयं कच्छपस्य च ॥
मूषकस्य वसाक्षीणि शिशुमारवसा तथा ।
एतान्येकत्र संस्थानि जले तिष्ठेत् यथा स्थले ॥
लोहचूर्णं तक्रपीतं पाण्डुरोगहरं भवेत् ।
तण्डुलीयकगोक्षुरमूलं पीतं पयोऽन्वितम् ॥
कामलादिहरं प्रोक्तं मुखरोगहरं तथा ।
जातीमूलं तक्रपीतं कोलिमूलन्तु जीर्णकृत् ॥
सलक्षकाशमूलं वा वाकुचीमूलमेव वा ।
काञ्जिकेन च वाकुच्या मूलं वै दन्तरोगनुत् ॥
अथेन्द्रवारुणीमूलं वारिपीतं विषादिहृत् ।
बला चातिबला यष्टी शर्करा मधुसंयुता ॥
वन्ध्यागर्भकरं पीतं नात्र कार्य्या विचारणा ॥
श्वेतापराजितामूलं पिप्पलीशुण्ठिसंयुतम् ।
परिपिष्टं शिरोलेपात् शिरःशूलविनाशनम् ।
शिरोरोगहरं लेपात् गुञ्जामूलं सकाञ्जिकम् ॥
निर्गुण्डिकाशिफां पीत्वा गण्डमालाविनाशनम् ।
केतकीपत्रजं क्षारं गुडेन सह भक्षयेत् ॥
तक्रेण शरपुङ्खां वा पीत्वा प्लीहां विनाशयेत् ॥
मातुलुङ्गस्य निर्यासं गुडाढ्येन समन्वितम् ।
वातपित्तजशूलानि हन्ति वै पानयोगतः ।
शुण्ठीं सौवर्च्चलं हिङ्गु पीत्वा हृदयरोगनुत्” ॥
इति गारुडे १८८ अध्यायः ॥ * ॥

हरिरुवाच ।

ॐ गं गणपतये स्वाहेति ।
“अयं गणपतेर्मन्त्रो धनविद्याप्रदायकः ।
इममष्टसहस्रञ्च जप्त्वा बद्धा शिखाञ्चलः ॥
व्यवहारे जयः स्याच्च प्रतं जाप्यान्नृणां प्रियः ।
तिलानान्तु घृताक्तानां कृष्णानां रुद्र ! होमयेत् ॥
अष्टोत्तरसहस्रन्तु राजा वश्यस्त्रिभिर्दिनैः ।
अष्टम्याञ्च चतुर्दश्यामुपोष्याभ्यर्च्य विघ्नराट् ॥
तिलाक्षतानां जुहुयादष्टोत्तरसहस्रकम् ।
अपराजितः स्याद्युद्धे च जय ऐदुष्मे शिव ! ॥
जप्त्वा चाष्टसहस्रन्तु तत्स्वाष्टशतेन च ।
शिखां बद्धा राजकुले व्यवहारे जयो भवेत् ॥
ह्रीङ्कारं सविसर्गञ्च प्रातःसूर्य्यसमद्युतिम् ।
स्त्रीणां ललाटे विन्यस्य वश्यतां नयते ध्रुवम् ॥
तथैव नासामुरसि ध्यातश्चैवोपकारकृत् ।
सुसमाहितचित्तेन न्यस्तन्तु प्रमदालये ॥
सकामां कामिनीं कुर्य्यात् स्खलन्मदजलाकुलाम् ।
यस्तु जुहुयादयुतं शुचिः प्रयतमानसः ॥
दृष्टिमात्रे सदा तस्य वश्यमायान्ति योषितः ॥
मनःशिला पद्मकञ्च समोरोचनकुङ्कुमम् ॥
एभिः कृते च तिलके सदा स्त्री वश्यतामियात् ॥
सहदेवो भृङ्गराजः सितापराजिता वचा ।
तेनैव तिलकं कृत्वा त्रैलोक्यं वश्यतां नयेत् ।
गोरोचना मीनपित्तमाभ्याञ्च कृतवर्त्तिकाम् ॥
यः पुमांस्तिलकं कुर्य्याद्वामहस्तकनिष्ठया ।
स करोति वशं सर्व्वं त्रैलोक्यं नात्र संशयः ॥
गोरोचना महादेव ! ऋतुशोणितभाविता ।
तया या कृततिलका सा नारी यं निरीक्षते ॥

## औषध

तथ शर्व्व! मर्गं कुर्य्यान्नात्र कार्य्या विचारणा।
नागेश्वरञ्च शैलेयं लवङ्गञ्च हरीतकी॥
चन्दनं कुङ्कुमञ्चैव रक्तशालिसमन्विता।
एतैर्धूमो वशकरः स्मरबाण हरेश्वर!॥
रतिकाले महादेव! पार्व्वतीप्रिय! शङ्कर!।
लिङ्गमुक्तं गृहीत्वा तु वामहस्तेन यः पुमान्॥
कामिनीचरणं वामं लिम्पेत् स स्यात् स्त्रियाः प्रियः।
सैन्धवञ्च महादेव! पारावतमलं मधु॥
एभिर्लिप्तन्तु लिङ्गं वै कामिनीवशकृद्भवेत्।
पुष्पाणि पञ्चरक्तानि गृहीत्वा यानि कानि च॥
तण्डुलञ्च प्रियङ्गुञ्च पेषयेदेकयोगतः।
अनेन लिप्तलिङ्गस्य कामिनीवशतामियात्॥
वृषणाणा च मञ्जिष्ठा मालतीकुसुमानि च।
श्वेतसर्षपगन्धैश्च लिप्तलिङ्गः स्त्रियाः प्रियः॥
मूलन्तु काकजङ्घाया दुग्धपीतन्तु शोषणुत्।
अश्वगन्धानागबलागुडमांसनिषेविणाम्॥
कथं भवेत् यथा तरुणवयौवनचारिणाम्॥
लौहचूर्णसमायुक्तं त्रिफलाचूर्णमेव वा।
मधुना खादितं रुद्र! परिणामाख्यशूलनुत्॥
क्वथितोदकपानन्तु शम्बूकाहारकं तथा।
नागरकं ग्रमिदग्धं गव्याज्येन समन्वितम्।
पीतं हृत्पृष्ठशूलानां भवेन्नाशकरं शिव!॥
हिङ्गु सौवर्चलं रुद्र! वृषध्वज! महौषधम्।
एभिस्तु क्वथितं वारि पीतं वै सर्व्वशूलनुत्॥
अपामार्गस्य वै मूलं सामुद्रलवणान्वितम्।
आस्वादितमजीर्णस्य शूलस्य स्याद्विमर्द्दकम्॥
वटरोहाङ्कुरो रुद्र! तण्डुलोदकघर्षितः।
पीतः सतक्रोऽतीसारं क्षयं नयति शङ्कर!॥
अङ्कोठमूलं कर्षार्द्धं पिष्टं तण्डुलवारिणा।
सर्व्वातिसारग्रहणीं पीतं हरति भूतप!॥
मरीचशुण्ठिकुटजत्वक्चूर्णन्तु गुडान्वितम्।
क्रमात्तद्द्विगुणं पीतं ग्रहणीव्याधिनाशनम्॥
श्वेतापराजितामूलं हरिद्रासिक्थतण्डुलम्।
अपामार्गत्रिकटुकमेषान्तु वटिकां शिव!।
विसूचिकामहाव्याधिं हरत्येव न संशयः॥
त्रिफला त्रिकटुश्चैव शिलाजतु हरीतकी।
एकैकमेषां चूर्णन्तु मधुना च विमिश्रितम्।
पीतं सर्व्वप्रमेहन्तु क्षयं नयति शङ्कर!॥
अर्कक्षीरं प्रस्थमेकं तिलतैलं तथैव च।
मनःशिला मरीचानां सिन्दूरस्य पलं पलम्॥
चूर्णं कृत्वा ताम्रपात्रे त्वातपे शोषयेत्ततः।
पीतं स्नुहीरसं दुग्धं सैन्धवं शूलनुद्भवेत्॥
त्रिकटुत्रिफलायुक्तं पलाशाष्टकसैन्धवम्।
मनःशिला निम्बपत्रं जातीपुष्पमजापयः॥
तन्मूत्रं शङ्खनाभिश्च चन्दनं घर्षयेत्ततः।
एभिश्च वटिकां कृत्वा अक्षिणी चाञ्जयेत्ततः॥
नश्यते पटलं काचं पुष्पञ्च तिमिरादिकम्॥
विभीतकस्य वै चूर्णं समधु श्वासनाशनम्॥
पिप्पल्या त्रिफलाचूर्णं मधुसैन्धवसंयुतम्।
सर्व्वरोगज्वर[illegible] सप्तोषपीनसहृद्भवेत्॥
देवदारोश्च वै [illegible] गामूत्रेण भावयेत्।
एकविंशति वै [illegible] वारिणा तेन चाञ्जयेत्॥

## औषध

रात्र्यन्धता पटलता नश्येदिति विनिश्चयः।
पिप्पली केतकं रुद्र! हरिद्रामलकं वचा॥
सर्व्वाक्षिरोगा नश्येयुः सक्षीरादञ्जनात्ततः॥
काकजङ्घाशिग्रुमूले मुखेन विधृते शिव!।
चर्व्वित्वा दन्तरोगाणां विनाशो हि भवेद्धर"!॥
इति गारुडे १८९ अध्यायः॥ * ॥

हरिरुवाच।

"पीतं सारं गुडूच्याश्च मधुना च प्रमेहनुत्।
पीतं गोक्षुरिकामूलं तिलदध्याज्यसंयुतम्॥
मिण्डमूत्रं क्वथितं प्रवर्त्तयति शङ्कर!।
तथा हिक्कां हरेत् पीता सौवर्चलयुता सुरा॥
गोरक्षकर्कटीमूलं पिष्टं वास्योदकेन च।
पीतं दिनत्रयेणैव नाशयेत् हस्तशर्करान्॥
पिष्टं वै मालतीमूलं ग्रीष्मकाले समाहृतम्।
साधितं छागदुग्धेन पीतं शर्करयान्वितम्॥
हरेन्मूत्रनिरोधञ्च हरेद्वै पाण्डुशर्करान्॥
विजयश्चाग्रवै मूलं पिष्टं तण्डुलवारिणा।
गण्डमाला हरेल्लेपात् कुक्कुरागलगण्डकम्॥
रसाञ्जनहरीतक्याश्चूर्णं तेनैव गुण्डनात्।
नश्येद्वै पुरुषव्याधिं नात्र कार्य्या विचारणा॥
करवीरमूललेपात् लेपात् पूगफलस्य च।
पुंव्याधिर्नश्यते रुद्र! योगमन्यं वदाम्यहम्॥
दन्तीमूलं हरिद्रा च चित्रकं तस्य लेपनात्।
भगन्दरविनाशः स्यादन्ययोगं वदाम्यहम्॥
जलौकाजग्धरक्तान्तु भगन्दरमुमापते!॥
त्रिफलाजलधृतस्य मार्जाराक्षिविलेपितम्।
ततो न प्रसवेत् रुद्र! नात्र कार्य्या विचारणा॥
हरिद्रा त्वक्‌वारन्तु स्नुहीक्षीरेण भाविता।
झटित्यर्शो निपतति सम्पात् वृषभध्वज!॥
घोषाफलं सैन्धवञ्च तक्रमांशः पतत्तथा।
गव्याज्यं साधितं पीतं पलाशक्षारवारिणा॥
त्रिगुणेन त्रिकटुकमर्शांसि क्षययेच्छिव!।
विल्वस्य च फलं दग्धं रक्तार्शसो विनाशनम्॥
अथवा कृष्णतिलान्वा नवनीतयुतानि च।
यवक्षारं शुण्ठिचूर्णं युक्तं तुल्यघृतान्वितम्॥
लीढमग्निं करोत्येव प्रथमे वृषभध्वज!।
शुण्ठ्या च क्वथितं वारि पीतश्चाग्निं करोति वै॥
हरीतकी सैन्धवञ्च चित्रकं रुद्र! पिप्पली।
चूर्णमुष्णोदकेनैषां पीतञ्चातिक्षुधाकरम्॥
साज्यं शूकरमांसं वै पीतं चातिक्षुधाकरम्"॥
इति गारुडे १९० अध्यायः॥ * ॥

हरिरुवाच।

"हस्तिकर्णस्य वै मूलं गृहीत्वा चूर्णयेद्धर!।
सर्व्वरोगविनिर्मुक्तं चूर्णं पञ्चपलं शिव!॥
सक्षीरं भक्षितं कुर्य्यात् सप्ताहेन वृषध्वज!।
नरं श्रुतिधरं शूरं नरेन्द्रगतिविक्रमम्॥
पद्मगौरप्रतीकाशं युक्तं दशशतायुषा।
षोडशाब्दाकृतिं रुद्र! सततं दुग्धभोजनम्॥
मधुसर्पिःसमायुक्तं जरामायुःकरं भवेत्।
तत्काथं मधुना सार्द्धं दशवर्षसहस्रिणम्॥
कुर्य्यान्नरं श्रुतिधरं प्रमदाजनवल्लभम्।
दध्ना नित्यं भक्षितन्तु वज्रदेहकरं शिव!॥

## औषध

कृष्णकेशसमायुक्तं नरं वर्षसहस्रिणम्।
तच्च काञ्जिकसंयुक्तं नरं कुर्य्याच्च भक्षितम्॥
शतवर्षं दिव्यदेहं वलीपलितवर्जितम्।
अर्धं त्रिफलया युक्तं चक्षुष्मन्तं करोति वै॥
अन्धः पादेन चूर्णस्य साज्यस्यैव तु भक्षणात्।
महिषक्षीरसंयुक्तं तल्लेपः कृष्णकेशकृत्॥
खल्लीटस्य च वै केशा भवन्ति वृषभध्वज!।
तैलयुक्तेन चूर्णेन वलीपलितवर्जितम्॥
तदुद्वर्त्तनमात्रेण सर्व्वरोगैः प्रमुच्यते।
सच्छागक्षीरचूर्णेन दृष्टिः षण्मासतोऽञ्जनात्॥
पलाशस्य तु वीजानि आवळे वितुषाणि च।
गृहीत्वा नवनीतेन तेषां चूर्णन्तु भक्षयेत्॥
कर्षार्द्धमेव कुष्माण्डं नत्वा नित्यं हरिं प्रभुम्।
षष्टिं पुराणधान्यं स्यादम्बुवर्ज्जं वृषध्वज!॥
जीवेद्वर्षसहस्राणि वलीपलितवर्जितः॥
भृङ्गराजस्य वै चूर्णं पुष्यर्क्षे तु समाहृतम्।
विडालपदमात्रन्तु ससौवीरञ्च भक्षयेत्।
मासमात्रप्रयोगेण वलीपलितवर्जितः॥
शतानि पञ्च जीवेच्च नवनागबलो भवेत्।
भवेत् श्रुतिधरो रुद्र! पुष्यर्क्षे चैव भक्षयेत्"॥
इति गारुडे १९१ अध्यायः॥ * ॥

हरिरुवाच।

"निर्व्रणः स्यात् पूयहीनः प्रहारो घृतपूरितः
अपामार्गस्य वै मूलं हस्ताभ्याञ्च विमर्द्दयेत्॥
तद्रसेन प्रहारस्य रक्तस्रावो न पूरणात्।
रुद्र! लाङ्गलिकामूलं हिज्जलस्य तथैव च॥
तेन व्रणमुखं लिप्तं शल्यो निःसरति व्रणात्।
चिरकालप्रविष्टोऽपि तेन मार्गेण शङ्कर!॥
दध्ना माहिषेण युक्तं अर्धं कोद्रवभक्तकम्
काकुमूलस्य वै चूर्णं दत्तं नाडीव्रणापहम्॥
अश्मगर्भफल पिष्टं वारिणा तेन लेपतः।
तेन दुष्टं रक्तदोषः प्रणश्यति न संशयः॥
यवभस्म विडङ्गञ्च गन्धपाषाणमेव च।
शुण्ठिरेणाश्चैव चूर्णं भावितं रुधिरेण वै।
क्वकलाशस्य तल्लिप्तं अर्ब्बुदं विद्रवेच्छिव!।
शोभाञ्जनस्य वीजानि अतसीमसिना सह
गोरसन्तु प्रपिष्टान्यत् ग्रन्थिकं नाशयेद्धि वै॥
श्वेतापराजितामूलं पिष्टं तण्डुलवारिणा।
तेन नस्यप्रदानात् स्याद्भूतसम्बस्य विद्रवः॥
अगस्त्यपुष्पनस्यो वै समरीचश्च भूतहृत्॥
भुजङ्गवर्म्म वै हिङ्गु निम्बपत्राणि वै यवाः।
गौरसर्षप एभिः स्याल्लेपो भूतहरः कृतः॥
गोरोचना मरीचानि पिप्पली सैन्धवं मधु।
अञ्जनं कृतमेभिः स्यात् ग्रहभूतहरं शिव!॥
गुग्गुलुकपुच्छाभ्यां धूपो ग्रहहरः कृतः।
चातुर्थिकज्वरैर्मुक्तः कृष्णवस्त्रावगुण्ठितः"॥
इति गारुडे १९२ अध्यायः॥ * ॥

हरिरुवाच।

"श्वेतापराजितापुष्परसेनाश्लोक्ष्य पूरणे।
पटलं नाशमायाति श्वेतदुग्धमिमौषधम्॥
मूलं गोक्षुरकस्यैव चर्व्वित्वा नीललोहित!।
दन्तकीटव्यथां नश्येदन्धासुरविमर्द्दन!॥

नारी पुष्पदिने पीत्वा गोक्षीरेणोपवासतः ॥
श्वेतार्कस्य तु वै मूलं तस्याः स्यात्पुत्रसन्ततिः ।
श्वेतार्कमूलं विधिना गृहीतं पूर्वसंस्थितम् ।
कृतमुद्रा च जघने कटौ बद्धा नरोऽथ वा ।
नारी पुनर्हि लभते सुरते वृषभध्वज ! ।
हस्तबद्धं पञ्चाङ्गस्य अपामार्गस्य वा हर ! ।
मूलं सर्व्वज्वरहरं भूतप्रेतादिदुष्टपेत् ॥
पीतं वृश्चिकमूलन्तु पर्य्युषितजलेन वै ।
सार्द्धं विनाशयेद्दाहज्वरस्य परमेश्वर ! ।
शिखायाञ्चैव तद्बद्धं भवेदैकाहिकादिनुत् ॥
एतत् सकाञ्जिकं पीतं रक्तकुष्ठज्वरादिनुत् ।
वास्योदकेन पीतं तद्वृश्चिकविषहरं भवेत् ॥
यस्य लज्जालुकामूलं दीयते बद्धचेतसा ।
सार्द्धं स वै वशं याति पुमान् स्त्री वा न संशयः ॥
पिष्ट्वा गव्यघृतेनैव पाठामूलं पिबेत्तु यः ।
गरं विषं तस्य नश्येन्नात्र कार्य्या विचारणा ॥
वास्योदकयुतं मूलं शिरीषस्य यथा तथा ।
रक्तचित्रकमूलस्य प्रमनं मरणाद्धर ! ॥
कर्णयोः कामलाव्याधिविनाशः स्यान्न संशयः ॥
श्वेतकोकिलाक्षमूलं छागीक्षीरेण संयुतम् ।
त्रिसप्ताहेन वै पीतं क्षयरोगं क्षयं नयेत् ।
नारिकेलस्य वै पुष्पं छागीक्षीरेण संयुतम् ।
पिबेच्च त्रिदिवसस्य रक्तवातो विनश्यति ॥
कुर्य्यात् सुदर्शनामूलं आदित्ये तु समाहृतम् ।
कण्ठबद्धं व्याहिकादिग्रहभूतविनाशनम् ॥
पुष्ये धवलगुञ्जाया गृहीतं मूलमुत्तमम् ।
.. तु निहितं रुद्र ! हरेत् गरविषं बहु ॥
.. बद्धं कामलं च कण्ठबद्धं ग्रहादिनुत्" ॥
इति गारुडे १९३ अध्यायः ॥ * ॥

हरिरुवाच ।

गुरु.. पि.. पराजिताया मूलञ्च गोमूत्रेण समन्वितम् ।
..चापि हरत्येव गलगण्डं न संशयः ॥
..वारुणीमूलं विधिना पीतमीश्वर ! ।
..स्वरभङ्गं रुद्र ! मुकाक्षीमर्म्म्यतम् ॥
..रोदकञ्च तन्नस्यो नाडीव्रणव्यथां हरेत् ॥
माहिषं नवनीतञ्च अश्वगन्धा च पिप्पली ।
यथा कुष्ठं क्षयं लेपो लिङ्गश्रोत्रस्तनांश्चित् ॥
कुष्ठनागबलाचूर्णं नवनीतसमन्वितम् ।
तल्लेपो युवतीनाञ्च कुर्य्यान्मनोहरं स्तनम् ॥
विटपेन्द्रवारुणीमूलं यस्य नाम्ना समुद्धृतः ।
निक्षिप्यते समुत्पाद्य तस्य क्रीडा विनश्यति ॥
पुनर्न्नवायाः शुक्लाया मूलं तण्डुलवारिणा ।
पीतं विद्रधि नश्येच्च नात्र कार्य्या विचारणा ॥
कदली यवक्षारन्तु पानीयेन प्रसाधितम् ।
तदास्वादनान्नश्यन्ति उदरव्याधयोऽखिलाः ॥
बदरीकारवीमूलं गुडाख्येन समन्वितम् ।
अग्निना साधितं जग्ध्वा कृमीन् सर्व्वान् हरेत् शिव ! ।
नित्यं निम्बदलानाञ्च चूर्णमामलकस्य च ।
प्रत्यूषे भक्षयेच्चैव तस्य कुष्ठं विनश्यति ॥
हरीतकी विडङ्गञ्च हरिद्रा सितसर्षपाः ।
सोमराजस्य बीजानि करञ्जस्य च सैन्धवम् ।
गोमूत्रपिष्टान्येतानि कुष्ठरोगहराणि च ॥

एकञ्च त्रिफलाभागस्तथा भागद्वयं शिव ! ।
सोमराजस्य बीजानां जग्धं पथ्या च दद्रुनुत् ॥
अम्लतक्रं सगोमूत्रं क्वथितं लवणान्वितम् ।
कांस्यघृष्टं खरं लेपात् कुष्ठदद्रुविनाशनम् ॥
हरिद्रा हरितालञ्च दूर्व्वागोमूत्रसैन्धवम् ।
अयं लेपो हन्ति दद्रु पामानं वै गरं तथा ॥
सोमराजस्य बीजानि नवनीतयुतानि च ।
मधुनाक्तानि तानि स्युः शुक्लकुष्ठहराणि वै ।
तक्रानुपानतो रुद्र ! नात्र कार्य्या विचारणा ॥
सितापराजितामूलं वर्त्तितं वास्यवारिणा ।
तल्लेपो रुद्र ! मासेन शुक्लकुष्ठविनाशनः ॥
माहिषं नवनीतञ्च सिन्दूरञ्च मरीचकम् ।
पामा विलेपिता नश्येद्बहुलापि वृषध्वज ! ॥
त्रिवृत्कगम्भारिमूलं पक्वक्षीरेण संयुतम् ।
भक्षितं शुक्रपित्तस्य विनाशकरमीश्वर ! ॥
मूलकस्य च बीजानि अपमार्गरसेन वै ।
पिष्टानि तेन लेपेन सिध्मिका रुद्र ! नश्यति ॥
कदलीक्षारसंयुक्ता हरिद्रा सिध्मिकापहा ।
रम्भापामार्गयोः क्षारः एरण्डतैलविमिश्रितः ॥
तदभ्यङ्गान्महादेव ! सद्यः सिध्म विनश्यति ।
कूष्माण्डनालक्षारस्तु सगोमूत्रश्च तत्त्वचः ॥
जलपिष्टा हरिद्रा च सिद्धा मन्दानलेन हि ।
माहिषेण पुरीषेण वेष्टिता वृषभध्वज ! ॥
अस्या उद्वर्त्तनं कुर्य्यात्कुगौरत्वमीश्वर ! ।
तिलसर्षपसंयुक्तं हरिद्राद्वयकुष्ठकम् ॥
..गोद्वर्त्तितदेहः स्यादुज्ज्वलः सुरभिः पुमान् ।
..गोहरत्यानुदिनं दूर्व्वायां काकजङ्घया ॥
अर्ज्जुनस्य तु पुष्पाणि जम्बूपत्रयुतानि च ।
..लोध्राणि च तल्लेपो देहदुर्गन्धतां हरेत् ॥
..श्योणाकोशीरं वै चूर्णन्तु कनकस्य च ।
..गोद्वर्त्तितदेहस्य हरेद्ग्रीष्मप्रसादिकाम् ॥
..गदोषश्चैव देवेन्द्र ! सर्व्वदोषश्च नश्यति ।
..कजङ्घोद्वर्त्तनञ्च अङ्गरागकरं भवेत् ॥
यष्टीमधु शर्करा च वासकस्य रसो मधु ।
तत् पीतं रक्तपित्तकामलापाण्डुरोगनुत् ॥
..पित्तं हरेत् पीतो वासकस्य रसो मधु ।
..मकाले तोयपानात् पीनसं प्रश्रितं हरेत् ॥
विभीतकस्य वै चूर्णं पिप्पलीसैन्धवस्य च ।
..तं सकाञ्जिकं हन्ति स्वरभेदं महेश्वर ! ॥
..र्भामलकस्यैव पीतं शूलहरं परम् ॥
मनःशिला वचामूलं काकपर्णञ्च गुग्गुलुम् ।
..तालीपत्रं कोशिपत्रं तथा चैव मनःशिला ।
..भिश्चैव कृता वर्त्तिर्वद्राणौ महेश्वर ! ॥
..मपानं काशहरं नात्र कार्य्या विचारणा ॥
त्रिफलापिप्पलीचूर्णं भक्षितं मधुना युतम् ॥
..जनादौ हि समधु पिपासां त्वरितं हरेत् ।
..ल्वमूलञ्च समधु गुडूचीक्वथितं जलम् ॥
..तं हरेच्च त्रिविधं छर्दिं वै नात्र संशयः ।
..ताचूर्णं छर्दिनुत् स्यात् पिष्टा तण्डुलवारिणा" ॥
इति गारुडे १९४ अध्यायः ॥ * ॥

हरिरुवाच ।

"पुनर्नवाया मूलञ्च श्वेतं पुष्ये समाहृतम् ।
वारिपीतं तस्य पार्श्वे भवन्ति न पन्नगाः ॥
तार्क्ष्यं मूर्त्तिं वहेद्यो वै मण्डूकदन्तनिर्मिताम् ।
स पन्नगैर्न दश्येत यावज्जीवं वृषध्वज ! ॥
पिबेद्रक्तमूलं यः पुष्यार्को रुद्र ! वारिणा ।
तस्मिन्नपास्तदशना नागाः स्युर्नात्र संशयः ॥
पुष्ये लज्जालुकामूले हस्तबद्धे तु पन्नगान् ।
गृह्णीयाल्लेपतो वापि नात्र कार्य्या विचारणा ॥
पुष्ये श्वेतार्कमूलञ्च पीतं शीतेन वारिणा ।
नश्येत दन्तकविषं करवीरादिजं विषम् ॥
महाकालस्य वै मूलं पिष्टं तत् काञ्जिकेन वै ।
बोडुमयङ्गलिकानाञ्च तल्लेपो हरते विषम् ॥
तण्डुलीयकमूलञ्च पिष्टं तण्डुलवारिणा ।
घृतेन सह पीतन्तु हरेत् सर्पविषाणि च ॥
नीलो लज्जालुकामूलं पिष्टं तण्डुलवारिणा ।
पीत्वा दद्रुकविषं नश्येदेकेन चोभयोः ॥
कुष्माण्डकफलरसः सगुडः सहशर्करः ।
पीतः सदुग्धो मोहन्त् तद्रसस्य विषस्य वै ॥
तथा कामलभूतस्य मोहस्य हर एव च ।
यष्टीमधुसमायुक्ता पीता च सितशर्करा ॥
सदुग्धा च त्रिरात्रेण मूषाविषहरा भवेत् ॥
शुण्ठकत्रयपानाच्च वारिणः शीतलस्य वै ।
ताम्बूलजन्यरोगाश्च मुखजाता विनश्यति ॥
घृतं सशर्करं पीत्वा मद्यपानमदो न वै ।
कृष्णाङ्कोठस्य मूलेन पीतमत्क्वथितं जलम् ।
ततो नश्येच्छ्वविषं त्रिरात्रेण महेश्वर ! ॥
उष्णं गव्यघृतं पीतं सैन्धवेन समन्वितम् ।
नाशयेत्तन्महादेव ! वेदनां वृश्चिकोद्भवाम् ॥
कुसुम्भं कुङ्कुमञ्चैव हरितालं मनःशिला ।
करञ्जपिप्पलश्चैव अर्ककीटञ्च शाल्मली ॥
विषं नृणां विनश्येत एतेषां भक्षणाच्छिव ! ।
दीपतैलप्रदानाच्च दंशे वृश्चिकजे शिव ! ॥
खर्ज्जुरकविषं नश्येत्तदा वै नात्र संशयः ।
दंशस्थानं वृश्चिकस्य रुद्र ! गुग्गुलुधूपितम् ॥
विषं नश्येत्ततो रुद्र ! नात्र कार्य्या विचारणा ॥
अङ्कोठपत्रधूपेन नश्येन्मूषिकजं विषम् ॥
नागेश्वरमरीचानि शुण्ठी तगरपादिका ।
नश्येन्मधुमक्षिकाया एतेषां लेपतो विषम् ॥
शतपुष्पा सैन्धवञ्च साज्यं वा तेन लेपतः ।
शिरीषस्य च बीजं वै सितक्षीरेण घर्षितम् ॥
तल्लेपेन महादेव ! नश्येदन्दुरजं विषम् ॥
ज्वलिताग्निना विसेकी तथा दर्दुरजं विषम् ॥
धुस्तूरकरसोन्मिश्रं क्षीराज्यगुडपानतः ।
शुनां विषं विनश्येत शशाङ्ककृतशेखर ! ॥
वटनिम्बशमीनाञ्च वल्कलैः क्वथितं जलम् ।
तत्सेकात्तत्खदन्तानां नश्येत विषवेदनाम् ॥
देवदारु हरिद्रा च गैरिकस्य च लेपनात् ।
नागेश्वरं हरिद्रे द्वे मञ्जिष्ठा देवदारुकम् ।
एभिर्नश्येद्विनश्येत लूताविषमुमापते" ! ॥
इति गारुडे १९५ अध्यायः ॥ * ॥

हरिरुवाच ।

"एकं पुनर्नवामूलं अपामा.. ..शिव ! ।
सरसं योनिनिक्षिप्तं वराङ्गस्य.. नारी .. हरेत् ॥

प्रसूतिवेदनाचैव तत्क्षणेना व्यथां हरेत् ॥
भूमिकुष्माण्डमूलं वै शालितण्डुलवारिणा ।
अमार्द्दं दुग्धपीतं स्यात् स्त्रीणां वन्ध्यत्वकारकम् ॥
कटेष्मवासकमूललेपात् स्त्रीस्तनवेदना ।
भवेद् घृतपिप्पली च कार्य्या वश्यं तु पालिका ।
कल्पिता वा महेशान ! योनिशूलं विनाशयेत् ॥
प्रलेपिता वारयेत्मूलेनैव विनिर्गता ।
योनिः प्रविशमायाति नात्र कार्य्या विचारणा ॥
वीजीपटोलमूलानि काथ्यानि तिलवारिणा ॥
स्त्रियाश्चैषां प्रक्षेपो वै व्याघ्रागर्द्दभरोगनुत् ॥
पाठामूलं वद ! पीतं पिष्टं तण्डुलवारिणा ।
पापरोगहरं स्याच्च कुष्ठपानन्तथैव च ॥
वास्तोदकञ्च समधु पीतमन्तर्गतस्य वै ।
पापरोगस्य सन्तापनिवृत्तिं कुरुते शिव ! ॥
कदलीमेकुचं पीतं पिष्टा तण्डुलवारिणा ।
स्त्रीणाञ्चैव महादेव ! रक्तस्रावं हि वारयेत् ॥
घृततुल्या वद ! लाक्षा पीता क्षीरेण वै सह ।
प्रदरं हरते रोगं नात्र कार्य्या विचारणा ॥
हिङ्गुवल्लीत्रिकटुकं चूर्णं पीतं हरेच्छिव ! ।
तिलक्वाथेन संयुक्तं रक्तगुल्मं स्त्रिया हर ! ॥
कुसुमस्य निवृत्तश्च तरुणीनां महेश्वर ! ।
रक्तोत्पलस्य वै कन्दं शर्करातिलसंयुतम् ॥
पीतं वशर्करं स्त्रीणां धारयेत् गर्भपातनम् ।
रक्तस्रावस्य नाशः स्यात् शीतोदकनिषेवनात् ॥
पीतन्तु काञ्जिकं वद ! क्वथितं शरपुंखया ।
हिङ्गुसैन्धवसंयुक्तं शीघ्रं स्त्रीणां प्रसूतिकृत् ॥
मातुलुङ्गस्य वै मूलं कटिबद्धं प्रसूतिकृत् ।
अपामार्गस्य वै मूलं योनिस्थञ्च प्रसूतिकृत् ॥
अपामार्गस्य वै मूले गर्भवत्याश्च नामतः ।
उत्पाट्यमाने सकले पुत्रः स्यादन्यथा सुता ॥
अपामार्गस्य वै मूले नारीणां शिरसि स्थिते ।
गर्भशूलं विनश्येत नात्र कार्य्या विचारणा ॥
कर्पूरमदनफलमधुकैः पूरितः शिव ! ।
योनिः शुभा स्याद्वृद्धाया युवत्याः किं पुनर्हर ! ॥
यस्य बालस्य तिलकः कृतो गोरोचनाख्यया ।
शर्कराकुष्ठपानञ्च दत्तं स स्याच्च निर्भयः ॥
विषभूतग्रहादिभ्यो व्याधिभ्यो बालकः शिव ! ।
शङ्खनाभिवचाकुष्ठलोहानां धारणं सदा ॥
बालानामुपसर्गेभ्यो वद ! रक्षाकरं भवेत् ।
पलाशचूर्णं समधु गव्याज्यामलकान्वितम् ॥
सविडङ्गं पीतमात्रं नरं कुर्य्यान्निरामतिम् ।
मासैकेन महादेव ! जरामरणवर्ज्जितम् ॥
पलाशवीजं सघृतं तिलमध्वन्वितं समम् ।
समाहं भक्षितं वद ! जरां नयति संक्षयम् ॥
वद्रामलकचूर्णं वै मधुतैलघृतान्वितम् ।
जग्ध्वा मासं युवा स्याच्च नरो वागीश्वरो भवेत् ॥
शिवामलकचूर्णं वै मधुना उदकेन वा ।
बलानि कुर्य्यात्तालायाः प्रथमे भक्षितं शिव ! ॥
कुष्ठचूर्णं साज्यमथ प्रातर्जग्ध्वा भवेन्नरः ।
साक्षात् सुरभिदेहो वै जीवेद्वर्षसहस्रकम् ॥
माषस्य विदलान्येव वितुषाणि महेश्वर ! ।
"पक्वितशुष्काणि प्रयत्ना साधितानि वै ॥

शर्कराज्यपयोभिश्च भक्षयित्वा च कामयेत् ।
स्त्रीणां शतं महादेव ! तत्क्षणान्नात्र संशयः ॥
रसश्वेतगुञ्जतैलेन गन्धकेन शुभो भवेत् ।
त्रिफलोदकसंघृष्टो वलकुष्ठाद्विमुच्येत् ॥
दुग्धं चिञ्चमाषश्च शिम्बीवीजैश्च साधितम् ।
अपामार्गस्य तैलन पीतं स्त्रीशतकामकृत्" ॥
इति गारुड़े १९६ अध्यायः ॥ * ॥
हरिरुवाच ।
"या गौर्द्देग्धि स्वकं वत्सं तस्या देयं स्वकं पयः
लवणेन समायुक्तं तस्या वत्सः प्रियो भवेत् ॥
शुनोऽस्थि कण्ठबद्धं हि महिषीणां गवान्तथा
कृमिजालं पातयति सकलं नात्र संशयः ॥
गोजङ्घाभिघातः स्यात् गुञ्जामूलस्य भक्षणात्
वरुणफलस्य रसं करेण मथितं शिव ! ॥
चतुष्पादद्विपदयोः कृमिजालं निपातयेत् ।
वृषाश्च शमयेद्रुद्र ! यवाना पूगनासया ॥
गजमूत्रस्य वै पाने गोमहिषापसर्गनुत् ।
समस्तं शालिवीजं पीतं तक्रेण घर्षितम् ॥
क्षीरं गोमहिषस्यैव गोः पुंसश्च हितं भवेत् ।
पत्रञ्च शरपुंखाया दत्तं सलवणं शिव ! ॥
वाजिस्फोटं हयानाञ्च वेशनाया विनाशयेत् ।
अश्वाश्च सुन्दरच्छाया भवन्ति च न संशयः ॥
गृहकुमारीपत्रं वै दत्तं सलवणं हर ! ।
तुरङ्गमवेशराणां कण्डुनुत् स्याद्घृताहृतः" ॥
इति गारुड़े १९७ अध्यायः ॥ * ॥
हरिरुवाच ।
"चित्रकस्याष्टभागानि शृङ्गाख्य च षोडश ।
शुण्ठ्याश्चत्वारि भागानि मरीचानां द्वयं तथा ॥
पिप्पली पिप्पलीमूलं विड़ङ्गानां चतुष्टयम् ।
अष्टौ मुषलीभागाश्च त्रिफलायास्तुष्टयम् ॥
द्विगुणेन गुड़ेनैषां मोदकानि हि कारयेत् ।
तद्भक्षणमजीर्णं हि पाण्डुरोगञ्च कामलाम् ॥
अतिसारांश्च च मन्दाग्निं प्लीहादांश्च निवारयेत् ।
विल्वाग्निमन्थश्योणाकपाटलापारिभद्रकम् ॥
प्रसारण्यश्वगन्धा च वृहती कण्टकारिका ।
बला चातिबला रास्ना श्वदंष्ट्रा च पुनर्णवा ॥
शरगन्धशारिवा पर्णी गुड़ूची कपिकच्छुरा ।
एषां दशपलान् भागान् क्वाथयेत् सलिलेऽमले
तेन पादावशेषेण तैलपात्रे विपाचयेत् ।
आजं वा यदि वा गव्यं क्षीरं दत्त्वा चतुर्गुणम् ॥
शतावरीरसञ्चैव तैलतुल्यं प्रदापयेत् ।
द्रव्याणि यानि पेष्याणि तानि वक्ष्यामि तच्छृणु ॥
शतपुष्पा देवदारु बला पर्णी वचागुरु ।
कुष्ठं मांसी सैन्धवञ्च पलमेकं पुनर्णवा ॥
पाने नस्ये तथाभ्यङ्गे तैलमेतत् प्रदापयेत् ।
हृच्छूलं पार्श्वशूलञ्च गण्डमालाञ्च नाशयेत् ॥
अपस्मारं वातरक्तमागुल्मांश्च पुमान् भवेत् ।
गर्भमश्वतरी विन्द्यात् किं पुनर्मानुषी शिव ! ॥
अश्वानां वालभानां कुञ्जराणां नृणां तथा ।
तैलमेतत् प्रयोक्तव्यं सर्व्ववातविकारिणाम् ॥
हिङ्गु तुम्बुरु शुण्ठ्या च साध्यं तैलन्तु सार्षपम्
एतद्धि पूरणं श्रेष्ठं कर्णशूलापहं परम् ॥

औषध

शुष्कमूलकशुण्ठीनां क्षारो हिङ्गुलनागरम्
शुक्तं चतुर्गुणं दद्यात्तैलमेतैर्विपाचयेत् ॥
वाधिर्य्यं कर्णशूलञ्च पूयस्रावञ्च कर्णयोः ।
कृमयश्च विनश्यन्ति तैलस्यास्य प्रपूरणात् ॥
शुष्कमूलकशुण्ठीनां क्षारो हिङ्गुलनागरम् ।
शतपुष्पी वचा कुष्ठं दारु शिग्रु रसाञ्जनम् ॥
सौवर्चलं यवक्षारं सामुद्रं सैन्धवं तथा ।
भूर्जग्रन्थि विड़ं मुस्तं मधु शुक्तं चतुर्गुणम् ॥
मातुलुङ्गरसञ्चैव कदलीरसमेव च ।
तैलमेभिर्विपक्तव्यं कर्णशूलापहं परम् ॥
व्याधिजः कर्णनादश्च पूयस्रावश्च दारुणः ।
पूरणादस्य तैलस्य कृमयः कर्णयोः स्थिताः ॥
क्षिप्रं विनाशमायान्ति शशाङ्ककृतशेखर ! ।
क्षारतैलमिदं श्रेष्ठं मुखदन्तामयापहम् ॥
चन्दनं कुङ्कुमं मांसी कर्पूरो जातिपत्रिका ।
जातीकक्कोलपूगानां लवङ्गस्य फलानि च ॥
अगुरुशीरकस्तुर्य्यः कुष्ठं तगरवालिका ।
गोरोचना प्रियङ्गुश्च चोलो दमनकं नखम् ॥
सरलः सप्तपर्णश्च लाक्षा चामलकी तथा ।
कर्पूरकः पद्मकश्च एतैस्तैलं प्रसाधितम् ॥
प्रस्वेदमलदौर्गन्ध्यकण्डुकुष्ठहरं परम् ।
पुमान् युवा स्यात् सुकान्तः स्त्रीणां चात्यन्तदु[illegible]
स्त्रीशतं गच्छते वद ! वन्ध्यापि लभते सुतम्
यमानी चित्रकं धान्यं त्र्यूषणं जीरकं तथ[illegible]
सौवर्चलं विड़ं वर्षं पिप्पलीमूलरोजिकम् ।
एभिः पचेत् घृतप्रस्थं जलप्रस्थाष्टसंयु[illegible]
मन्दाग्नींगुल्मश्वयथुं हन्ति वह्निं करोति ॥
मरीचं त्रिवृतं कुष्ठं हरिताल मः[illegible]ात्
देवदारुहरिद्रे द्वे कुष्ठं मांसी च चन्दनं ॥
विशाला करवीरञ्च अर्कक्षीरं शकृद्रसम् ।
एषाञ्च कार्षिको भागो विषस्यार्द्धपलं भवेत् ।
प्रस्थं कटुकतैलस्य गोमूत्रेऽष्टगुणे पचेत् ॥
मृत्पात्रे लौहपात्रे वा शनैर्मृदग्निना पचेत् ।
पामा विचर्च्चिका चैव दद्रुविस्फोटकानि च ॥
अभ्यङ्गेन प्रणश्यन्ति कोमलत्वञ्च जायते ।
प्रसूतान्यपि श्वित्राणि तैलपानेन नाशयेत् ॥
चिरोत्थितमपि श्वित्रं विवर्णं तत्क्षणाद्भवेत् ।
पटोलपत्रं कटुका मञ्जिष्ठा शारिवा निशा ॥
जाती शमी निम्बपत्रं मधुकं क्वथितं घृतम् ।
एभिर्लेपात् स्वरवणो व्रणा वै स्राविणः शिव ! ॥
शङ्खपुष्पी वचा सोमा ब्राह्मी ब्रह्मसुवर्च्चला ।
अभया च गुड़ूची च अटरूषकवाकुची ॥
एतैरक्षसमैर्भागैर्घृतप्रस्थं विपाचयेत् ॥
कण्टकार्य्या रसं प्रस्थं क्षीरप्रस्थसमन्वितम् ।
एतद्ब्राह्मीघृतं नाम स्मृतिमेधाकरं परम् ॥
अग्निशिखा वचा वासा पिप्पली मधु सैन्धवम् ।
समराज्यप्रयोगेण किन्नरैः सह गीयते ॥
अपामार्गो गुड़ूची च कुष्ठं शतावरी वचा
शङ्खपुष्प्यभया साज्यं विड़ङ्गं भक्षितं समम् ।
त्रिभिर्द्दिनैर्नरं कुर्य्याद्ग्रन्थाष्टशतधारिणम् ॥
अद्भिर्वा पयसाज्येन मासमेकन्तु सेविता ।
वचा कुर्य्यान्नरं प्राज्ञं श्रुतिधारणसंयुतम् ॥